# संविद्

## नियमाः

१. 'संविद्' प्रतित्रिमासं ख्रिस्तमासस्य १५ तारिकायां प्रकाशमाप्स्यति । ते च मासाः अगस्त-नवम्बर-फेब्रुआरी-मे-इति भवन्ति ।

२. ग्राहकत्वं स्वीकुर्वाणस्य शुल्कं पूर्णवर्षस्यैव गण्यते । मध्येवर्षं ग्राहकत्वं भजतोऽपि समग्रवर्षस्यैव तद् भवेत् । तादृशाय ग्राहकाय वर्षस्य पूर्वभागे प्रकाशिता अङ्काः उपलब्धौ सत्यां प्रेषयिष्यन्ते । **वर्षारंभः अगस्तमासाद् गण्यते ।**

३. ग्राहकः स्थानपरिवर्तनं चेत् कुर्यात् ग्राहकसंख्यामुल्लिख्य नवीनं संकेतं निर्दिशेत् कार्यालयाय ।

४. अंके यथासमयमप्राप्ते स्थानीयपत्रालये परिपृच्छ्य कार्यालयं निवेदयेत् ।

५. प्रकाशका लेखका वा संस्कृतमयीं नवीनां कृतिं द्विसंख्याकां प्रेषयेयुः, यदि ते समालोचनप्रकाशं कामयन्ते ।

## शुल्कनियमाः

संविदो वार्षिकं शुल्कं चत्वारि रूप्यकाणि, प्रत्यङ्कं च सपादरूप्यकं भवति ।

## लेखकेभ्यो विज्ञापनम्

लेखका अधोनिर्दिष्टान् तत्संबद्धान्वा विषयानाश्रित्य लेखान् प्रेषयितुं निवेद्यन्ते । ते यथा...

१. भारतीयसंस्कृतिसम्बद्धा– यथा धर्मः, नीतिः, दर्शनम्, आगमाः, कलाः, काव्यानि, पुराणानि, इतिहासः इत्यादि ।

२. मौलिककृतयः– काव्यम्, नाटकम् निबन्धः, चरित्रवर्णनम्, बोधकथा, हास्यलेखः, हास्य-चातुर्यकण्डिका, व्यङ्ग्यलेखः– इत्यादि ।

३. आधुनिकराज्यचर्चा, विज्ञानप्रवाहाः, सामाजिकप्रश्नाः, अर्वाचीनकलाः, आधुनिकानि, प्राच्यानि, पाश्चात्यानि च दर्शनानि इत्यादि ।

४. संस्कृतेतरसाहित्यादुत्तमानां कृतीनां समग्ररूपाः साररूपा वा ललितया सरलया च शैल्या संस्कृतानुवादाः ।

५. प्राचीनाः कृतीः विषयान्वाऽऽश्रित्य विमर्शात्मकाः, संशोधनात्मकाश्च लेखाः ।

- लेखाः पत्रस्यैकस्मिन्नेव पार्श्वे स्पष्टाक्षरैर्लिखिता भवेयुः ।
- लेखप्राप्तेः सूचनाऽचिरात् प्रेषयिष्यते ।
- लेखकेभ्यः तत्कृतेः दश प्रतिकृतयः तत्कृतिसमन्वितोऽङ्कश्च प्रेषयिष्यन्ते ।
- यथासंभवं लेखभाषा लोकभोग्या सरला भवितुमर्हति ।

वर्ष : ३; अंक : १]

# संविद्

[ अगस्त १९६६

[ संस्कृतत्रैमासिकी ]



अनुक्रमः पृष्ठम्

मुद्रणस्थानम्
एसोसिएटेड
एडवर्टाइजर्स एण्ड
प्रिन्टर्स, मुंबई ३४

मुखपत्रचित्रम्
सीताविवाहः

परामर्शसमितिः

१. म. म. परमेश्वरानंद शास्त्री
२. पं. रामचन्द्रशास्त्री
३. पं. अनंतशास्त्री फडके
४. पं. हरिप्रसाद महेता
५. पं. पी. एस. रामशास्त्री









संविद्

आ नो भद्राः ऋतवो यन्तु विश्वतः ।
ऋग्वेद १.८९.१

# तन्मे मनः शिवसंकल्पमस्तु

यज्जाग्रतो दूरमुदैतु दैवं तदु सुप्तस्य तथैवैति ।
दूरंगमं ज्योतिषां ज्योतिरेकं तन्मे मनः शिवसंकल्पमस्तु ।।

येन कर्माण्यपसो मनीषिणो यज्ञे कृण्वन्ति विदथेषु धीराः ।
यदपूर्वं यक्षमन्तः प्रजानां तन्म मनः शिवसंकल्पमस्तु ।।

यत्प्रज्ञानमुत चेतो धृतिश्च यज्ज्योतिरंतरमृतं प्रजासु ।
यस्मान्न ऋते किंचन कर्म क्रियते तन्मे मनः शिवसंकल्पमस्तु ।।

येनेदं भूतं भुवनं भविष्यत्परिगृहीतममृतेन सर्वं ।
येन यज्ञस्तायते सप्तहोता तन्मे मनः शिवसंकल्पमस्तु ।।

यस्मिन्नृचः सामयजूंषि यस्मिन्प्रतिष्ठिता रथनाभाविवाराः ।
यस्मिंश्चित्तंसर्वमोतं प्रजानां तन्मे मनः शिवसंकल्पमस्तु ।।

सुषारथिरश्वानिव यन्मनुष्यान्नेनीयतेऽभीशुभिर्वाजिन इव ।
हृत्प्रतिष्ठं यदजिरं यविष्ठं तन्मे मनः शिवसंकल्पमस्तु ।।

—ऋग्वेदः



# सम्पादकीयम्

## आचार्यदीक्षिताः

गीर्वाणसरस्वत्येकसेवाव्रतिनां, दिवानिशमनितरसाधारणेन भक्तिभावेन शास्त्रविचारैकपरिशीलिनां, सनातनधर्मेऽनन्यनिष्ठानां, लौकिकेषु भावेषूदासीनानां प्रकाण्डपण्डितानां परंपरां विनश्यदवस्थां पश्यतः कस्य नोद्विजत आन्तरं करणम् ।

निगूढानि शास्त्रतत्त्वानि हस्तामलकवत्साक्षात्कुर्वतां भगवत्याः शारदाया वात्सल्यपात्रेष्वन्यतमानामाचार्यवेंकटेश्वरदीक्षितानां भौतिककलेवरत्यागेन सरस्वतीकण्ठाभरणस्य भास्वरं रत्नमेकं गलितं विभावयामः । यद्यद् रत्नमपैति न तत्पूर्तिकरस्यान्यस्योद्भवो दूरादपि विभाव्यत इत्येतद्विशेषतो दुःखाकरोति नो हृदयम् ।

एते खलु चरितार्थनामानो दीक्षिता यथैव वेदेषु तथैव शास्त्रेषु, यथा च लोकव्यवहारेषु तथैव शास्त्रेषु, यथा शास्त्रार्थाकलने तथा तद्वितरणे, यथा लेखने तथैव वाग्मित्त्वेऽप्रतिमा अभूवन् । वैदुष्येण, विनयेन, सौहार्देन, नर्मचातुर्येण, व्यवहारनैपुण्येन, आचारसारल्येन, कथाकौशलेन, विविधभाषाज्ञानसंगत्त्या चैते समेषामादरं प्रीतिञ्च क्षणादेवार्जितुमक्षमन्त । संस्कृतभाषायामनर्गलमुद्भटञ्च तेषां वाग्मित्वं स्मारं स्मारम् अतज्ज्ञोऽपि लोकः तान् साश्रुनेत्रं स्मरति ।

  

दक्षिणदेशे पक्षितीर्थे लब्धजन्मानोऽप्येते भारतस्य सर्वदिक्षु स्वगृह इव सञ्चरन्ति स्म। न कोऽपि प्रातीयत परस्तेभ्यः। प्राचीनाचारेषु दृढं विश्वसन्तोऽपीमे औदार्यैकमूर्तयो नवीनेषु परं सौहार्दं समादरञ्चाजनयन्त। विभिन्नमतिभिर्नानाविधाचारैर्जनैश्चाकुतोभयं संबद्धा अपीमे स्वत्वं न कदाप्यहासिषुरित्येतादृशैर्गुणगणैस्ते प्राचीनानामर्वाचीनानाञ्च सेतुरिवाभूवन्।

विज्ञानविद्यायाः प्राभवमनर्गलं प्रवर्ततेऽद्य सर्वत्र। अभिज्ञातविद्यानां सेवा नाम दुर्व्ययः कालस्य शक्तेश्चेति प्रवादः सर्वतोविसारी विजृम्भते। तत्रापि धनप्रतिष्ठादृष्ट्याऽकिञ्चित्करत्वेन मतायाः संस्कृतविद्यायाः सेवायां न पितराविच्छतः स्वसन्ततिं योजयितुम्। प्रयोजितोऽपि न कोऽप्युत्सहते प्रज्ञापटुस्तत्र प्रवर्तितुम्। अतो दिने दिने कृष्णपक्षशशीव ह्रासमुपैति भगवती संस्कृतविद्या। तपसैव प्रवेश्यानां शास्त्रगूढतत्वानां परिचयः शरन्नदीजलमिव गाधायते नवीनानां पदवीधराणामपि। प्राचीनपद्धताविवार्वाचीनसंस्कृतशिक्षापद्धतावपि सैव स्थितिर्लक्षीभवति। तत्रापि मार्गदर्शकैकशरणानां प्राध्यापकब्रुवाणां विवर्धमाना संख्या स्मारयति नो 'निरस्तपादपे देशे...' इत्याभाणकस्य।

एतादृशीं वैदुष्यदुर्भिक्षस्थितिमवलोकयतां नोऽनेकगुणं भवति दुःखं कूलङ्कषं पाण्डित्यं धरतां नैकेषां विद्वच्छ्रेष्ठानामपगमेन। सूक्ष्मविचारकोषाणां मेधाजडैरलसैश्चाप्रवेश्यानां तर्कजटिलानां विविधशास्त्रालङ्कारभूतानां ग्रन्थानां पाठने क्षमाणां विद्यानिधीनां लाभोऽचिरादेव मृगजलायिष्यते इत्यतः सहेतु बिभेति विद्यैकधना आसन्नान्ता विद्वन्मण्डली। श्रीदीक्षिता दर्शं दर्शं शास्त्रचिन्ताविमुखानाधुनिकान् विद्यार्थिब्रुवानवोचुर्नैकश इदं तथ्यम्। असारयंश्च दुःखोष्माण्यश्रूणि। संस्कृतविद्याया दुरायतिं ध्यायं ध्यायं भूयोभूयो व्यलपन्त कुमारिलभट्टा इव "किं करोमि क्व गच्छामि को वेदानुद्धरिष्यति" इति।

एतादृशेभ्यः सन्निष्ठेभ्यो भगवत्याः सरस्वत्याः प्रियपुत्रेभ्यो धारयति महदृणं संस्कृतसत्ववेदिनी जनता। भारतीयविद्याभवनं संस्कृत-विश्वपरिषच्चानाथमिव पश्यत आत्मानम् उद्भटस्यास्य विद्वन्मूर्धन्य-स्यास्तमनेन। संस्कृतप्रचार-पाठनप्रवृत्तौ को नु खलु तेषां पदव्यां पदं निधातुं क्षमः। तैः सन्धुक्षितां विद्याप्रीतिं, धर्मनिष्ठां, संस्कारशीलतां च पुरःस्थितामिवानिशं विभाव्य तेषां प्रियस्य कर्मणोऽनुष्ठाने बद्धकटयो भूयासुस्तेषां नैकसंख्याकाश्छात्राः, सुहृदः, प्रेमिणश्चेति समाशास्यते। तैः प्रज्ज्वालितः श्रद्धादीपोऽस्खलितं प्रज्ज्वलन्निरस्यतु निराशान्धकारमिति प्रार्थयन्तः संवित्संपादकाः समर्पयन्ति श्रद्धाभारभरितं निवापाञ्जलिम्।



श्लिष्टा क्रिया कस्यचिदात्मसंस्था
संक्रान्तिरन्यस्य विशेषयुक्ता।
यस्योभयं साधु स शिक्षकाणां
धुरि प्रतिष्ठापयितव्य एव॥

—कालिदासः



"अन्याय्यं किमिदं न वेत्सि
सहसा वाग्वज्रदीर्णं मनः"
"जानक्यामपवादशंसनमिदं
नैवोचितं सा सती"
"अस्त्वेतन्ननु लोकशासनमिदं
नार्हत्युपेक्षा"मिति
व्याहारोऽस्तु हिताय सर्वजगतां
सीतावियोगान्तरे॥

—वा. गो. पा.



# विप्रश्रेष्ठा आचार्यदीक्षिताः

## कुलपतिः कनैयालाल मुन्शी

भारतीयविद्याभवनस्य स्तंभ एकः पतितः। पुरुषोत्तममासस्य कृष्णत्रयोदश्यां महाप्रदोषे, अपराह्णे चतुर्घण्टावेलायां माटुंगास्थिते पवित्रे शंकरमठप्रांगणे **पण्डितराजशास्त्ररत्नाकराणामाचार्यदीक्षितानां** प्राणप्रदीपोऽस्तं गतः। आचार्यदीक्षितानां वयः ७३ वर्षात्मकमभूत्। २३ वर्षैस्ते भवनीयसंस्कृतमहाविद्यालयस्य प्रधानाचार्यपदममण्डयन्त। तेषु ब्राह्मणेतिशब्दश्चरितार्थ आसीत्। मृत्युदूताः किल संस्कृतमध्यापयतां तेषां प्राणानपाहरन्।

१९३८ खिस्ताब्दे भवनस्यारंभणे संस्कृतप्रसार उद्देश्येष्वन्यतमत्वेन घोषित आसीत्।

आचार्यजिनविजयमुनयस्तदा भवनस्य नियमनमकुर्वन्। ते संस्कृतविज्ञा अपि विलयं गच्छतो जैनवाङ्मयस्योद्धरणरता अभूवन्। तदा द्वौ संस्कृतविद्वांसौ नियोजितावस्माभिः। सत्यपि वैदुष्ये न तौ संस्कृतस्याधुनिके युगे प्रभावि प्रसरं यथावत्कारयितुं क्षमावभूताम्।

१९४३ खिस्ताब्दे तिरुपतिं विहाय जयपुरे पाठशालाया एकस्याः प्रधानाचार्यपदमुद्वोढुं जिगमिषून् दीक्षितानानयत् मां कश्चित्सुहृद्।

स्वल्पसंभाषणादेवाजानामहं तेषां गभीरं पाण्डित्यं, अकृत्रिमं स्वभावं, निर्दम्भं व्यवहारञ्च। अत्यर्थं प्रभावितोऽभवं तेन। जयपुरगमनेच्छां विहाय भवनस्य प्रारिप्सितस्य संस्कृतमहाविद्यालयस्याध्यक्ष्यं कर्तुं प्रार्थितास्ते विना संकोचमन्वजानन्।

दीक्षिताः खलु शास्त्रेष्वप्रतिहतप्रसरा आसन्। आधुनिके भारते संस्कृतस्योपयोगविषये तेषां दृष्टिर्विशदाऽसंकुला चासीत्। तेषामसाधारणं संस्कृतभाषावाग्मित्वं चैतादृशं मोहनं मन्त्रायितमभवत्।

मुंबापुर्या विचक्षणः श्रोतृगणः संस्कृतं भाषणानुकूला भाषेति न जानाति स्म। श्रीदीक्षिता यदा प्रथममेव संस्कृतेन वक्तुं प्राक्रमन्त तदा उपहासप्रवणा अभूवन् श्रोतारः। किन्तु प्रारंभात् क्षणैरेव दीक्षितानां आधुनिकविचारभरिता सरलसरला, स्पष्टा मधुरा च संस्कृतवाणी तान् विस्मितानकरोत्। न केवलं तैरवगता साऽश्रुतपूर्वा भाषाऽपि तु श्रोत्रैः पीता, भूरि प्रशंसिता चासीत्। अनेकशः धन्यवादतालैः एव प्रतिरुद्धं तद्व्याख्यानं श्रुत्वा संस्कृतभाषा भाषणक्षमेति निर्विवादं स्वीकृता मुंबापुरीयैः।

ततः परं न कदापि भवनसंबंधिनी कापि विशिष्टा सभा दीक्षितानां पुरोवचनैर्वैदिकमङ्गलेन च विना प्रारभ्यत। श्रीदीक्षितैः भवनस्य मुंबादेवीसंस्कृतमहाविद्यालयस्य पुनारचना समपाद्यत। मुंबईविश्वविद्यालये तेऽनुस्नातकवर्गानपाठयन्। नैकेषु विश्वविद्यालयेषु च ते परीक्षका अभूवन्। अथ भवनं ननु विकासश्रेण्या विविधानि सोपानान्युदक्रमत। १९५१ खिस्ताब्दे सोमनाथज्योतिर्लिङ्गस्य पुनः प्रतिष्ठामहोत्सवे पुण्यश्लोकानां तदात्वे राष्ट्रपतीनां श्रीराजेन्द्रप्रसादानामाध्यक्ष्ये भवनायासैः संस्कृतविश्वपरिषदवतारः समभवत्।

संस्कृतविश्वपरिषदियं भवनस्याधिकारिणः सरलशास्त्रीयेति द्विविधाः संस्कृतपरीक्षाश्चालयितुं न्यवेदयत्। परीक्षाविभागस्यास्य प्रामुख्यं श्रीदीक्षितैरुदौह्यत।

संस्कृतविश्वपरिषदः सर्वेष्वधिवेशनेषु निखिलभारतीयेषु वक्तृषु दीक्षिताः कनिष्ठिकाधिष्ठिता अभूवन्। अधिवेशने आङ्ग्लभाषाभाषणानां तैः क्रियमाणः समकालीनः साधु संस्कृतावतारस्तेषामुभयभाषाप्रावीण्यमसाधयत्। भवनेन संस्कृतविश्वपरिषदा च भारते वर्षे प्रचालितस्य संस्कृतप्रचारकार्यस्यैते प्रतीकतामभजन्। संस्कृतविश्वपरिषदः संयुक्तप्रधानमंत्रिपदं तैः सार्थकमक्रियत आचरमनिश्वासम्।

भवनसंचालितायाः संविदाख्यायाः संस्कृतत्रैमासिक्यास्ते संपादकेष्वन्यतमा अभूवन् । ते खलु यथार्थं **विद्याविनयसम्पन्ना** आसन् ।

अन्तिमेषु २३ वर्षेषु शतशश्छात्रास्तेषां चरणसरोजेषूपविश्य शारदामुपासते स्म । तेषु अमेरिकादिदूरदेशस्था अप्यभूवन् । प्राचीनानां गुरूणां पङ्क्तौ प्रविष्टा दीक्षिता अन्तेवासिनां हार्दं प्राविशन् ।

न केवलं भवनेऽपि तु संस्कृतपूतेषु सवषु गृहेषु दीक्षितानां प्राभवमवर्तत । परंपराप्राप्तानां संस्काराणां परिशीलने प्रवृत्तस्य **शंकरमठस्य** तेऽध्यक्षाः प्राणस्वरूपाश्चासन् । तत्संसर्गमाप्तः सर्वो जनस्तेषु स्नेहमवर्षत् ।

ते किल वेदान्तानध्यापयन्, श्रौतयागेष्वाध्वर्यवमभजन्, बहूँश्च संस्कृताध्ययने प्रावर्तयन् । श्रौतसूत्रविद्वत्सु ते मूर्धन्या आसन् ।

स्वयं प्राचीनाचाराग्रहिणोऽपि श्रीदीक्षिताः संस्कृतं सर्वजनसाधारणो निधिरित्यौदार्यशालिनोऽवर्तन्त ।

प्रतिवर्षं ते कांश्चन मासान् भारतप्रदेशेषु भवनीयपरीक्षाः प्रजाप्रियाः कर्तुं पर्यटन्ति स्म । सर्वत्र ते सादरं सत्कृता अभूवन् ।

गते स्वातंत्र्यदिने (१९६५) भारतराष्ट्रपतिभिः तेषां प्रथितवैदुष्यं प्रमाणीकृतमभूत् । येन वयं भृशं नन्दिता अभूम ।

**चतुर्णामपि पीठाधीशानां श्रीशंकराचार्याणां परमां प्रीतिमादरञ्चालभन्त श्रीदीक्षिताः ।**

चरमाः पुरीशंकराचार्याः श्रीभारतीकृष्णतीर्थाः स्वपदानुगामिष्वन्यतमत्वेन दीक्षितानुदटङ्कयन् ।

श्रीदीक्षिताः संस्कृतविभाग इव भवनस्य विभागान्तरेष्वपि तादात्म्यमध्यगंच्छन् । विशिष्टविभागस्याध्यक्षेषु च तेषु सर्वोऽपि भवनपरिवारः समादरप्रीतिमानभवत् ।

  

भवनस्य सर्वासु प्रवृत्तिषु तेषां सहयोग उपदेशश्च प्राप्तावभूताम्। तासु काश्चन तैः संस्कृतस्पर्शशून्या मताः स्युरथापि नवीने युगे तासामुपादेयता तैरङ्गीकृताऽभवत्, विशालहृदयाः नूनं तेऽभूवन्।

केषुचिदन्तिमेषु वर्षेषु दीक्षिताः काश्चन कुटुम्बदुर्घटना अन्वभवन् येन संन्यासाहितमनसोऽप्यभूवन्। नैतद्भवितुमशक्नोत्। **"येऽत्रेष्टास्तेऽमुत्रापि"** इति भवति गुर्जराणामाभाणकः। अत्राभीप्सितेषु दीक्षितेषु परमेश्वरेच्छाऽन्यादृशी बभूव।

उत्तममासीदावयोः पारस्परिकं सौहार्दम्। मृत्योर्दिनद्वयात् प्रागेव रुग्णालयात् प्रतिनिवृत्तस्य मम कुशलप्रश्नाय समागतास्ते। दिनद्वयात्परमेवाहं तैर्विना भविष्यामीति न वितर्कितमभूत्।

**श्रीदीक्षितानां महाप्रयाणं मे सुहृत्तमेष्वन्यतमस्य स्थानं रिक्तीकरोति। न च तस्य पूर्तिर्भविष्यति।**

विद्यार्जनस्य, वैदुष्यस्य, विनयस्य, च दीक्षितैः प्रदर्शितः पन्था भवनेऽस्मिन्नक्षीणो विद्योतिष्यत इति आशासे।

[ अनु. भाईशंकर पुरोहितः ]

*

वासांसि जीर्णानि यथा विहाय
नवानि गृह्णाति नरोऽपराणि।
तथा शरीराणि विहाय जीर्णा–
न्यन्यानि संयाति नवानि देही॥

—गीता

# आचार्य वेङ्कटेश्वर दीक्षिताः

## (जीवनवृत्तम्)

मद्रासराज्यस्य चिंग्लेपुट्विभागे पक्षितीर्थं नाम ग्रामोऽस्ति। तत्र वेदादिशास्त्राध्ययनेन लब्धकीर्तीनां परमपावनानां श्रोत्रियब्राह्मणानां कुटुम्बे श्रीवेङ्कटेश्वरदीक्षितनां जनुरभूत्। तेषां बाल्य एव तत्पितृपादा ब्रह्मश्री अय्यादीक्षिता पञ्चत्वमिताः। ज्येष्ठभ्रातृचरणाः श्रीसुब्रह्मण्यदीक्षिता एव दीक्षितान् वेदानध्यापयामासुः। षोडशवर्षावसितेः पूर्वमेव घनान्तं वेदं ते अध्यगीषत। श्रौतसूत्रवेदभाष्यसंस्कृतसाहित्यानि च तैरधीतानि।

अथ ते मद्रपुरीं (Madras) गत्वा तत्रत्ये मैलापुरसंस्कृतमहाविद्यालये सानुबन्धं संस्कृताध्ययनमकार्षुः। १९१७ तमे क्रिस्ताब्दे मद्रपुरीविश्वविद्यालयाद्वेदान्तशिरोमण्युपाधिं प्रापन्। वेदान्तेन सह मीमांसातर्कव्याकरणानि च तेऽध्यगीषत। १९१९ तमे वर्षे तैः 'मेट्रिक्युलेशन्' परीक्षा पारिता। 'तुलनात्मकभाषाशास्त्रे'ऽपि ते विशेषयोग्यतामापन्। स्वीये द्वाविंशतितमे वर्षे ते तिरुपतिस्थसंस्कृतमहाविद्यालये वेदान्तमीमांसाविभागयोराध्यक्ष्यमङ्गीकृत्य जीविकां प्रारभन्त। तत्रैव वेदान्तमीमांसासाहित्यान्यध्यापयन्तः पञ्चविंशतिवर्षाणि कार्यं निरवहन्। यदायं महाविद्यालयः पौरस्त्यसंस्थाया विभागोऽभवत् तदा तेऽस्य प्रधानाचार्याः समवर्तन्त। १९४५ तमे क्रिस्ताब्दे श्रीमच्चरणानां कामकोटिशङ्कराचार्याणां सम्मत्या, भारतीयविद्याभवनस्याध्यक्षाणां श्रीमुन्शीमहाशयानामपेक्षानुसारेण च भवनीयसंस्कृतमहाविद्यालयस्य प्रधानाचार्यत्वमङ्गचकार्षुः।

मुम्बयीगमनात्पूर्वं त आन्ध्रविश्वविद्यालयीयसंस्कृताध्ययनसभायाः सदस्या अप्यभूवन्। केषुचिद्वर्षेषु मद्रपुरीविश्वविद्यालयीयसंस्कृतपरीक्षासभाया अध्यक्षा आसन्। अन्येषु च विश्वविद्यालयेषु संस्कृतपरीक्षाणां प्रधानपरीक्षका अवर्तन्त।

नैकासु पौरस्त्यपरिषत्सु ते तिरुपतिसंस्कृतमहाविद्यालयस्य प्रतिनिधिरूपेण भागमभजन्। मुम्बयीविश्वविद्यालयेन 'एम्. ए.–पीएच्. डी.' इत्यनयोः कक्ष्ययोरध्यापकत्वेनानुमता आसन्। ते संस्कृतविश्वपरिषदः संयुक्तप्रधानमन्त्रिणः, भवनीयसंस्कृतपत्रिकायाः 'संविदः' सम्पादकेष्वन्यतमा अप्यभूवन्।

संस्कृतविश्वपरिषदः प्रातिनिध्येन ते भारतराज्येषु सञ्चार्यं संस्कृतप्रचाराय प्रायतन्त।

भवनीयानुसन्धानविभागस्य सदस्यास्तेऽभूवन्। तत्र मीमांसानुबन्धी 'अर्थवादादिविचारो' नाम ग्रन्थस्तैः प्राकाशि। तदनु 'तत्वालोक' नामकं वेदान्तग्रन्थं साङ्ग्लभाषानुवादं सम्पादयन्तोऽप्यासन्। अनेकेषु श्रौतयागेषु त आध्वर्यवमुदवहन्। १९४५ तमात् क्रिस्तशतकादारभ्य ते माटुंगास्थशङ्करमठस्याध्यक्ष्यं निरवर्तयन्।

अधोनिर्दिष्टैर्बिरुदैस्तेऽलङ्कृता आसन्––

(१) वेदान्तविशारदः (मद्राससंस्कृतमहाविद्यालयः)
(२) विद्याविनोदः, वेदान्तभूषणम् (भारतीयधर्ममण्डलं, वाराणसी)
(३) उभयमीमांसास्थापकः (त्रिलिङ्गविद्यापीठं, विजयवाड)
(४) उभयमीमांसाप्रवीणः, शास्त्ररत्नाकरः (श्रीमत्कामकोटि-शङ्कराचार्याः)
(५) विद्यावाचस्पतिः (श्रीमद्द्वारकाशङ्कराचार्याः)
(६) महोपाध्यायः (आन्ध्रकवितासमितिः, तिरुपति)
(७) पण्डितराजः (श्रीकोचिन्महाराजः)

१९६५ तमे क्रिस्ताब्दे भारतराष्ट्रपतिभिः सर्वपल्लीराधाकृष्णन्-महाशयैर्योग्यतापत्रदानेन ते सम्मानिता अभूवन्।

एते महानुभावाः १९६६ तमे क्रिस्तवर्षे अगस्टमासस्य १४ तमे दिनाङ्के ब्रह्मभूयं गताः।

# सुरगिरो दुर्भाग्यम्

—विमलशङ्करशास्त्री *

हा वाणि दार्शनिकि ! हन्त निराश्रयासि
मुम्बे ! त्वमप्यहह शोकरता न भासि।
आशीविषोपमितदारुणकालदष्टो
नष्टोऽथ दीक्षितमहोदययोगभ्रष्टः ॥१॥

किं भो ! दैवमशोभनं, दिविषदो रुष्टा, ग्रहा निन्दिताः
देवेन्द्रः किमुताप्रसन्नहृदयः श्रान्तश्च वाचस्पतिः।
कर्मान्धः किमु धर्मराजनृपतिः विष्णुः सुषुप्तश्च किं
कालः प्राणहरोऽथ दीक्षितगुरोः केनापि नो वारितः ? ॥२॥

सौहार्दं शुचिता विचारपटुता विद्याप्रचारोद्यमः
शास्त्रेषु व्यसनं विनम्रवचनं सौजन्यजन्यक्षमा।
धर्मे तत्परता गुणैकरुचिता तर्कप्रियत्वं च तत्
हा हा पण्डितराज ! हे त्वयि गते क्व स्थानमासादयेत् ॥३॥

---

* साहित्याचार्यः, १२९ गुलालवाडी, मुम्बई ४.

*

# अस्मद्गुरुचरणाः श्रीदीक्षिताः



गाडगिल रामचन्द्रः*

अधिकश्रावणमासीयत्रयोदशीतिथौ सायं प्रदोषकाले भारतीयविद्याभवनान्तर्गतमुम्बादेवीसंस्कृतमहाविद्यालयस्य प्रधानाचार्याणामाचार्यदीक्षितमहोदयानामकस्माद् हृद्विकाराघातेनैहलौकिककार्यपरिसमाप्तिसूचकं देहावसानं जातमिति श्रुत्वैव दंदह्यन्ते संस्कृतज्ञानां चेतांसि। तेषां परिचिता जना वज्राघातसदृशीं निधनवार्त्तां श्रुत्वा किंकर्त्तव्यतामूढाश्चाभूवन्।

## दीक्षितानामसाधारणं पाण्डित्यम्

एते गुरुचरणा न केवलमुभयमीमांसापण्डिताः किन्तु तर्कयोगसांख्यादिशास्त्राणामपि बोद्धारो बभूवुः। तेषु शास्त्रेष्वप्रतिहता शेमुषी चासीदेतेषाम्। समये-समये सभासम्मेलनादिनिमित्तेन प्रायः न केवलं भारतवर्षीयाणामेवापि तु पाश्चात्यपण्डितानामप्यासीत् तेषां वैदग्ध्यस्य परिचयः। मीमांसावेदान्तादिविषयाणामध्यापनकार्येऽनन्यसाधारणं पाटवं तेषामध्येतॄणामनुभवपथमगात्। वक्तुमिदं शक्यते यत्तेषामध्यापनपद्धतिर्नाम अपूर्वा काचन पद्धतिरासीत्।

तेषामध्यापने काठिन्यस्य काठिन्यं संकोचस्य संकोचः संदेहस्य संदेहः अनवधानस्यानवधानं विस्मरणस्यापि विस्मरणं दुर्बोधस्यापि दुर्बोध आसीत्। यदा यदा पाठारम्भः तदा तदा विशुद्धायाः वाक्सरितः अखण्डधाराप्रवाहारम्भः। न कदापि स्खलनमनुभूतं केनापि तेषां पाठने। विषयः सुबोधो वा दुर्बोधो भवतु यदा दीक्षिता विवरणमकुर्वन् तदा मन्ये संस्कृतशास्त्राणां पाठनमतीव सरसं सरलं चाभवत्।

*अध्यापकः भवनीयसंस्कृतमहाविद्यालये, मुम्बई ७

## "वाग्देवताविलासाः दीक्षिताः"

प्रायः पाण्डित्यं वक्तृत्वं चाहिनकुलवद् तिष्ठत इत्यस्ति प्रसिद्धिः। परं "वागर्थाविव संपृक्ते पाण्डित्यवक्तृत्वे" दीक्षितानाम्।

यदा तेषां भारती सभायां परिचयमदात् तदा मन्ये जनानां चेतांसि मंत्रमुग्धान्यभवन्। बभूवुः बहवः सन्ति भविष्यन्ति च परं दीक्षिता दीक्षितास्तेषां वक्तृत्वं तु मन्ये अमृतवृष्टिः। शतसंख्याकाः सहस्रसंख्याका बा जनाः भवन्तु विना स्खलनं धाराप्रवाहेण प्रवहमानं तेषां भाषणमानन्दसागरे निमज्जयामास नश्चेतांसि। सरलया संस्कृतभाषया सभासु कृतानि तेषां भाषणानि नितान्तं चेतोहराणि जनानाम्। संस्कृतभाषायां भाषणे तेषामसाधारणं पाटवं यदासीत् संस्कृतज्ञानां संस्कृतभाषणे स्फूर्तिस्थानं तद्।

## वैदिकाः दीक्षिताः

यजुर्वेदान्तर्गततैत्तिरीयशाखीयाः इमे सांगोपांगमष्टविकृतिपूर्वकमजानन् यजुर्वेदम्। प्रतिदिनं कृत्वा वेदस्वाध्यायमात्मनः जन्मसार्थकतामनयन्निमे। वेदज्ञानेन वैदिककर्मविषये गरीयसी तेषां भक्तिः। अग्निष्टोम–चयन–वाजपेयादिविशिष्टानां यज्ञानां संम्पूर्णं ज्ञानं चासीत् तेषाम्।

न केवलं वेदादिज्ञानं किन्तु वेदानुरोधेन कैः ग्रन्थनिर्मितिः कृता इत्यस्मिन् संशोधनेऽपि तेषामासीत् मतिः। समये समये "अध्वरस्येव दक्षिणा" इत्यादि कालीदासीयकाव्यस्थान्युद्धृत्य वाक्यानि ते अकथयन् प्राचीनाः कवयः वेद-विरुद्धं प्रतिपादयितुमकृतसाहसाः। तैः न कुत्रापि वेदस्य निन्दा कृता, इत्यादि साग्रहं ते अवदन्।

## छात्रप्रियाः दीक्षिताः

बहवः कृत्वाध्ययनं साम्प्रतं तत्र तत्र कुर्वन्ति कार्याणि तेषां शिष्याः। तेषां कथं योगक्षेमः प्रचलति आजीविकायाः को व्यवहारः तेषामित्यादि सहृद-यतया ते अपृच्छन् छात्रान्। यावद् शक्यं छात्रेभ्यः सहायं विधेयम्–इति मनसि निधायैव ते व्याहरन् छात्रेषु। निर्बुद्धो वा भवतु सुबुद्धो वा भवतु यथाशक्ति तस्योन्नत्यै कृतादरा इमे आसन्।

## संस्कृतभाषायाः प्रचारकाः दीक्षिताः

संस्कृतविद्यापरिषदः संयुक्तनियामकाः इमे तदा तदा भारतवर्षे आसेतु हिमाचलपर्यन्तं पर्यटनं कृत्वा संस्कृतस्य संस्कृतभाषयैव प्रचारेण संस्कृतसमृद्ध्यै जनानां चेतांसि सचेतनान्यकुर्वन्।

## "आचारः प्रथमो धर्मः" इत्यस्य परिपालकाः दीक्षिताः

बहुधा विद्वांसोऽधीत्याप्याचरणे अकृतादरा भवन्ति। परं नैते तथा। सन्ध्यावन्दनादिनित्यकर्मनिरता शिवपूजाप्रियाः सात्विकाहारनिरता सनातनधर्म-परिपालनबद्धादराः, प्राचीनपरंपराऽविरोधेन नवमतस्वीकारे बद्धादराः, भारतीय-संस्कृतिसंरक्षणे कृतबुद्धयः, धर्मशास्त्रस्योपदेष्टारः, श्रुतिस्मृतिप्रोक्तकर्मोपासकाः अंधश्रद्धारहिता अद्वैतसम्प्रदायानुयायिनः परं अन्यसम्प्रदायानुयायिनां अद्वेष्टारः स्वमतप्रतिपादने दृढनिश्चयाः परं परमताद्वेषिणः तपस्विनश्चासन् दीक्षिताः।

## दीक्षितानां पवित्रं जीवनम्

बाल्यात्प्रभृत्यधीत्य वेदशास्त्राणि सम्पूर्णं चाप्यायुरेते व्यतीरन् धर्माचरणेन। आयुषः चत्वारिंशदब्दाधिकं कालं कृत्वाध्यापनकार्यं कृतार्थतां निन्यिरे स्वायुः पंडितप्रकांडाः दीक्षिताः। आयुषः नैकोऽपि क्षणः तैः व्यर्थतां नीतः। परनिन्दां परित्यज्य परगुणपरमाणून् पर्वतीकृत्य ते अतिष्ठन् मर्त्यलोके। मन्ये तेषां देहपरित्यागघटनां श्रुत्वा कस्य चेतः न विश्वसेत् तेषां पवित्रं जीवनमासीदिति। यतो निर्वाणदिने प्रातरारभ्य माटुंगायां शांकरमठे सायमध्यापनसमये स्वकीयं देहमत्यजन् शिवरात्रिदिने सायमेते—अहो शिवोपासकाः शिवरात्रिदिने स्वीयं देहं परित्यज्य शिवस्वरूपतां प्राप्ता इत्येव मतिरुदेति सर्वेषाम्।

## गुणलुब्धाः स्वयमेव सम्पदः

बहुधा ते छात्रान् तदा तदोपादिशन् सश्रद्धं पठ्यताम् सदाचारेण स्थीयताम् नैव भवेदुपजीविकायाश्चिन्ता इति। तेषां जीवने तस्य प्रत्यय आसीत्। यत् भारतसर्वकारेणापि वर्षाशनं दत्वा सम्मानिता गतवर्षे पण्डितराजा दीक्षिताः मन्ये अतः परं नास्ति जीवितसाफल्यं पण्डितानाम्। तथा च लब्ध्वापि बहून् सम्मानान् गर्वरहिता विनयशालिनश्चासन् गुरुचरणाः। सर्वशास्त्ररत्ना-कराणां विषये नाहं वक्तुं शक्नोम्यधिकम्। यतो हि तेषां वर्णनं नाम 'तितीर्षु-र्दुस्तरं मोहादुडुपेनास्मि सागरम्' इत्येवमेव मादृशानां भवति।

अतश्च परमपूजनीयानां गुरुचरणानां दीक्षितानां गिरः स्मृत्वा स्मृत्वा सश्रद्धं समर्प्यते श्रद्धाञ्जलिः।

★

# दुर्दैवविलसितम्

विमलशङ्कर शास्त्री*

भारतीयपण्डितमण्डलीमण्डनायमानाः संस्कृतसमाजसाहित्यसेवासंलग्नमानसाः शिक्षैकपक्षपातिनः प्राक्तनाधुनिकशिक्षाविचक्षणाः सर्वतन्त्रस्वतन्त्राः पण्डितप्रकाण्डाः परमश्रद्धेयाः स्वनामधन्याः आचार्यप्रवराः आचार्यपण्डितराजादिपदभाजः श्रीवेंकटेश्वरदीक्षितमहाशयाः संसारमसारमिममापातरमणीयं तरणीयमथापि चिराय परिहाय, स्वकीयं बन्धुजनं, शिष्यसमुदायं पण्डितमण्डलीं च शोकाब्धौ निक्षिप्य, देववाणीमिमां मूर्च्छन्तीमवज्ञाय स्वर्गं गता इति वज्रपातसन्निभमिदं वचः श्रुत्वाहमतिव्यलपम् ।

सहसैवाशनिपाताकारं वृत्तान्तमन्तःकरणं मम तथ्येन न स्वीचकार।

किं संस्कृतस्यैवैतानि भागधेयानि सन्ति, यद्यः कोऽपि देववाणीमिमामुन्नतिपथं प्रापयितुं प्रयतते स एव सद्यः यमेन नियतं स्वभवनं नीयत इति कस्य न नाम सचेतसश्चेतो दूयेतेति ।

अचिरादेव देवत्वमनुभवतां तेषां सम्माननां कृत्वाऽस्मदीयसर्वकारेण राष्ट्रपतिभिश्च स्वीयोचितज्ञता प्रकटीकृतेति ज्ञायते सर्वैः। परोक्षरूपेणैतेन मोहमयीस्थविदुषामपि सम्माननाजनीति जायते मनसि। महाविदुषामेषां सम्मानेन तदानीं नश्चेतः अवश्यं प्रासीदत् । परञ्चैतेन श्रीदीक्षितमहोदयानां यशोवृद्धिः समजायत इति तु कथमपि न मनुते मे मनः । ते तु यशसः चरमां सीमामपि लब्धवन्तः अस्माद् बहुमानात्पूर्वमेवेति सर्वविदितम् ।

संस्कृतसाहित्ये प्रथितयशसः प्रसिद्धाः स्वयंसिद्धाश्च त्रयः पण्डितराजाः प्रद्योतन्ते त्र्यम्बकस्य त्रिनेत्राणीव । सप्तदशशताब्दीयः रसगंगाधरकारः जगन्नाथः सर्वप्रथमः । द्वितीयश्च तावत् श्रीकाशीस्थसांगवेद-

---

* १२९ गुलालवाडी, मुम्बई ४.

विद्यालयेशः श्रीराजराजेश्वरशास्त्री द्रविडः। तृतीयश्चायम्। सुरभारती सौभाग्यस्वरूपाणां भारतगौरवास्पदानां त्रयाणामप्येषां पण्डितराजानां पावनानि नामानि न कस्याप्यविदितानि सुरभारतीरतस्य भक्तस्य। सुगृहीतनामधेयानामेषां पुण्यश्लोकानां यशः प्रथितं वर्तते संस्कृतसंसारे।

पण्डितराजेषु श्रीदीक्षितमहोदयेषु वैशिष्ट्यमेतदासीन्महद्, यत् तेषां पाण्डित्यं संस्कृतांग्लभाषाभ्यां प्रवहति स्म।

नैकेषु संस्कृतसाहित्यसदःसु, संस्कृतसाहित्याधिवेशनेषु च नैकशः सभापतिपदमलमक्रियत तैः। तत्र ते धुरन्धरा एव सन्तिष्ठन्ते स्म। संस्कृतविश्वपरिषदस्तु ते प्राणाः एव आसन्नित्यनवरतमनुभूतमस्माभिः।

श्रीमतामेतेषां मेधाशक्तिस्त्वपूर्वैवासीत्। बहूनां ग्रन्थानामुपस्थितिस्तेषां विद्यते स्म। एतादृशः प्रकाण्डः पण्डितः यदि पाश्चात्येषु भवेत्, एतादृशं विशिष्टं कार्यजातमनुतिष्ठेत् चेत् पाश्चात्यसमाजस्तमवश्यं शिरसा समुद्वहेदथासंख्यधनलाभश्चापि तस्य स्यादिति।

अनिर्वेदः श्रियो मूलमिति सिद्धान्तमनुसरन्तः, आचारविचारयोश्च साम्यमनुभवन्तः सनातनधर्मधुरन्धरा इमे न कदापि मिथ्यावादिनोऽवालोक्यन्त। न च तेषां मुखात् कदापि कस्यचिदपि निन्दाऽश्रावि केनापि, ईर्ष्यामात्सर्यदग्धेऽप्यस्मिन्विद्वत्समाजे।

एभिः सदाचारेण, धर्मेण, धैर्येण, क्षमया, विद्यया, विज्ञानेन, प्रतिभया, व्यवहारेण च विशिष्टं स्थानं समपादि समाजे। तेषां मुखात् सर्वथा तर्कशुद्धाः शास्त्रीया एव वाग्धाराः प्रवहन्ति स्म। सर्वथा सर्वदा तेषु संघटते सूक्तिरियम्–

**परिचरितव्याः सन्तः यद्यपि कथयन्ति नो सदुपदेशम्।**
**यास्तेषां सरसकथास्ता एव भवन्ति शास्त्राणि॥**

एतत्सर्वं तेषूपलब्धमासीदेव। न केवलमियं चरित्रचित्रणैव। यः कश्चन श्रद्धया तेषां समाराधनमकरोदवश्यं स उक्तेभ्योऽपि गुणेभ्यो विशेषान्गुणानवालोकयत्तेष्विति मे मतिः।

ये खलु समुपागच्छन् तेषामभिमुखं ते नूनं तेषां विद्यामूलेन विनयेन, सुमधुरेण भाषणेन, अगाधगुणगरिम्णा, अनन्तेन ज्ञानवैभवेन, आदर्शानुकरणीयेन चारित्रेण च तदीया एव समभवन् इत्यनुभूतप्रायम्। स्वदेशाभिमानः, ब्राह्मणत्वस्य गौरवम्, विद्यायाश्च साफल्यं तेषु प्रत्यक्षमिव प्रतिभासते स्मेति।

धन्याः एतादृशाः एते समेषामस्माकं सर्वथा वन्दनीया एव।

ईदृशं महार्घं रत्नं सद्भाग्यवशात् लब्धवन्तः श्रीभारतीयविद्याभवनकुलपतयः श्रीमुनशीमहाभागा अपि अभिनन्दनीया एव।

सुबह्वोः कालादत्र स्थिताः अपि सर्वकारसम्माननान्तरमेव विद्वद्भिस्तेषां बहुमानमकारीति दूयते मे चेतः। निरुक्तकारस्य सूक्तिरियमिदानीं स्मर्तव्या।

**नैषः स्थाणोरपराधः यदेनमन्धो न पश्यति।**

पुरुषापराधः स भवति।

श्रीमतां दीक्षितमहोदयानां वाचां विलासस्तु न कदापि विस्मयत केनापि। अतीव सरलास्ते स्वीयां वाणीमुद्दिश्य पण्डितराजजगन्नाथकवेः सदुक्तिमिमां सगर्वं वक्तुं शक्नुवन्ति स्म :–

**आस्ये धास्यति कस्य लास्यमधुना धन्यस्य कामालस–**
**स्वर्वामाधरमाधुरीमधरयन् वाचां विलासो मम॥**

विशिष्टायाः श्रीदीक्षितव्यक्तेः विशिष्टेन श्रीभारतीयविद्याभवनेन गुणवन्तं संगमं कुर्वन् प्रजापतिः चिराय वाच्यं न गत इति मन्ये।

एतादृशानां महानुभावानां सच्चरित्रं स्मारंस्मारं' तेषामनन्तान्तेवासिनां परिदेवनं श्रावंश्रावं, गीर्वाणवाण्याश्च दीनां दशां दर्शंदर्शं तेषां दीक्षितमहोदयानां चरणकमलेषु निवापांजलिमयीमश्रुधारां जहामि।

प्रार्थयामि च विश्वेशमिष्टदेवं यदस्माकं प्राणा इमे येन प्रकारेण स्वर्गादप्यधिकं सुखं प्राप्नुयुस्तथा भगवन्! दयाशीलेन त्वया सततं यतनीयमिति।

# श्रीदीक्षितेभ्यः श्रद्धांजलिः

विश्वनाथ केशव छत्रे

सुवन्यधन्याः खलु दीक्षितारा गीर्वाणवाचो भवने प्रमुख्याः।
सद्योऽनुवादे पटुता यदीया व्यस्मापयद् विश्वसभासदस्यान् ॥१॥

अंथेरिपुर्यामयंगारमुन्शी–पणिक्कराद्या विदुषां वरेण्याः।
यद्यत्सदस्यांग्लगिरोक्तवन्तस्तत्तद्द्रुतं संस्कृत ऊचुरेते ॥२॥

प्रत्येकवाक्यान्यथवा समग्र–भाषावसाने तदशेषसारम्।
स्मृत्वैव भूयः सुरभाषयाऽहो वक्तुं त्वसामान्यधियैव शक्यम् ॥३॥

अभ्यास ईदृक्पटुतार्जनाय दृढः प्रदीर्घोऽनलसोऽप्यवश्यः।
ददाति लोके सुकलाप्रकर्षो यशः श्रिया सार्धमपीति सत्यम् ॥४॥

कांचिद्विशेषां भजति प्रतिष्ठां सनातनत्वात् खलु देववाणी।
न केवलं भारतवर्षदेशे, देशेषु सर्वेष्वपितु क्षमायाम् ॥५॥

वक्तृत्वमीदृक् सुरवाचि तस्माद् विभूतिमत्वं खलु विश्वपातुः।
दृष्ट्वैव तद् वंदत आदरेण, सद्यः परं धाम सुतुष्ट आत्मा ॥६॥

छत्रेकुलभवः प्रीतो यशोदाकेशवात्मजः
विश्वनाथोऽर्पयत्येनां शास्त्रिभ्यः कवितास्रजम् ॥



# ब्रह्मभूयं गतानां श्रीदीक्षितानां विषये

## शोकसन्देशाः

श्रीदीक्षितानामुपरतेरप्रतीकार्या हानिः संस्कृतलोकस्य सञ्जाता। भगवान् वितरेत्तदात्मने शान्ति शाश्वतीं, युष्मभ्यं शक्तिञ्च।—श्रीद्वारकाजगद्गुरुशङ्कराचार्याः।

श्रीमच्चरणाः सावधारणं ज्ञापयन्ति यत् श्रीदीक्षिताः पुण्यलोकमध्यगमन्निति। धार्मिकसमाजे तेषामभिधानं सर्वकालं स्मर्यमाणं विराजते।

—व्यवस्थापकः, श्रीकाञ्चीजगद्गुरुशङ्कराचार्यमठे।

श्रीदीक्षितानां निधनवार्तां श्रुत्वाहमतीव दूये। संस्कृताध्ययनप्रचारे भवतां ते महान्तः सहाया आसन्। मम गम्भीरा सहानुभूतिर्भवद्भ्यः, तत्कौटुम्बिकेभ्यश्च व्यक्तीक्रियते।

—राष्ट्रपतयो राधाकृष्णन्महाशयाः।

विशंतिवर्षेषु श्रीदीक्षितानहमज्ञासिषम्। तानहं यथा यथा ज्ञातुमारेभे तथा तथा तानधिकृत्य मे गौरवं ममता च समेधामास। भारतीयविद्याभवनस्य सुहृदः, भारतीयसंस्कृत्यनुरागिणश्च तेषामात्यन्तिकेनानवस्थानेन भृशं दूयेरन्। कृपया मे समवेदना तत्कुटुम्बिभ्यः, भारतीयविद्याभवनीयेभ्यश्च निवेद्यताम्।

—श्री एस्. के. पाटिल, केन्द्रीयमन्त्री।

आकस्मिकं दुःखकरञ्च श्रीदीक्षितानां निधनं भारतीयविद्याभवनीय-संस्कृतविभागस्यावश्यं शून्यतामापादयति। अहमपि आत्मीयसुहृदा विप्रयुक्तोऽभवं यो मे सर्वदा ममतामदर्शयत्। कृपया मम, मत्पत्न्याश्च दुःखं सान्त्वना च तत्सुहृद्भ्यः तत्कौटुम्बिकेभ्यश्च ज्ञाप्येताम्।

—श्री जे. एम्. शेलत्, उच्चतमन्यायालयीयन्यायाधीशः।

श्रीवेंकटेश्वरदीक्षितानां निधनवृत्तं श्रुत्वा महद्दुःखमनुभवामि। संस्कृत-समाजस्यैकं विद्वद्रत्नं नष्टमभूत्।

**—प्रा. सुरेन्द्रनाथशास्त्री, उपकुलपतिः, संस्कृतविश्वविद्यालयः, वाराणसी।**

संस्कृतस्य भारतीयसंस्कृतेश्च प्रचारे भारतीयविद्याभवनस्य मुखायमानाः, नैकेषु शास्त्रेषु प्रकाण्डपण्डिताः, संस्कृते दुरनुकरवाग्मिनः, भारतीयसंस्कृतेरनुत्तमतत्त्वानां मूर्तिरूपाः, श्रीवेंकटेश्वरदीक्षिता अनितरसाधारणपुरुषा आसन्। तेषां निधनादहं उत्तमेन मित्रेण विरहितोऽभवम्।

**—पं. अनन्तशास्त्री फडके।**

अस्मत्प्रियतमानां श्रीवेंकटेश्वरदीक्षितानां निधनवार्तां श्रुत्वाघातमिव हृदयस्यान्वभवम्। अस्मद्धार्दिकी समवेदना तत्कौटुम्बिकेभ्यः, मुन्शीदम्पतीभ्यां च निवेदनीया।

**—श्री. टि. सदाशिवम्, 'कल्कि,' मद्रास।**

अस्मत्प्रीतिपात्राणां श्रीदीक्षितानां मरणवृत्तान्तं श्रुत्वातीव दुःखितोऽस्मि। तेषां निधनमात्मीयजननाशमिव मन्ये। तेषां महाप्रस्थानाद् भवनस्यापरिहार्या हानिरेका समजनि। सुदीर्घकालं तान्, भवने तत्कार्याणि च वयं स्मरेम। शान्तिं सदातनीं तदात्मानुभूयादित्याशास्महे।

**—श्री के. बालसुब्रह्मण्यं ऐयर, मद्रास।**

ब्रह्मश्रीदीक्षितानामाकस्मिकं निधनवृत्तान्तं श्रुत्वा भृशं दुःखितोऽस्मि। एतत्तु महती हानिरस्माकम्। कर्तव्यं प्रति तेषामेकाग्रं गौरवं, भवनं प्रति च तादात्म्यं विस्मयावहमासीत्। भगवत इच्छा निर्वर्त्यते। तदात्मा शान्तिमध्युष्यादित्याशासे।

**—श्री एम्. पि. एल्. शास्त्री, बेंगालूरु।**

# श्रीलालबहादुर शास्त्री

(श्रद्धाञ्जलिः)

मंछारामशास्त्री*

दिल्लीपत्तनभूषिते सुकृतभूदेशे प्रधानं पदं
लब्ध्वा ख्यातिमनन्यगां जनगणे प्रापन्मनोः शासनैः ।
प्रत्यर्थिद्विपराजगण्डनिवहे तीक्ष्णं दधौ नाङ्कुशं
हाहा लालबहादुरोऽप्रतिभटः क्वास्तं प्रयातोऽधुना ॥१॥

विद्वद्वरेण्यो जनतावरेण्यो
विद्यावरेण्यो यशसा वरेण्यः ।
कार्यैर्वरेण्यश्चरितैर्वरेण्यः
शास्त्री प्रधानोऽप्यजनिष्ट लोके ॥२॥

काले पुराणे बटुवामनेन
चक्रे जयो दैत्यबलिं निगृह्य ।
मन्त्रिन् ! त्वया वामनविग्रहेण
चक्रे जयः पाकरिपून्निगृह्य ॥३॥

स्वातन्त्र्यसंग्रामपवित्रयज्ञे
कारागृहावासहविःप्रदानैः ।
पूतान्तरात्मा विगतश्च मोहो
मुक्तात्मभावं खलु किं प्रयातः ॥४॥

आपन्निमग्नं भवदीयदेशं
क उद्धरिष्यन् प्रबलो विना त्वाम् ।
विद्वन् ? न किञ्चिद्धृदये स्वकीये
विचारितं चारुविचारवार्धे ? ॥५॥

काश्मीरवार्तां कठिनामसाध्यां
गान्धिं महात्मानमकुण्ठमेधम् ।
प्रष्टुं गतः किं ? सुरराजधाम
मन्त्रिन् ! प्रयातः क्व नु वा प्रलीनः ॥६॥

---

*अध्यापकः, भवानीमसंस्कृतमहाविद्यालये, मुम्बई ७

  

सामर्थ्ययोगेन रिपूंश्च सर्वान्
तेजोविहीनान् तृणतूलतुल्यान्।
व्याधाय सद्भारतपुण्यदेशे
स्तम्भं जयाख्यं निचखान भूमौ ॥७॥

श्रीलाल्बहादूर! वरिष्ठमन्त्रिन्!
धीराग्रगामिन्! रिपुतूलवह्ने!
दस्युञ्च जित्वा वशगञ्च कृत्वा।
शास्त्रीति संज्ञामकरोच्च सार्थाम् ॥८॥

ताश्कन्दयात्रां सुरलोकयात्रां
ताश्कन्दमन्त्रं श्रुतिसिद्धमन्त्रम्।
ताश्कन्दभूमिं सुकृतैकभूमिं
मत्वा गतः किं परमात्मधाम ॥९॥

कीर्त्या भवान् किं सुखदो हिमांशुस्
त्यागेन धर्मैकरतश्च रामः
गाम्भीर्यतो रत्ननिधिस्समुद्रः
शास्त्री क्व यातः क्व नु वा प्रलीनः ॥१०॥

प्रधानपूज्यञ्च जवाहिरं किम्
दीर्घप्रयाणाप्तवियोगहेतोः।
आलिङ्गितुं किं द्युसदान्निवासं
शास्त्रिन्! प्रयातः क्व नु वा प्रलीनः ॥११॥

चीनोऽप्यरातिः प्रबलः प्रपुष्टः
पुनर्युयुत्सुस्सहभारतेन।
तं वञ्चकाग्र्यं भवता विना कः
जङ्घन्यते प्रौढबलैककृष्णः ॥१२॥

श्रीभारतीया जनता स्वकीया
रोरुद्यते शश्वदलं विना त्वाम्।
आगम्य शांतिन्नितरां विधेहि
हा रत्नमग्र्यं क्व गतं क्व नष्टम् ॥१३॥

  

विदेशिनो मन्त्रिजनाश्च तुङ्गाः
कोशीजनाद्या भवतश्च धीमन् ? ।
आकर्ण्य यात्रां सुरमन्त्रिपीठां
रुदन्ति सर्वे सह भारतीयैः ॥१४॥

त्वत्पुत्रजातं जननीं च जायां
सम्बन्धिनोऽन्यान् सुहृदः प्रधानान् ।
ताश्कन्दयात्राच्छलतश्च हित्वा
कुत्र प्रयातः दयसे न किं त्वम् ॥१५॥

पूर्वैः कृतन्नो बहुभिश्च वर्षै-
र्धर्मिन् त्वया तत्कृतमेव मासैः ।
काश्मीरवार्तां गहनां प्रसाध्य
शास्त्री क्व यातः क्व नु वा प्रलीनः ॥१६॥

यस्मिंश्च कस्मिंश्च पवित्रदेशे
ब्रह्मात्मचिन्तैकसमुद्रमग्नः ।
वेदान्तविद्यां सफलां विधाय
प्राप्नोतु शश्वत्परमाञ्च शान्तिम् ॥१७॥

विधिसमयनियोगात् खाद्यसंहारजिह्मे
द्रविणशिथिललोके भारते त्वत्प्रशिष्ये ।
सुरपुरकृतवासः कीर्तिचन्द्रेण कौ त्वं
वितर विजयलक्ष्मीं खाद्यलक्ष्मीं समृद्धिम् ॥१८॥



नान्यथाक्रियते कर्म यत्कृतं जातुचिद्ध्रुवम् ।

—शेक्स्पियर्



न निष्क्रियं दैवमनुग्रहीष्यति ।

—सोफोक्लिस्



# दशावतारस्तोत्रम्

श्रीमच्छङ्करभगवत्पादाः

चलल्लोलकल्लोलकल्लोलिनीश-
स्फुरन्नक्रचक्रातिवक्राम्बुलीनः ।
हतो येन मीनावतारेण शङ्खः
स पायादपायाज्जगद्वासुदेवः ॥१॥

श्रीजयदेवः

प्रलयपयोधिजले धृतवानसि वेदम्
विहितवहित्रचरित्रमखेदम् ।
केशव धृतमीनशरीर
जय जगदीश हरे ॥१॥

धरा निर्झरारातिभारादपारा-
दकूपारनीरातुराधःपतन्ती ।
धृता कूर्मरूपेण पृष्ठोपरिष्ठे
स देवो मुदे वोऽस्तु शेषाङ्गशायी ॥२॥

क्षितिरतिविपुलतरे तव तिष्ठति पृष्ठे
धरणिधरणकिणचक्रगरिष्ठे ।
केशव धृतकच्छपरूप
जय जगदीश हरे ॥२॥

उदग्रे रदाग्रे सगोत्रापि गोत्रा-
स्थिता तस्थुषः केतकाग्रे षडंघ्रेः ।
तनोति श्रियं स श्रियं नस्तनोतु
प्रभुः श्रीवराहावतारो मुरारिः ॥३॥

वसति दशनशिखरे धरणी तव लग्ना
शशिनि कलङ्ककलेव निमग्ना ।
केशव धृतसूकररूप
जय जगदीश हरे ॥३॥

उरोदारणारम्भसंरम्भिभिस्स्वैर-
माविभ्रमाभङ्गुराग्रैर्नखाग्रैः ।
स्वभक्तातिभक्त्याभिव्यक्तोऽथ दारु-
ण्यघौघं सदा वः स हिंस्यान्नृसिंहः ॥४॥

तव करकमलवरे नखमद्भुतशृंगम् ।
दलितहिरण्यकशिपुतनुभृङ्गम् ।
केशव धृतनरहरिरूप
जय जगदीश हरे ॥४॥

छलादाकलय्य त्रिलोकीं बलीयान्
बलिं सम्बबन्ध त्रिलोकीबलीयः।
तनुत्वं दधानां तनुं सन्दधानो
विमोहं मनो वामनो वः स कुर्यात् ॥५॥

चलयसि विक्रमणे बलिमद्भुतवामन
पदनखनीरजनितजनपावन ।
केशव धृतवामनरूप
जय जगदीश हरे ॥५॥

हतक्षत्रियासृक्प्रपानप्रमत्त-
त्रनृत्यत्पिशाचप्रगीतप्रतापः।
धराकारि येनाग्रजन्माग्रहारा
विहारं क्रियान्मानसे वः स रामः ॥६॥

क्षत्रियरुधिरमये जगदपगतपापम्
स्नपयसि पयसि शमितभवतापम्।
केशव धृतभृगुपतिरूप
जय जगदीश हरे ॥६॥

नतग्रीवसुग्रीवसाम्राज्यहेतु-
र्दशग्रीवसंतानसंहारकेतुः।
धनुर्येन भग्नं महत्कामहन्तुः
स मे जानकीजानिरेनांसि हन्तु ॥७॥

वितरसि दिक्षु रणे दिक्पतिकमनीयम्
दशमुखमौलिबलिं रमणीयम्।
केशव धृतरामशरीर
जय जगदीश हरे ॥७॥

घनाद्गोधनं येन गोवर्धनेन
व्यरक्षि प्रतापेन गोवर्धनेन।
हतारातिचक्री रणध्वस्तचक्री
पदध्वस्तचक्री स नः पातु चक्री ॥८॥

वहसि वपुषि विशदे वसनं जलदाभम्
हलहतिभीतिमिलितयमुनाभम्।
केशव धृतहलधररूप
जय जगदीश हरे ॥८॥

धराबद्धपद्मासनस्थांघ्रियष्टि-
र्नियम्यानिलं न्यस्तनासाग्रदृष्टिः।
य आस्ते कलौ योगिनां चक्रवर्ती
स बुद्धः प्रबुद्धोऽस्तु निश्चिन्तवर्ती ॥९॥

निन्दसि यज्ञविधेरहह श्रुतिजातम्
सदयहृदयदर्शितपशुघातम्।
केशव धृतबुद्धशरीर
जय जगदीश हरे ॥९॥

दुरापारसंसारसंहारकारी
भवत्यश्वचारः कृपाणप्रहारी।
मुरारिर्दशाकारधारीह कल्की
करोतु द्विषां ध्वंसनं वः स कल्की ॥१०॥

म्लेच्छनिवहनिधने कलयसि करवालम्
धूमकेतुमिव किमपि करालम्।
केशव धृतकल्किशरीर
जय जगदीश हरे ॥१०॥

ले. रा. दे. कामत**
अनु. आत्माराम शास्त्री*



# सोक्रटीस्

(एकाङ्कं रूपकम्)

[कर्णाटकरूपकरङ्गे प्रथितयशसां 'आर्. डि.' इति प्रसिद्धानां 'सोक्रटीस्' नाम नाटकं अनूद्य संस्कृतसाहित्यरसिकेभ्योऽर्पयन्तः सन्तुष्यामः। गूर्जरभाषायामप्यनूद्याभिनीतं नाटकमिदं सहृदयैरेककण्ठेन प्रशंसितम्। नूतनोऽयमस्माकं प्रयत्नः संस्कृतरूपकरङ्गस्य नूतनतामापादयेदिति विश्वसिमः।—सं.]

[अथेन्स्नगरस्य कारागृहे काचन कक्ष्या यत्र बन्दी **'सोक्रटीस्'** निवसति। कक्ष्याया मध्ये कश्चन मञ्चः। एकतो मृण्मयं जलपात्रम्। यदा यवनिका निस्सरति तदा भगवद्ध्यानमग्नः सोक्रटीस् दृश्यते। निमेषद्वयानन्तरं तच्छिष्यौ **क्रिटोप्लेटोनामधेयौ** प्रविशतः।]

**क्रिटो**—अद्यैव मरणदिनम्। तथापि कथमयं शान्तेन मनसा प्रार्थनायां निमग्नः।

**प्लेटो**—प्रायः— देवतां प्रसादयितुं उपहारं नीत्वा डिलास्देशं गता नौः प्रतिनिवृत्तेति वृत्तान्तो नास्य विदितः स्यात्।

---

** आर्. डि. कामत, केन्नेडि हाउस, गांवदेवी, मुम्बई—७
* अध्यापकः भवनीयसंस्कृतमहाविद्यालये, मुम्बई—७

क्रिटो–कारागारस्य अधिकारिणोऽपि अस्य बन्धमुक्तं जीवनमभिलषन्ति। अत एव एतावत्साहाय्यं तैराचरितम्। किन्तु इतो निगूढं पलायितुं एष नानुमन्येत चेत्?

प्लेटो–लोकसभाया न्यायनिर्णायकैर्यदा स्वापराधमङ्गीकृत्य मरणदण्डादात्मानं मोचयितुं अर्हतीति निर्णयो दत्तः तदा 'सत्याय प्राणानपि समर्पये, न तु अधिकारिभ्य उत्कोचम्' इत्ययमवदत्। एवम्भूतोऽसाविदानीं बन्धनगृहात् पलायितुं कथं अनुनयनीय इति न जाने। तथापि परश्शतानां स्वानुयायिनां प्रार्थनां सफलीकुर्यादिति आशासे।

क्रिटो–अपि च स्वसिद्धान्तस्य सत्यत्वं प्रस्थापयितुं गृहं, कलत्रं, अपत्यानि, मित्राणि, बान्धवान्—किम्बहुना–स्वं जीवितमपि अगणयित्वा अत्रागतः। एतेषु त्रिशद्दिनेषु कारागृहे वसतस्तस्य सर्वमेतत् स्मरणपथमागतं स्यादिति तर्कयामि। भवतु। भगवन्तं स्मृत्वा कार्यं साधयावः।

प्लेटो–कारागृहस्य पृष्ठद्वारेऽश्वाः सज्जास्तिष्ठन्ति। अहं पुनरपि तान् पर्यवेक्ष्य आगमिष्यामि। तावदेषोऽपि सन्नद्धीक्रियताम्। (निष्क्रान्तः)

क्रिटो–(सोक्रटीस्समीपमेत्य) सोक्रटीस्! सोक्रटीस्! उत्तिष्ठ, शीघ्रमुत्तिष्ठ। डिलास्देशात् नौः प्रतिनिवृत्ता। प्रातरेव तव वधो भविष्यति। प्रतिवादिनः तदर्थं व्यवस्थां योजयन्ति। सोक्रटीस्। भवता अवश्यं जीवितव्यम्... अस्माकं कृते। (सोक्रटीस् ध्यानविमुखो न भवति। क्रिटो अपि तं तथावस्थं विलोक्य स्वकार्यं विस्मृत्य ध्यानभङ्ग्योपविशति)

प्लेटो–(सत्वरं प्रविश्य) सोक्रटीस! शीघ्रं–शीघ्रम्। त्वरितमितो गन्तव्यमस्माभिः। प्रभातं नातिदूरे वर्तते। शीघ्रमुत्तिष्ठ सोक्रटीस्! नो

  

चेदस्माकं सर्वोऽपि यत्नो निष्फल एव भविष्यति। यावन्न नागरिकाः कारागारमभितः समवेता भवन्ति तावदितो वयं निर्गच्छामः।

(क्रिटो इङ्गितेन तं तूष्णीमास्थातुमुपदिशति। अगत्यन्तरं प्लेटो मौनमाकलयति। किञ्चित् क्षणमतिवाह्य सोक्रटीस् शनैः शनैः ध्यान-विमुखो भवति। मन्दमन्दं नेत्र उन्मील्य शिष्यौ पश्यति)

**सोक्रटीस्**-क्रिटो ! प्लेटो ! कथमस्मिन्नपररात्रे बन्धनगृहं प्राविशतं युवाम् ? (शनकैरुत्थाय) नूनमयं सुप्रसङ्गः। देहममुमधिवसतो मेऽन्तिमेयं भगवदुपासना। अत्र भवन्तावपि समुपस्थाय महत्पुण्य-मुपार्जितवन्तौ। मया सह जन्मान्तरसम्बन्धं च समघटयताम्।

**प्लेटो**–सोक्रटीस् ! इदानीं वार्तालापाय समयो नावशिष्टः। आवयोर्व-चनं श्रुणोतु भवान्।

**सोक्रटीस्**–(मञ्चम्प्रत्यञ्चन्) अद्य मे वचनानामन्तिमं दिनम्। (उप-विशति) सुहृदौ ! युवाभ्यां सुवृत्तान्तं कथयामि किम् ? डिलास्-देशं गता नौर्ह्यः प्रतिनिवृत्ता किल।

**क्रिटो**–किमियं शुभवार्ता सोक्रटीस् ? इहागताया नावो द्वितीयदिन एव तव मृत्युदण्डो निश्चितः।

**सोक्रटीस्**–(स्मितं कृत्वा) मृत्युर्न दण्डः क्रिटो ! स तु देहिनः कश्चन संस्कारविशेषः (उत्थाय गवाक्षाभिमुखं स्थित्वा) ह्यो रात्रौ आकाशं निरीक्षमाणोऽत्रोपाविशम्। निबिडान्धकारेऽपि आकाशवासीनि नक्षत्राणि महात्मनामात्मविश्वास इव प्रकाशन्ते स्म। नूनं मां दृष्ट्वा आकारयन्ति स्म–सोक्रटीस् ! आयाहि, सुन्दरं–अपारं–बन्धरहितं अस्मद्देशं आयाहि इति। परन्तु किं कुर्याम् ? कथ-मेतद् भूतलं परिष्वज्य वर्तमानं मृत्तिकादेहं अपरित्यज्य तेषामा-तिथ्यमङ्गीकुर्यां इति चिन्तयन्नासम्। तदा रक्षिपुरुष आगत्य अवोचत् नौरुपगतेति। आनन्द एवाभवत्। हन्त ! आगामिनि

प्रभाते मम बन्धमुक्तिर्भविष्यति। बन्धमुक्तिः, सखायौ! बन्धमुक्तिः। ...सुहृदौ! साम्प्रतं युवयोः को वाभिलाषः?

**प्लेटो**–अस्त्यभिलाषः–न केवलमावयोः, किन्तु भवतः सर्वेषामपि अनुयायिनाम्। तं किं पूरयिष्यति भवान्?

**सोक्रटीस्**–सत्यमेव पूरयिष्यामि। उच्यताम्।

**क्रिटो**–तथा चेदावाभ्यां साकं शीघ्रं प्रतिष्ठस्व।

**सोक्रटीस्**–ननु क्व?

**प्लेटो**–बन्धनगृहस्य पृष्ठद्वारेऽश्वाः सज्जास्तिष्ठन्ति। तानाश्रित्य प्रभातात्पूर्वं अथेन्स्नगरस्य सीमानमतिक्रम्य मृत्युदण्डाज्जीवनं रक्षणीयम्।

**सोक्रटीस्**–(सस्मितम्) मत्प्रियमित्रं प्लेटो विचारशील इति तु न मे तिरोहितम्। अहमपि मरणादात्मानं रक्षितुं प्रयत्नवानस्मि। किन्तु अत्र विषयेऽनधिगतार्थो भवान्। अतो नाहं ते वचनमभिनन्दामि। प्लेटो! मृत्युभयाद् धावमानैर्यत्र मृत्युरेव नास्ति तत्र गन्तव्यं भवति खलु!

**क्रिटो**–सोक्रटीस्! मरणात्परं किमस्तीति को वा जानाति? सम्प्रति अथेन्स्देशस्य कृते तव जीवनं महत्वपूर्णं वर्तते। तव सिद्धान्तमनुसरन्तः परश्शतास्तरुणाः सन्ति, सुहृदः सन्ति। तव गृहं, कलत्रं, अपत्यानि–सर्वाण्यपि त्वां विना अनाथानि भवन्ति। एते जना भवन्तं जीवन्तमभिलषन्ति।

**सोक्रटीस्**–मामकानां आशाः पूरयितुं किमहं देशस्य गणतन्त्रं प्रतारयामि? क्रिटो! एतेषु दिनेषु एतदेव शासनमनुपालयन् वर्तमानोऽहं यद्यपि अधुनातनाः शासकाः मे सद्दुद्देश्यपक्षेपात् अनधिगम्य मां दण्डयितु-

मुत्सहन्ते तथापि तान् न वञ्चये। किमिति चेत् देशं प्रति अपारं गौरवं, शासकान् प्रति महतीं च ममतामहं धारयामि।

**प्लेटो**–लोकसभा तु शतशिराः कश्चित् पशुः। अधिकारावलेपादिदानीं स हिंस्र एव संवृत्तः।

**सोक्रटीस्**–नैवम्। ते तु शासका दुर्बलाः। अत एव बलशालिनो मारयितुं समुद्यताः। मम देहपतनात्परं ते तत्त्वं साक्षात्कुर्युः। स्वापराधानवधार्य सुपथमवलम्बेरन्। किन्तु अस्माभिः सर्वथा सर्वदा शुद्धचारित्रैर्भाव्यम्। सुहृदौ! मरणं केवलं देहस्यावसानम्। यश एव देहिन आयुष्यम्।

**क्रिटो**–यदस्माभिः शासनं बहुमानयितव्यमिति तद्युक्तमेव। किन्तु जनानां अज्ञानं निवारयितुं प्रयतमानं भवन्तं दण्डयन्तो ह्येते शासकाः शासनधर्ममेवाभिद्रुह्यन्ति।

**सोक्रटीस्**–सत्यम्। अत एव हि ते दुर्बला उच्यन्ते। क्रिटो! तेषां सिद्धान्तो मरणान्तः। अस्माकं लक्ष्यन्तु आत्मदर्शनम्। 'मरणात्परमपि महदेकं जीवनं विद्यते। आत्मदर्शनं सर्वैः साधनीयम्। आत्मन्येव परमात्मा साक्षात्कर्तव्यः' इति यन्मया प्रतिपादितं तस्य सत्यत्वं प्रस्थापयितुं यदाहं प्रस्थितोऽस्मि तदा किं युवामेव मन्मार्गमुपरुन्धः?

**क्रिटो**–न खलु न खलु! सोक्रटीस्! अपराद्धोऽस्मि। तव तत्वयात्रायां नाहं अमन्तरायो भविष्यामि।

**सोक्रटीस्**–मृदुमनाः क्रिटो शीघ्रमन्वमन्यत। परन्तु विमर्शशीलस्य प्लेटोमित्रस्य मनोऽसमाहितमिव पश्यामि।

**प्लेटो**–कथं वा स्यात् समाधानम्? स्वयं मृत्युरपि बिभीयात् भवद्विचारेभ्यः। देशस्य सुखदुःखयोः कृते भवान् किमर्थं मृत्युमालिङ्गति?

**सोक्रटीस्**–प्लेटो! यो वा देशस्य सुखदुःखे स्वीये न मन्यते तस्य देशे

श्वसितुं को वाधिकारः ?

**प्लेटो**–अयि सोक्रटीस् ! अमृतसत्त्वानि ते वचनानि श्रुत्वा अमृतानन्दमनुभवामि । किन्तु...स्मारं स्मारं ते दुर्दशां स्फुटदिव मे हृदयम् । न त्वं मानवः सोक्रटीस् ! किन्तु देवताविशेषः ।

**सोक्रटीस्**–न कदापि त्वं मां एवं प्रशंससि स्म । प्रायः–अद्य ममान्तिमसत्कारं विरचयसि । भवतु । सुहृदौ ! केषाञ्चिन्मनुष्याणां लघुवृत्तीर्दृष्ट्वा धैर्यं न विधुरयितव्यम् । मनो न शोकेन व्याकुलयितव्यम् । किमिति चेत्–भगवति भवत्यस्माकमपारो विश्वासः । मया साकं हसतं सुहृदौ ! हसतम् । (द्वावपि हसितुं प्रयतेते । किन्तु नयनानि अश्रूणि मुञ्चन्ति । सोक्रटीस् स्ववस्त्राञ्चलेन तानि प्रोञ्छति । तदा नेपथ्ये 'शान्तिपि' सोक्रटीस्महाशयस्य पत्नी प्रहरिभिः सह उच्चैर्विवदते)

**शान्तिपि**–दूरमपसरत, दूरमपसरत । यदि मां रोद्धुं प्रयतेध्वं तर्हि युष्मान् दंशयित्वा रुधिरं पिबामि । अपसरत ।

**सोक्रटीस्**–(स्वगतम्) इयं मम पत्नी, शान्तिपि । अज्ञानजेन महता दुःखेन स्वहृदयभाजनं पूरयित्वा आनयति । तदिदानीं पातुं शान्तमनसा मया सज्जेन भाव्यम् ।

**शान्तिपि**–(सवेगं सावेगञ्च प्रविश्य) हा धिक्, हा धिक् ! किमेतदापतितं जीवितनाथ ! किमेतदापतितम् !

**सोक्रटीस्**–(शान्तगम्भीरेण स्वरेण) शान्तिपे ! अहमस्मि कुशली ननु ।

**शान्तिपि**–अस्ति भवान् कुशली । भवता साकमेतावपि स्तः । किन्तु... किन्तु कदाचिदपि अपत्यानां, पत्न्याः, गृहस्य च स्मृतिर्नाभवद्भवतः । कथं वा स्यात् ? सर्वे नगरवासिनो भवतः स्वजनाः, कौटुम्बिकाः । वयं तु दृष्टमात्रे भवति 'अन्नं ददातु, वस्त्रं ददातु' इति पीडयामः । अतोऽस्मद् दूरं गन्तुमिच्छति भवान् ।

**सोक्रटीस्**—मैवं वादीः शान्तिपे ! यूयं मम पञ्च प्राणाः । अत एव देहेन सह युष्मानपि अवगणितवानस्मि । लोकं प्रकाशयितुं त्यागतैले यूयं वर्तिका इव दाहिताः । अपराद्धोऽस्मि शान्तिपे ! अपराद्धोऽस्मि ।

**शान्तिपि**—मैवं भणतु । नाहं तथा कठोरा । यदा भवान् न्यायालयं नीतस्तदाहं अतर्कयं—लोकोपकारं कुर्वते भवते ते पारितोषिकं वितरेयुरिति । पश्चात् ज्ञातं भवान् कारागृहे बन्धित इति । तदापि आत्मानमहं अरमयं—भवान् गृहापत्यकलत्राणि विस्मृत्य उन्मत्त इव किमपि विवदमानो वीथीषु, विपणिषु सञ्चरन्नासीत् । अतो भवन्तं चिकित्सितुं ते बन्धने निचिक्षिपुः, नचिराद् भवान् प्रकृतिमियात्, मद्गृहजीवनं सुकरं च स्यादिति । अत्रान्तरे ये के वागत्य किमपि किमपि मामवोचन् । किन्तु केनापि न कथितं यद् भवान् वध्यतां गत इति । सर्वैरहं वञ्चिता... सर्वैः... भवतापि ।

**सोक्रटीस्**—न खलु शान्तिपे ! त्वं कदापि मया न वञ्चिता । ... एहि, इतो मत्सविधे ससमाधानमुपविश ।

**शान्तिपि**—समाधानम् ? मज्जीवने किमिदानीमवशिष्टं समाधातुम् ?... अयि निर्दय ! बुद्धिमतां पङ्क्तिषूपविश्य तत्त्वज्ञानं जल्पन् भवान् सहचारिण्यै स्वमरणवृत्तान्तमपि नावादीत् ? हा वाहिताऽस्मि ।

**प्लेटो**—अत्रभवति ! वयमेनं रक्षितुं यतमाना आस्म । अत एव किमपि नोक्तं भवत्यै ।

**शान्तिपि**—अहो महदौदार्यमाचरितम् ! किन्तु एतावत्सु दिनेषु किं कृतं युष्माभिः ?... पूर्वं ये मां दृष्ट्वा दूरमपसरन्ति स्म त एव अद्य मामाकार्याकार्यावदन्—शान्तिपे ! अद्य प्रभाते तव पति हन्यते किल तव पतिः हन्यते किल इति । किमर्थम् ? भवता किमपराद्धम् ? किं वा युष्माभिराचरितम् ?

**सोक्रटीस्**—शान्तिपे ! आत्मपरमात्मनोः, मानवधर्मयोश्च विषये यन्मया तत्त्वं प्रतिपादितं तदेव अपराध इति न्यायसभाया मतमस्ति ।

**शान्तिपि**—के ते मूर्खा अत्रापराधं शङ्कन्ते ? धर्मपरमात्मानावधिकृत्योन्मत्तप्रलापं भवान् करोतीति न्यायोन्मत्तैः तैरपि न ज्ञातम् । एवमुन्मत्तानां मध्ये निरागसो वयं परितपामः । एतावत्पर्यन्तं यद्यपि यथाकालं भवान् गृहं नागच्छति स्म तथापि 'पतिर्मे कुत्रापि जीवन्नास्ते' इति हृदयं मे सान्त्वयन्त्यासम् । अधुना तथाविधेनापि सुखेन विरहितां मां मा करोतु भवान् । अनाथान्यपत्यानि गृहीत्व गृहाद् गृहं अटन्त्याः विधवाया दशां मह्यं मा ददातु भवान् ।

**सोक्रटीस्**—न खलु शान्तिपे ! एवं कदापि न सम्भवेत् । जगदाधारे भगवति विश्वसिहि । परञ्च त्वं विधवा भविष्यसीति मैव चिन्तयः । त्यागेन सह भविष्यन्तं तवाभिनवं विवाहं दृष्ट्वा जनास्त्वां नमस्कुर्युः ।

**शान्तिपि**—के ? जनाः ? जीवन्तं भगवन्तं हत्वा प्रस्तरप्रतिमां नमस्कुर्वाणा जनाः ?...नाहं जाने जनान् । केवलमहं जानामि—मम पतिं, अपत्यानि, गृहम् । एतान्येव मम दैवतानि, भाग्यानि । नातः परं किमपि कांक्षे । त्यागायापि न मेऽस्ति शक्तिः । स्वसिद्धान्तगौरवरक्षायै अस्मन्नाशं मा करोतु भवान् ।

**सोक्रटीस्**—शान्तिपे ! अद्य यावत् कदापि त्वं मया न ताडिता, न चोपालब्धा, न वा निन्दिता । परन्तु इदानीं सर्वमपि दुःखं त्वयि निक्षिप्य गच्छामि । शान्तिपे ! देहे मोहं परित्यज्य आत्मदर्शनाय यतस्व । सत्यपथं बाष्पपङ्किलं मा कुरु । मानवः कीदृशोऽपि महान् स्यात् किन्तु स अल्पायुः । तत्त्वं अल्पमपि चिरायुः । एतत्तत्त्वमाविष्कर्तुमेवाहं सर्वानपि युष्मान् परित्यज्य प्रस्थितोऽस्मि ।

  

**शान्तिपि**–(सोद्वेगं) किं अस्मान् परित्यज्य? त्रिंशद्वर्षेषु भवता सह गृहधर्ममाचरितवतीं मां परित्यज्य? निद्रायामपि 'तात-तात' इति भवन्तमाकारयन्त्यपत्यानि परित्यज्य? अयि कठोरहृदय! किं कुरुषे? स्वगृहं प्रज्वाल्य लोकं प्रकाशयितुं समुद्युक्तो भवान् महातत्त्वज्ञानी खलु! ... मयि स्थितायां भवन्तं हन्तुं को वा उत्सहेत? अहं मृत्युदण्डाद् भवन्तं मोचयिष्यामि ...। (शिष्यौ प्रति) युवां किमवनतशिरसौ तिष्ठथः? किमपि ममोपकुरुतम्। किं युवाममुं जीवन्तं नेच्छथः?

**क्रिटो**–भवति! सत्यमिच्छावः। प्रयत्नश्च महान् विहितः। किन्तु अयमेव नानुमन्यते।

**शान्तिपि**–मूर्खौ युवाम्। भिषजमानेतुं उन्मत्तः किमर्थं प्रष्टव्यः? अहं न्यायाधिकारिणां सकाशं गत्वा क्षमां याचिष्ये। अमुं मारयित्वा तेषां को वा लाभः स्यात्?

**प्लेटो**–सत्यं–अत्रभवति! न्यायाधिकारिषु बहुशो नास्य मरणमभिनन्दन्ति। तेषान्त्वयमभिप्रायो यत् सोक्रटीस्महाशयस्य सिद्धान्तः सम्प्रदायविरुद्धः। अतो न ग्राह्यः। परम्पराप्राप्तं तत्वं त्रिकालाबाधितम्। नैव तत्खण्डनमर्हति। यदि सोक्रटीस् स्वसिद्धान्तं परिजह्यात्तर्हि तेऽमुं विसर्जयेयुः। परन्तु सत्यस्य हिंसां को वा सहेत?

**शान्तिपि**–गुरुरिव शिष्यः। असावप्युन्मत्तः। त्वमप्युन्मत्तः। ते न्यायकञ्चुकधारिणस्तु उन्मत्तानामप्युन्मत्ताः। अस्मिन्नुन्मत्तकोलाहले नाहं नष्टबुद्धिर्भविष्यामि। के वा भवन्तु न्यायाधिकारिणः, येषां वा पुत्रकलत्राणि सन्ति ते मम दुखं प्रतीयुः। तेषां चरणेषु पतित्वा रोदिमि। क्षमां च याचे। ... किं श्रुणोति भवान्? मम कृते बालानां कृते वा गृहमागन्तुं निश्चिनोतु। अहमिदानीमागमि-

ष्यामि। भवन्त गृहं नेष्यामि। (इति प्रस्थिता)

**सोक्रटीस्**–(उच्चैः) शान्तिपे! तिष्ठ तावत्। इत आगम्यताम्–मत्सम्मुखे। (शान्तिपि शनैः शनैः पतिसमीपमागच्छति) (साञ्जलिः) हे मम जीवनसहचरि ! दारिद्र्यान्धकारे भासमानजीवनज्योतिः! अद्य यावन्मया ये येऽपराधा कृताः ते सर्वे त्वया क्षन्तव्याः।

**शान्तिपि**–(पादयोः पतति) मैवं भणतु भवान्। भवता न कोऽप्यपराधो विहितः। कुसुमकोमलं भवतो हृदयं परुषवाक्कण्टकैर्मया बहुधा पीडितम्। तत्क्षम्यतां स्वामिन्! पुनरेवं कदापि न व्यवहरिष्यामि। (उत्थाय) अहमागमिष्यामि। भवान् गृहमागमिष्यति। शपेऽहं, भवान् गृहमागमिष्यति ... (इति मुहुर्मुहुः पश्यन्ती निष्क्रामति)

**सोक्रटीस्**–तस्या इष्टं पूर्णं भवेत्। प्लेटो! इतः कार्यावसितेरनन्तरं मम शरीरं गृहं नेयम्। तत्र बालानां शिरसि मत्करौ निधाय आशीर्दीयताम्–अहमिव तेऽपि सत्याय प्राणान् तृणीकुर्वन्तु–इति। एतदेव मया तेभ्यो दीयमानं पित्र्यं रिक्थम्।

**क्रिटो**–प्रतिहतममङ्गलं सोक्रटीस्! तत्रभवत्याः प्रयत्नः सफलीभवेदिति विश्वसिमि।

**सोक्रटीस्**–नैवं क्रिटो!

**सम्मोहेन कृतं कार्यं साफल्यं नैव गच्छति।**
**ऊषरोप्तं सुबीजञ्च नश्यत्येव न संशयः॥**

पश्यतम्–बन्धनागाराद्बहिः प्रपञ्चोऽयमन्धकारान्मुक्तिं समासादयति। अभिनवोऽयं दिवसबालः प्रत्यूषाङ्के परिलसति। हन्त! सुप्रभातम्! ... प्लेटो! किञ्चिदेवावशिष्टः समयः। अस्यापि सार्थक्यं कथं विधीयताम्? (त्रयोऽप्युपविशन्ति)

  

**प्लेटो**–सोक्रटीस् ! ममास्ति कश्चन सन्देहः ।

**सोक्रटीस्**–कीदृशः ?

**प्लेटो**–सोक्रटीस् ! सत्यसंशोधनपथे कुत एतावती वेदना ?

**सोक्रटीस्**–कष्टसागरमवगाढा आत्ममौक्तिकं लभन्ते । तटमधिष्ठिता देहशुक्तिकां भजन्ते ।

**क्रिटो**–देहात्मनोः कीदृशः सम्बन्धः ?

**सोक्रटीस्**–एकः प्रत्यक्षः, अन्योऽप्रत्यक्षः ।

**क्रिटो**–कथमेतत् ?

**सोक्रटीस्**–वाद्यानि प्रत्यक्षाणि । स्पृष्टमात्राणि तानि ध्वनिमुद्गिरन्ति । स खलु पूर्वमप्रत्यक्षः ! तथा शरीरवाद्ये प्रच्छन्न आत्मध्वनिः ।

**प्लेटो**–मृतेरनन्तरं स ध्वनिः क्व निलीयते ?

**सोक्रटीस्**–अक्षप्रपञ्चाद्बहिर्विश्वशवर्तेर्महातरङ्गेषु निगूहति । पुनश्च वाद्यान्तरमनुप्रविशति । एवं संसारचक्रं परिवर्तते ।

**प्लेटो**–सोक्रटीस् ! एवंविधान् भवद्विचारान् यदि भवानग्रथयिष्यत् तर्हि महाग्रन्था लोकोपकाराय अभविष्यन् । परन्तु भवानेवमकृत्वैव प्रस्थितोऽस्ति । एतदेवास्माकं महददुर्भाग्यम् ।

**सोक्रटीस्**–भवादृशां मदनुयायिनां हृदयान्येव मम पुस्तकानि प्लेटो ! तानि न वाचनीयानि । तानि स्वयं वदन्ति । उक्तोक्त्वा वर्धन्ते ।

(नेपथ्ये तूर्यध्वनिः, जनानां कोलाहलश्च श्रूयते)

**क्रिटो**–(सहसा ससंभ्रममुत्थाय, नेपथ्याभिमुखं विलोक्य) सोक्रटीस् ! मरणशासनं गृहीत्वा मेलेटस् आयातः ।

(सदर्पं पदानि निदधानो मेलेटस् प्रविशति ।)

**सोक्रटीस्**–एहि एहि मित्र ! स्वागतं ते व्याहरामि ।

**मेलेटस्**–(सावलेपम्) सोक्रटीस् ! तवान्तिमः समय आगतः ।

**सोक्रटीस्**–तेन सह भवानप्यागतः । धन्योऽस्मि सखे !

मेलेटस्–तव मरणं देशद्रोहस्य प्रायश्चित्तम् ।

सोक्रटीस्–सामान्यतः सर्वेषामज्ञात एव मृत्युरुपतिष्ठते । मम तु ज्ञात एवाभिवर्तते । एनमुपकारं कृतवतस्तत्राधमर्णोऽस्मि मित्र !

मेलेटस्–नाहं तव मित्रम् । लोकसभासदस्यैः सह त्वमेव वैरमकार्षीः । त इवाहमपि तव शत्रुः ।

सोक्रटीस्–सुदैवान्नमेऽस्ति कोऽपि शत्रुः ।

मेलेटस्–तव सुदैवस्योपहारोऽयं मरणसन्देशः । पठामि किम् ?

सोक्रटीस्–किमत्र मे प्रयोजनम् ? कारागारिकसमक्षं पठतु भवान् ।

मेलेटस्–सोक्रटीस् ! अधुना वापि तवापसिद्धान्तं प्रतिसंहर । व्यर्थं मा म्रियस्व ।

सोक्रटीस्–न मे भवत्यपसिद्धान्तः । न वा मे मरणं व्यर्थं भविष्यति ।

मेलेटस्–मुहुर्मुहुर्घोषामि–आत्मपराजयमङ्गीकुरु । अहं त्वां मरणान्मोचयितुं प्रभविष्णुः ।

सोक्रटीस्–एतावन्ति दिनानि मां जीवितुमनुमतवानसि । तदेव बहुमन्तव्यम् । इतः परं किमपि न वदतु भवान् । कतिपयदिनानां जीवनाय अनेकजन्मनामात्मानं नाहं कलङ्कयामि ।

मेलेटस्–आत्मा...आत्मा...! तवैनं मिथ्याप्रलापं तत्वज्ञानमिति नाहं श्रद्दधे ।

सोक्रटीस्–सत्यम् । भुवि यदि सर्वे मानवास्तत्त्वज्ञानिनो भवेयुस्तर्हि भवलताया बीजमेव नष्टं स्यात् । यदि मेघाभिवृष्टाः सर्वे जलबिन्दवो मुक्ताफलानि स्युः तर्हि सागराणां का गतिः ? सत्यन्धकारे खलु प्रकाशः प्रशस्यते ।

मेलेटस्–प्रकाशः ? एतैरेव मायावचनैस्त्वं क्रान्त्यग्निमेधितवानसि । धार्मिकगुरवःसाम्प्रदायिकलुण्ठका इति तरुणमण्डलेषूपदिष्टवानसि । देवमन्दिराणि धनलुब्धानामापणाः सन्तीत्युन्मार्गगामिनामुत्साहं

  

वर्धितवानसि। राज्याधिकारिण उत्कोचैकपरायणा इति प्रचारयन् गणतन्त्रमुन्मूलयितुं भयानकविप्लवं योजितवानसि।

**सोक्रटीस्**–सम्प्रदायान्तरितानविवेकिनः, धर्मकञ्चुकं परिधाय बम्भ्रम्यणान् उदरभरींश्च दैवाज्ञाप्रेरितोऽहं परीक्षितवान्। अधिकारोऽयं गणतन्त्र-देशस्य सर्वेषामपि जनानामवस्थित एव। निर्भीकविमर्शाः, प्रामाणिकालापाः, धर्म्याचाराश्च राष्ट्रसुखाय कल्पन्ते। अयमेव गणतन्त्रे राष्ट्रियो धर्मः। मेलेटस्! गर्दभाः, अश्वाश्च तत्तद्योग्य-तापरीक्षापूर्वकं हि स्वीक्रियन्ते? एवं स्थिते–राज्यशासकाः तेषा-मर्हतामपरीक्ष्य, बाह्याडम्बरमोहेन नाभिवरणीया इति यन्मयोक्तं तत्र को वापराधः? गणतन्त्रस्य पदेभ्यो विचारस्वातन्त्र्यस्य पन्था यन्मया दर्शितस्तत्र को वापराधः?

**मेलेटस्**–तेषामेव पदानामधस्तात्त्वमिदानीं कुणपो भविष्यसि।

**सोक्रटीस्**–नूतनविचारेभ्यो भीता जना ममेदं शरीरमपेक्षन्ते। गृह्यतां तावत्। मम तु परिधातुं नैकानि सन्ति शरीराणि।

**मेलेटस्**–तर्हि त्वमात्मापराधं नाङ्गीकुरुषे? मरणनिवारणञ्च नाकांक्षसे?

**सोक्रटीस्**–मम मरणनिवारणापेक्षया भवतोऽज्ञाननिवारणमेव दुष्करं मेलेटस्!

**मेलेटस्**–तर्हि सज्जो भव। गृह्यतां–इदं–अन्तिमं-अन्नम्। (कश्चन पुरुष आहारमादाय बन्दिने ददाति)

**सोक्रटीस्**–(तद्गृहीत्वा) आगच्छतं सुहृदौ! इतो निषीदतम्। अद्य यावन्मयैकाकिनैव भुक्तम्। अधुना तु भवन्मुखाभ्यां बुभुक्षामि। (स्वहस्तेनैकैकं कवलं शिष्यौ भोजयति। कथमपि बाष्पावरुद्धकण्ठौ भुञ्जाते) अस्य स्मरणं भवतु युवयोः। सर्वदा स्वस्वभोजनात्पूर्वं एवमेव बुभुक्षितान् भोजयतम्। किमिति चेत्तेषामनाथानां मध्ये ममापि पुत्रकाः स्युः।

प्लेटो–भवतः कलत्रापत्यानि न कदाचिदनाथानि भवेयुः सोक्रटीस् !

सोक्रटीस्–तान्यनाथानि भवेयुरिति नाहं ब्रूये प्लेटो ! यदि मे बाला याचकाः सम्भवेयुस्तथापि सत्यपथं न वर्जयेयुरितीच्छामि । तेषामुपर्यन्नास्यास्य शपथोऽस्तीति ज्ञाप्यताम् । असत्यभीत्या न जीवेयुरिति ब्रूतम् ।

प्लेटो–सत्यं–एवं कुर्वः सोक्रटीस् ! आवाभ्यां तथा प्रयत्यते यथा अथेन्स्नगरस्य सर्वमपि प्रजासार्थं सत्यव्रतदीक्षामङ्गीकुर्यात् । सत्यदर्शनमेव जीवनलक्ष्यमिति जनान् प्रतिबोधयावः । विश्वसितु भवान् ।

सोक्रटीस्–भवतु । मेलेटस् मां प्रतिपालयति ।–मेलेटस् ! किं विलम्बो न भवति ?

मेलेटस्–गृह्यतां वध्याय दीयमानमन्तिमं वस्त्रम् । (अन्यः पुरुषो वस्त्रमादाय ददाति । सोक्रटीस् तद्गृहीत्वा स्वमञ्चे विस्तृणाति । शिष्यौ तदाच्छादनाय चेष्टां कुरुतः । सोक्रटीस् तौ निवारयति)

सोक्रटीस्–अये, अये । सुहृदौ ! अहमाच्छादयामि । युवान्तु शवावरणं कुरुतम् । (शिष्यौ रुदितः)

मेलेटस्–(मरणपत्रं वाचयति) देशस्य, धर्मस्य, दैवानाञ्च द्रोहमुत्पादयन् सोक्रटीस् ! अथेन्स्नगरस्य पञ्चशतन्यायाधिकारिभिस्त्वं हेम्लाक्-नाम्न्या विषलताया रसं पाययित्वा मारणीयः–इति निर्णयः कृतः । बन्दिन् ! अत्र प्रसङ्गे तव किमपि विवक्षितमस्ति ?

सोक्रटीस्–अथेन्स्नगरस्य न्यायाधीशान् सप्रश्रयं प्रणमामि । देहममुं मत्तः पृथक्कुर्वन्तं तं रसं अहमेव पिबामि–भवतामत्र श्रमो मा भूत् ।

मेलेटस्–तवेष्टं पूरयिष्यते । बन्दी सन्नद्धोऽस्ति । विषपात्रमानीयताम् । (कश्चिद् दासो विषपात्रमानयति । शिष्यौ सोक्रटीस्चरणयोः पतित्वा 'सोक्रटीस् ! सोक्रटीस् !' इति विलपतः)

**सोक्रटीस्**–सुहृदौ ! सुहृदौ ! किमेतत् ? मामुद्धर्तुमागच्छतः परमात्मनः पथि अज्ञानकण्टकान् किं विकिरथो युवाम् ? साश्रुमुखौ किं तं स्वागतेनाभिनन्दथः ? नैतद्युक्तं सखायौ ! आत्मभाजने भावपुष्पमानीयताम् । मुखदीपे स्मितज्योतिः प्रकाश्यताम् । ममास्यां महायात्रायां शुभाशंसनं विधीयतां सुहृदौ ! शुभाशंसनं विधीयताम् ।

**शिष्यौ**–तव तत्त्वसिद्धिर्भवतु–देवमानव ! तव तत्त्वसिद्धिर्भवतु । (उभावुत्थायावनतशिरस्कावुपांशु रुदितः)

**मेलेटस्**–अपराधिन् ! दण्डमनुभवितुं सज्जो भव । विषं पीत्वा इतस्ततः सञ्चरेः । मृत्युः क्रमेण सर्वाण्यङ्गानि व्याप्नोति । पश्चात् मञ्चमधिशयीथाः ।

**सोक्रटीस्**–(विषपात्रं हस्तयोर्गृहीत्वा) सुहृदौ ! अधुना वयं साधयामः । युवां जीवनं प्रति, अहञ्च मरणं प्रति ।

**जीवनं मरणञ्चेति देहस्य प्रकृतिद्वयम् ।**
**तत्संस्कारमधिष्ठाय देही भवति संस्कृतः ॥**

भगवन् ! तवायमन्तिमः प्रसादः । अस्य भागं तुभ्यं न दास्ये । प्रत्युत त्वच्चरणयोर्मे प्राणपुष्पाञ्जलिं समर्पये । स्वीकुरु-भगवन् ! स्वीकुरु । (विषं पिबति । इतस्ततो भ्रमन्–)

**त्वमेव शरणं देव ! त्वमेव शरणं मम ।**
**जगद्रूपस्य निर्माता ! रूपकैः सह क्रीडसि ॥**
**गृहाण भगवन् प्रीत्या तवाङ्के मां जगत्पितः ।**
**अनाथोऽहं सुनाथस्त्वं मास्म भूर्विमुखो मम ॥**

(भूमौ पतन् शिष्याभ्यां धार्यते)

**उभौ**–सोक्रटीस् ! सोक्रटीस् !

**सोक्रटीस्**–हस्तपादाभ्यां मुक्तोऽहम्। (मञ्चे शाययतः) किन्तु...हृदयरुधिरकासारे शुद्धश्वेतकमलमेकं समुन्मीलति...श्वेतकमलं समुन्मीलति।...सुहृदौ! डिलास्देवतायै पूर्वं मया मुद्रैका प्रतिज्ञाता। तां समर्पयतम्...।

**प्लेटो**–बाढं, सोक्रटीस्! इतः परं किमस्ति कर्तव्यम्? प्रतिवचनं दीयतां सोक्रटीस्!

**उभौ**–सोक्रटीस्! (इत्युच्चैर्विलपतः)

(क्रिटो शनैः शनैः शवावरणं रचयति। यवनिका पतति)*

*(नाटकस्यास्याभिनेतृभिर्लेखकस्यानुमतिः प्राप्तव्या)



नाहं अथेन्स्नगरस्य नागरिकः, किन्तु सकलस्यापि प्रपञ्चस्य।

—सोक्रटीस्



राज्यशासकास्तत्त्वज्ञानिनो भवेयुः।

—प्लेटो



निःस्पृहो नाधिकारी स्यात् नाकामी मण्डनप्रियः।
नाविदग्धः प्रियं ब्रूयात् स्फुटवक्ता न वञ्चकः॥

# कृतघ्नः कर्णः

—गणेश उमाकांत थिटे*

[ वस्तुतो विवादास्पदे विषयेऽस्मिन् सुविचारिताभिप्रायाः स्वागतार्हा भवन्ति । अतोऽत्र रुचिमादधाना वाचकाः 'सम्पादकेभ्यः पत्रम्' रूपेणानतिविस्तरान् स्वाभिप्रायान् प्रेषयेयुः । यथौचित्यं ते प्रकाशयिष्यन्ते--सं. ]

कर्णस्य व्यक्तित्वम् इति चिरचर्चितः विषयः । महाभारतकारैः विशालबुद्धिभिः व्यासमहर्षिभिः कर्णस्य रूपेण अतीव वैशिष्ट्यपूर्णं जीवनं चित्रितमस्ति । ततश्च नैकैः संस्कृतकविभिः (भासभट्टनारायणादिकैः) अपि कर्णस्य दर्शनं भिन्नभिन्नप्रकारेण कारितम् । अर्वाचीनकाले विविधप्रादेशिकभाषासु अपि कर्णविषये ललितं वैचारिकं च बहु लिखितमस्ति । व्यासमहर्षीणां धर्मविषये आग्रहधारित्वात् अधर्मानुसारिणः कर्णस्य विषये न ममता आसीत् । परमर्वाचीनैः समाजवादिविचारसरणेः स्वीकारात्, उपेक्षितेषु प्राचीनमानवविशेषेषु सहानुभूतिशीलैः विचारवद्भिः कर्णस्य विषये महत्या ममतया लिखितम् अस्ति । अत्र तु कर्णस्य व्यक्तिरेखा पुनः परीक्ष्यते, तस्य कृतघ्नत्वं च सूच्यते ।

एतदर्थं कर्णस्य इन्द्रेण सार्धं यः संवादः तस्मै च तेन यत् कवचकुण्डलदानं कृतं सः प्रसङ्गः वर्ण्यते । इन्द्रस्य अर्जुनः पुत्रः । तेन तस्य हितार्थं इन्द्रः प्रयतनशीलः । कर्णस्य सामर्थ्यम् इन्द्रः सम्यक् जानाति स्म । कर्णः अर्जुनं न हन्यात् अर्जुनस्य च विजयो भवेत् इति आकांक्षा इन्द्रस्य । ततः सः कपटेन ब्राह्मणरूपं धृत्वा कर्णं प्राप्तः ।

* प्रगतसंस्कृताभ्यासकेन्द्रम्, भाण्डारकरसंशोधनमन्दिरम्, पुण्यपत्तनम् ।

तत्प्राक् रात्रौ सूर्यः कर्णं भाविघटनानां सूचनां दातुं प्राप्तः । इन्द्राय दानं यथा कर्णः न कुर्यात् तथा सूर्येण कर्णस्य मनः परिवर्तयितुं यतितम् । परं कर्णेन दानव्रतभङ्गं न करोमि इति उक्ते इन्द्रात् शक्ति गृहाण इति सूर्यः आदिदेश । कर्णः तद् अनुमेने ।

तेन इदं स्पष्टीभवति । नेदं **दानम्** परं **विनिमयः** खलु एषः । कर्णः इन्द्रं वक्ति—

तस्माद् **विनिमयं** कृत्वा कुण्डले वर्म चोत्तरम् ।
हरस्व शक्र कामं मे न दद्यामहमन्यथा ।।

इदमवधेयम् । कर्णः विनिमयं कर्तुं प्रवृत्तः अस्ति । एकत्र दान-विषयकः आग्रहः अपरत्र विनिमयार्थं समुद्यमः इति विरोधः लक्षणीयः खलु । परं तेन अल्पदानस्य "दानत्व"मेव नष्टं भवति ।

अपि च इदं दानमिति स्वीकृतेऽपि नैतत् शुद्धं । "सात्त्विकं" दानम् । भगवद्गीतायां सात्त्विकदानविषये इयमुक्तिः—

दातव्यमिति यद्दानं दीयतेऽनुपकारिणे ।
देशे काले च पात्रे च तद्दानं सात्विकं स्मृतम् ।।

राजसदानविषये च अपरोक्तिः—

यत्तु प्रत्युपकारार्थं फलमुद्दिश्य वा पुनः ।
दीयते च परिक्लिष्टं तद्दानं राजसं स्मृतम् ।।

कर्णस्य दानं "राजसम्" इति वर्णयितुं शक्यम् । कर्णः अहंकारमूढः । बाल्यादारभ्य तस्य या उपेक्षा जाता, अपमानः संजातः तेन तस्य विकृतः अहंकारः पुष्टः । अन्ये मां मानयन्तु इति धिया तेन औदार्यम् आचरितम् । स्वकीये बाहुबले, प्रज्ञाबले च तस्य अत्यधिकः विश्वासः । जनाः मां दानशूरः उदारः इति वर्णयन्तु, आत्मनः कीर्तिः प्रसृता भवतु इति तस्य अभीष्टम् । न तस्य औदार्यं दीनानां दैन्य-

निवारणं भवतु इति हेतुना निर्मितम्। न वा त्रैलोक्ये प्रेमवृष्टिः कर्तुं दानशीलता। पण्डितानां, सज्जनानां, कलावतां सत्कारः कार्यः इति रसिकधियापि तस्य औदार्योद्गमः नास्ति। किं तर्हि स्वकीर्तिः चिरन्तना भवतु इति हेतुना।

कर्णेन इहलोके सुखं नाधिगतम्। यद्यपि सः अङ्गानां राजा आसीत् तथापि तद् राजपदं तस्य सुखाय न अभवत् इति स्पष्टम्। यतः सर्वेऽपि तं सूतं, "राधेयं" मन्यन्ते स्म। भीष्मः द्रोणः तथा च अन्येऽपि बहवः सर्वदा तं सूतपुत्रः इति संबोध्य तस्य दुःखं वर्धयन्ते स्म। तेन राजपदस्थोऽपि अपमानः संभाव्य एव। एतादृश्यां चित्तावस्थायां शारीरिकसुखानां रुचिः नष्टप्राया भवति। एवम् ऐहिकदृष्टया निःसारत्वज्ञाने पारलौकिकदृष्टया तेन विचारः प्रारब्धः। जीवितकाले माऽस्तु मरणोत्तरं स्वकीयं यशः तिष्ठतु इति मत्वा तेन दानशूरत्वमारब्धम्। यदा सूर्यः कर्णं स्वप्ने इन्द्रस्य कपटं कथयति तदा कर्णसूर्ययोः संवादे इदं स्पष्टीभवति। सूर्यः कीर्तेः महत्त्वं न्यूनं कर्तुं प्रयतते—

शरीरस्याविरोधेन प्राणिनां प्राणभृद्वर।
इष्यते यशसः प्राप्तिः कीर्तिश्चाधिदिवे स्थिरा॥

अपरं च—

मृतस्य कीर्त्या किं कार्यं भस्मीभूतस्य देहिनः।
मृतः कीर्तिं न जानीते जीवन् कीर्तिं समश्नुते॥

तथैव—

मृतस्य कीर्तिर्मर्त्यस्य यथा माला गतायुषः।

कर्णः नैतत् स्वीकर्तुं सज्जः। स वदति—

प्राप्स्यामि परमं लोके यशः स्वर्ग्यमनुत्तमम्।
जीवितेनापि मे रक्ष्या कीर्तिस्तद्विद्धि मे व्रतम्॥
पुरुषस्य परे लोके कीर्तिरेव परायणम्।

एवं यशःसंपादनं बद्धादरेण तेन प्रमादः कृतः। स प्रमादो नाम कृतघ्नता।

कर्णः समाजेन धिक्कृतः अपि दुर्योधनेन स्वीकृतः। दुर्योधनेन तस्मै अङ्गदेशराज्यं प्रदाय तस्य मनसः पीडा अल्पप्रमाणेन न्यूनीकृता। कर्णः दुर्योधनमपृच्छत् 'अहं कथमस्य ऋणस्य पारं प्रयामि? किं त्वम् इच्छसि' इति। तदा दुर्योधनः प्रोक्तवान्–

'अत्यन्तं सख्यमिच्छामि' इत्याह तं स सुयोधनः। कर्णेनापि दुर्योधनस्य पक्षः धूर्ततया स्वीकृतः। यतः पाण्डवानां पक्षे महत्त्वं लब्धुमशक्यप्रायमासीत् तस्य कृते। युधिष्ठिरस्य उदात्तगुणसंपन्नता तस्य सविधे नासीत्। विद्यायाः शापितत्वात् शारीरिकसामर्थदृष्टचा अपि भीमार्जुनयोः पुरतः तस्य स्थानं गौणम्। कृष्णसदृशं चतुरं, राजकारणधुरंधरं परित्यज्य न कोऽपि तेन सह मन्त्रविचारमकरिष्यत्। परं दुर्योधनविषये तु भिन्ना स्थितिः। दुर्योधनस्य सर्वेभ्योऽप्यधिकः विश्वासः कर्णे। दुर्योधनः कर्णं वदति–

न किञ्चिद् दुर्लभं तस्य यस्य त्वं पुरुषर्षभ।
सहायश्चानुरक्तश्च मदर्थं च समुद्यतः॥

अपि च दुर्योधनः धृतराष्ट्रं वदति—

नाहं भवति न द्रोणे नाश्वत्थाम्नि न संजये।
न भीष्मे न च काम्बोजे न कृपे न च बाल्हिके॥
सत्यव्रते पुरुमित्रे भूरिश्रवसि वा पुनः।
अन्येषु वा तावकेषु भारं कृत्वा समाह्वयम्।
अहं च तात कर्णश्च रणयज्ञं वितत्य वै
युधिष्ठिरं पशुं कृत्वा दीक्षितो भरतर्षभ।

एतेन कर्णे दुर्योधनस्य कियान् विश्वासः तत् प्रतीयते। कर्णदुर्योधनयोः सख्यमतीव सुबद्धमासीत्। कर्णस्यापि दुर्योधने महान् स्नेहः। यदा कृष्णः कर्णं दुर्योधनात् भित्त्वा पाण्डवानां पक्षमानेतुं कर्णं प्राप्तः तदा कर्णः उवाच—

वधाद् बन्धाद् भयाद्वापि लोभाद्वापि जनार्दन।
अनृतं नोत्सहे कर्तुं धार्तराष्ट्रस्य धीमतः ॥

एतस्मिन्नेव प्रसङ्गे तेन स्वकीयं सत्यं कुलं ज्ञातम्। यदि एतस्मिन् प्रसङ्गे कर्णः पाण्डवान् प्रति अगमिष्यत् तर्हि सः पाण्डवानां ज्येष्ठत्वेन राज्यादिकम् उपभोक्तुं समर्थः अभविष्यत्। परं तेन तत् तथा न कृतम्।

परमेवं दुर्योधनविषये एकनिष्ठतां धारयताऽपि तेन अन्ततः स्वोपयोगिता नाशिता। अहंकारजन्येन औदार्येण तेन कवचकुण्डलप्रदानं कृतम्। दुर्योधनस्य पक्षश्च अनेन विकलः जातः। दुर्योधनसख्यार्थं, तस्य हितार्थं सः यदि इदं न अकरिष्यत् तर्हि तत् सख्यदृष्ट्या युक्तमभविष्यत्। दुर्योधनस्य अपेक्षाभङ्गः तेन कृतः। पुरा भीष्मः द्रोणः च दुर्योधनपक्षे अभवताम्। परं तयोः पतने कर्णं विहाय न दुर्योधनस्य अन्यः सहायः। मूलतः एव भीष्मद्रोणयोः पाण्डवपक्षपातात् दुर्योधनस्य तेष अल्पः एव विश्वासः। कर्णे च संपूर्णः। तथापि कर्णेन कवचकुण्डलप्रदानेन आत्मनाशः दुर्योधननाशः च कृतः।

कर्णस्य विद्यायाः शापितत्वात् यद्यपि सः कदाचित् अर्जुनं हन्तुमसमर्थः अभविष्यत् तथापि कवचकुण्डलानामदाने सुरक्षितः सः अभविष्यत् ततश्च अन्यं कमपि पाण्डवं वा पाण्डवसैन्यं च समूलं नाशयितुं स शक्तः अभविष्यत्। परं सा शक्यताऽपि तेन दूरीकृता। कर्णस्य कवचकुण्डलदानेन एव दुर्योधनस्य सत्यः पराभवः जातः। अन्यथा भीष्मद्रोणाभ्यां पाण्डवानां विनाशः अशक्य एव आसीत्, कर्णेन तु शक्यः, परं तेन कवचकुण्डलप्रदानेन सा शक्यतापि अशक्यतां नीता।

स्वकीयमित्रस्य उपकृतिं विस्मृत्य, तस्य कृते च यद् आत्मकर्तव्यं तद विस्मृत्य कर्णेन अहंकारपरवशेन, कीर्तिलुब्धेन कवचकुण्डले प्रदाय दुर्योधन विषये कृतघ्नता दर्शिता।

# भातु भारतम्

वैद्य रामस्वरूपशास्त्री*

मुनिभिरर्चितं देवपूजितं
श्रुतिभिरूर्जितं शास्त्रचर्चितम्।
प्रकृतिभूषितं ज्ञानसुन्दरं
भुवनवन्दितं भातु भारतम् ॥१॥

सुरसरित्तटं सिन्धुशोभितं
रुचिरपर्वतं कान्तकाननम्।
कृषकसङ्कुलं सस्यश्यामलं
विपुलगोव्रजं भातु भारतम् ॥२॥

विविधत्रोधदैः सूरिभिश्चितं
विमलबुद्धिभिर्ज्ञानिभिर्युतम्।
विततकीर्तिभिः कोविदैः स्तुतं
करुणमानसं भातु भारतम् ॥३॥

हरिनिषेवितं रामपावितं
मुरघरक्षितं व्यासवर्णितम्।
त्रिदशगोगुरुब्राह्मणप्रियं
रचितसष्टकं भातु भारतम् ॥४॥

विदितसंस्कृतं ख्यातकौशलं
विभवमण्डितं त्यागपण्डितम्।
प्रयतमानुषं स्वर्णभूतलं
सकलसुन्दरं भातु भारतम् ॥५॥

निहतपातकं चीनजित्वरं
निरतरूजकं स्वस्य रक्षकम्।
विपुलसम्पदं धर्म्मतत्परं
विदितविक्रमं भातु भारतम् ॥६॥

सरलसूनृतं ग्राम्यवैभवं
परमभावुकं भव्यमन्दिरम्।
अनघकेतुकं स्वीयशासनं
भुवनवन्दितं भातु भारतम् ॥७॥

---

*संपादकः बालसंस्कृतम्, बंबई ७७

# पूर्वं संस्कृतभाषा लोकभाषा आसीत्

आचार्य नवलकिशोर काङ्करः *

सौवर्णी सौपवर्णीयं वाणी विजयतेतराम् ।
प्राणन्ति यत्प्रसादेन संसारे सकला गिरः ॥

नास्त्यत्र अणोरणीयानपि संशीतिलेशो यन्निःशेष-विश्वस्पन्दनानामाद्या शक्तिरिव इयं भगवती सुरभारती समस्तवाङ्मयस्य आधारधरा विराजते। निश्चयेनेयं हि यावत्प्रचलित-भाषमाणासु समस्तासु भाषासु प्रशस्ततमा, महनीय-महिमा, माधुर्यपरमसीमा, स्वर-वर्ण-संस्कृति-संस्कृता, ललितललिता, विश्व-जनीना जननीव सर्वभाषाजननी वर्त्तते। अत एवैषा संस्कृतभाषा प्राचीनेऽनेहसि चिरकालं यावल्लोकभाषासनं समासीना आसीत्। आदिकालिकभाषानु-सन्धानावसरे भाषाशास्त्रिणां दृष्टिः सर्वप्रथमं वैदिकीं भाषामेव स्पृशति। इयं च वैदिकी ब्राह्मीभाषा यदा लोकव्यवहारेण संस्कृता सती जनसाधारण-व्यवहार-मुपागता तदा अस्या नाम संस्कृतत्वात् 'संस्कृतम्' इत्येव लोकेषु प्रसिद्धं जातम्। तदत्र कविना दण्डिना यदुक्तं न तदनध्यक्षं शास्त्रप्रसारजुषां केषाम् अपि विदुषाम् :—

"संस्कृतं नाम दैवी वागन्वाख्याता महर्षिभिः" इति।

### यास्कः

महर्षेर्यास्कस्य समयो विक्रमात् ७०० वर्षपूर्वं मन्यते। असौ हि स्वलिखिते निरुक्तग्रन्थे संस्कृतभाषां लोकभाषामसाधयत्। पूर्वं विभिन्नेषु प्रान्तेषु सांस्कृताः शब्दा विभिन्नैः प्रकारैर्व्यवह्रियन्ते स्मेति स्पष्टमुट्टङ्कितवानसावाचार्यः यथा :—

"शवतिर्गतिकर्मा कम्बोजेष्वेव भाष्यते...विकारमस्य
आर्येषु भाषन्ते शव इति॥" (निरुक्तम्, नैगमकाण्डम् २।२)
"दातिर्लवनार्थे प्राच्येषु, दात्रमुदीच्येषु" (निरुक्तम्, २।२)

अर्थाद्गत्यर्थकोऽयं धातुः काबुलादिम्लेच्छप्रदेशेषु एव प्रकृत्या प्रयुज्यते= शवति गच्छतीत्यर्थः परन्त्वार्येषु कुरुक्षेत्रादिप्रदेशेष्वस्यैव शवतेर्विकारं लोकाः

* संस्कृतविभागाध्यक्षः, पारीककालेज, जयपुरम्।

'शव' इति वदन्ति। एवमेव दातिर्धातुराख्यातस्थो लवनार्थे=छेदनार्थे प्रयुज्यते यथा-तण्डुलान् दाति, यवान् दातीत्यादि। किन्तु अयमेव नामीभूतो धातुरुदीच्येषु हरद्वार-देहरादूनादिषु 'दात्रम्' इति प्रयुज्यते।

एतदतिरिक्तं यास्काचार्येण लोकव्यवहारे प्रचलिता वागेव 'भाषा शब्देन व्यवहृता। यथा-"**भाषायामन्वध्यायच**"इति। एतेन सुनिरूपितं भवति यद् यास्ककाले संस्कृतभाषा व्यावहारिकी भाषा अवर्त्तत।

## पाणिनिः

विक्रमात् पञ्चशतवर्षपूर्वं वर्त्तमानस्य मुनेः पाणिनेः समयेऽपि संस्कृतभाषा सर्वत्र लोकभाषापदमध्यारूढा अविद्यत। यतः पाणिनिरपि यास्क इव शब्दानां तानि रूपान्तराणि प्रादर्शयत्, यानि विभिन्नप्रान्तीया जना विभिन्नप्रकारेण व्यवहरन्ति स्म; अथवा विभिन्ने समाजे विभिन्नेन प्रकारेण लोका उच्चारयन्ति स्म।

सहैव पाणिनिरयं संस्कृतभाषाया ईदृग्विधान् आभाणकादीन् अपि प्रादर्शयत्, येषां भाषायां प्रयोगः केवलं संस्कृतभाषायाः सर्वसाधारण-व्यवहारभाषासत्त्वे एव कर्त्तुं शक्यते स्म। यथाः-जहिस्तम्बोऽयम् (वह वह पुरुष है जो कह रहा है कि ताज की पूलियों को काटो) हस्ताहस्ति (हाथापाई,) दण्डादण्डि (डण्डेबाजी), केशाकेशी (नोचानोची), उदरपूरं भुक्ते (पेट भर खाता है) इत्यादि।

न केवलमेतावन्मात्रमेव, अपितु पाणिनिस्तु '**दूराद्धूते च**' इत्यादिसूत्रैः कस्यचन दूराह्वाने, अभिवादनोत्तरं वाऽऽशीर्वादप्रदाने प्रश्नप्रतिवचने चेत्यादिस्वर-सन्धानविषयेष्वपि प्लुतत्त्वादिविधानमभिधाय प्रचलितव्यवहारजातमुल्लिलेख। इमे नियमा ईदृशाः सन्ति ये देवगिर दैनिकव्यवहारभाषामेव प्रमाणयन्ति।

## कात्यायन-पतञ्जली

वार्त्तिककारः कात्यायनो विक्रमाच्चतुःशतवर्षपूर्वकालिकः कथ्यते, महाभाष्यभाषकः पतञ्जलिश्च विक्रमात् शतद्वयवर्षपूर्वसामयिकः समभिधीयते। कात्यायनकालेऽपि देवभाषा जनभाषा आसीत्। अत एव सः पाणिनेः पश्चाद् ये ये नूतनाः शब्दा आभाणकादयश्च व्यवहारे प्राचलंस्तेषां सर्वेषां कृते स वार्त्तिकं लेखंलेखं तद्व्यवस्थामकार्षीत्। यथा पाणिनेः समये 'अध्वर्यो' इत्यस्य प्रयोगं

लोकाः स्त्रीलिङ्गकल्पनायामेव कुर्वन्ति स्म किन्तु कात्यायन-काले सोऽयं शब्दः महद् 'अरण्य'—स्यार्थेऽपि प्रचलितो जातः। एवमेव सर्वे लोकाः पाणिनेरनेहसि 'यवनानी'—शब्दं यवनस्त्रियाः कृत एव प्रयुञ्जते स्म, परन्तु कात्यायनस्य कालेऽसौ शब्दः 'लिपेः' अर्थे व्यवहारमागच्छत्।

महर्षिः पतञ्जलिरपि संस्कृतशब्दानां तानि रूपाणि प्रादर्शयद् यानि प्रान्तीय-रूपान्तरेषु व्यवहृतानि भवन्ति स्म। पाणिनेः सूत्रस्य (२।४।५६) पातञ्जल-महाभाष्ये नन्वेकस्य वैयाकरणस्य रथवाहकस्य च सुन्दरं कथोपकथनं प्राप्यते, येन स्पष्टं भवति यत्तस्मिन्नपि समये संस्कृतभाषा व्यावहारिकी भाषाऽऽसीत्। यां भाषां खलु सारथि-सदृशा अपि साधारणजना व्यवहरेयुस्तस्याः प्रकारविशेषमपि चावबोधयेयुः, कथं न तया तदा जनसाधारणभाषया अभूयतेति स्वस्थहृद्भि-र्विद्वद्भिः स्वयमेव चिन्तनीयम्।

## महाराजो विक्रमः

यथा श्लाघ्यपराक्रमस्य महाराजविक्रमस्य राज्यकालात् पूर्वं गैर्वाणी वाणी जनवाणी समवर्त्तत, तथैवामुष्य राज्यकालेऽपि सर्वत्रैषा व्यवहारे प्रचलिता-ऽऽसीत्। सुधीशेखरः श्रीराजशेखरः काव्यमीमांसायां लिखितवान्, यदुज्जयिनी-स्वामिनो विक्रमादित्यस्यान्तःपुरे संस्कृतभाषा व्यवह्रियते स्मेति कुतुकिभिर्जि-ज्ञासुभिर्विलोकनीयम् :—'उज्जयिन्यां साहसाङ्को नाम राजा; तेन च संस्कृत-भाषात्मकमन्तःपुर एवेति समानं पूर्वेण"। (काव्यमीमांसा अ० १०) इति।

## बौद्धानां समयः

कीयेनालिख्यत यज्जैनसुधीः सिद्धर्षिः "उपमिति-भव-प्रपञ्चकथायां" मानवजीवनस्य रूपकात्मकवर्णनाय संस्कृतवाचमेवाभिनन्दति स्म, तेनेदमप्यकथ्यत यत्तदानीं शिष्टाः पुरुषाः संस्कृतेतरभाषायै द्रुह्यन्ति स्म। अतएव कथासु श्रूयते, यत् स्वयं बौद्धभिक्षवो भगवन्तं भदन्तं प्रार्थयन्त यत्ते आत्मोपदेशं व्यवहार-प्रचलितायाः संस्कृताया भाषाया माध्यमेनैव भणेयुरिति।

उत्तरभारतीयास्तु बौद्धग्रन्थाः प्रायः संस्कृतभाषा-लिखिता एव लभ्यन्ते। ख्रिष्टीये द्वितीये शतके लब्धजनुर्बौद्धमहाकविर्विश्रुतयशोघोषस्त्वश्वघोषस्तदानीं

बौद्धधर्ममुपदेष्टुं तं प्रचुरं प्रचारयितुं च सर्वत्र 'बुद्धचरितं' 'सौन्दरनन्दं' च काव्यं प्राञ्जलतमायां संस्कृतभाषायामेव व्यरीरचत्।

चैनो यात्री 'ह्यूनसाँग:' स्वभारतयात्रावर्णने स्पष्टमुल्लिलेख यत् खिष्टीये सप्तमशतके बौद्धा बुधाः संस्कृतायामेव गवि मौखिकीं शास्त्रचर्चां कुर्वन्ति स्मेत्यपि नाध्यक्षं विपश्चिदपश्चिमानां पण्डितपुङ्गवानाम्।

एतेन सर्वथा सिद्धं भवति यद् बौद्धानां समयेऽपि संस्कृतभाषा व्यवहार-हीना भाषा नासीत्। सर्वं एवैतां व्यवहरन्ति स्मावगच्छन्ति स्म चेति।

## शिलालेखाः

शिलालेखेषु प्रायः सैव भाषा प्रयुज्यते या जनसाधारण-व्यवहारे रात्रिन्दिवं प्रयुक्ता भवति याञ्च वाचयित्वा लोकाः सहसा तदर्थं सम्यगवगच्छन्ति, अन्यथा तद्वैयर्थ्यापत्तिः शिरसि समापतति। खिष्टीयद्वितीयशतकादर्वाचीनेऽनेहसि यावन्तः शिलालेखा उट्टङ्किताः प्राप्यन्ते तेषामधिकांशतो लेखाः संस्कृत एव लिखिताः सन्ति। 'पाली' भाषामाध्यमेनोत्कीर्णास्तु स्वल्पतरा एव। खिष्टीय-षष्ठ-शतकादवरसमये समुत्कीर्णास्तु सर्वं एव सांस्कृता वर्त्तन्ते। जैनैर्लिखिताः कतिपये त्ववश्यमेव संस्कृतोट्टङ्किता न सन्ति, किन्त्वपवादमात्रमेतत्।

## महाराजभोजस्य समयः

राज्ञो भोजस्य समयस्त्वेकादशशतकीयः स्मर्यते। अस्यापि राज्यकाले संस्कृतभाषैव लोकभाषारूपेण प्रतिष्ठिता प्रतीयते। यतस्तत्कालिका अनेक कथानकाः कथनमिदमेव समर्थयन्ते। तस्मिन् समये कश्चनैकस्तन्तुवायः संस्कृतपद्येन स्वकीयं परिचयमेवमदात्:—

"काव्यं करोमि नहि चारुतरं करोमि
यत्नात् करोमि यदि चारुतरं करोमि।
भूपाल-मौलि-मणि-मण्डित-पादपीठ!
हे साहसाङ्क! कवयामि वयामि यामि॥"

यदि कश्चिदेवं कथयेद्यत्तन्तुवायोऽसौ संस्कृतभाषाध्ययनं विशेषरूपेणाकार्षीत्, तेनैवास्येदृशं वैदुष्यमासीत्तर्हि पाठकैरन्यदेकमुदाहरणं निभालनीयम्।

एकदा महाराजो भोजो निजकुटुम्बभरणाय शिरसि काष्ठभारं धृत्वा गच्छन्तमेकं दीनमानसं मानुषं विलोक्य तमप्राक्षीत् :–"किञ्चित् भारो न बाधति ?" इति। श्रुत्वेदमुक्तवान् सः–'महाराज ! भारोऽयं मां तथा न पीडयति यथा भवता प्रयुक्तो 'बाधते' इत्यस्य स्थाने व्याकरणदृष्टया अशुद्धोऽयं 'बाधति' इति प्रयोगो मां व्यथयति' इति।

अतः स्वयमेव चतुराश्चेतस्विनो विचारयन्तु यद्यस्मिन् काले यस्या देवभाषाया माध्यमेन जनसाधारण-परम्परायामीदृशः शुद्धस्वरूपो वाग्व्यवहारो बोभवीति स्मेत्यवश्यं हि सा सुरभाषा तस्मिन् काले लोकभाषा आसीत्। एतदतिरिक्तं महाकविना बिह्लणेनापि (१०६० ई.) प्रतिपादितं यत्तज्जन्मभूमौ काश्मीरे स्त्रियोऽपि संस्कृतमवगच्छन्ति स्म। अतो निःशङ्कं वक्तुं शक्यते यत्तदानीं नूनं सुरभाषाया अबाधप्रचार आसीदिति।

## नाटकेषु संस्कृतभाषाव्यवहारः

अथ च संस्कृतभाषा-लिखितानि प्राचीनानि प्रायो निखिलान्येव नाटकानि विभिन्नेषूत्सवावसरेषु राज्यसभासु च रंगमञ्चेषु सम्यगभिनीयन्ते स्म। जनताभिः साग्रहमनुरुद्धा नेतारः संस्कृतनाटकानामभिनयं कुर्वन्ति स्मेति तत्तन्नाटकानां प्रस्तावना-पाठकानां नाप्रत्यक्षम्। संस्कृतभाषायां लिखितानां नाटकानामर्थावबोधाभावे तदानन्दानुभूति-शून्यतायाञ्च न कदापि कश्चन तानि द्रष्टुमुत्कण्ठितः स्यात्। संस्कृतनाटकेषु प्राकृतभाषा-प्रयोगस्तु तेषां परम्परानुसारं पात्राणां सामाजिकीं स्थितिमनुरुध्यैव क्रियते स्म। निम्नस्तरीयाः पुरुषाः पात्रविशेषाः साधारणस्त्रियश्च प्राकृतभाषां समुपायुञ्जत। एतदतिरिक्तं सर्वं एवाभिनयकर्त्तारो नेतारो दैवीं वाचं संस्कृतगिरमेव व्यवहरन्ति स्म। स्वमर्यादानुसारं प्राकृतभाषाभाषिणोऽपि नाटकाङ्गिनो जनाः संस्कृतभाषां सम्यगवगच्छन्ति स्मेत्यपि न विस्मर्त्तव्यम्। अन्यथा तदुत्तरप्रदानापत्तिः प्रसज्येत। अतः नाटकेषु संस्कृतभाषाव्यवहारत्वेनापि पूर्वस्मिन् समये संस्कृतभाषायाः सार्वजनिकभाषात्वं निश्चितमेव।

## पाश्चात्यानां मतानुसारं संस्कृतभाषाया लोकभाषात्वम्

विपश्चिदपश्चिमाः पाश्चात्त्या अपि संस्कृतभाषां लोकभाषाममन्यन्तेति मन्यामहे। ग्रियर्सन-कीथप्रभृतयः सुधियः पर्याप्तरूपेण स्थाने स्थाने विषयेऽस्मिन्-

लेखिषुरित्यपि न तिरोहितं तद्विदाम्। डा० राप्सनमहोदयस्य कथनमस्ति यद् "अस्माकमाङ्ग्लानाम् 'अंग्रेजीभाषा' इव भारते तत्रत्यानां संस्कृतभाषा लोकभाषाऽऽसीत्।......प्रारम्भे पश्चिमोत्तरदेशेषु समुत्पन्नानां हिन्दूनामेषा भाषाऽवर्त्तत। हिन्दूधर्मस्य प्रसारेण सहास्या अपि प्रसारो जातः। जैन-बौद्ध-धर्मयोः प्रसरणसमये स्वल्पं कालमस्याः प्रसारो रुद्ध इवाभूत्। किन्तूक्त-धर्मयोः संह्रासेन साकमेव भूयोऽस्याः समुत्थानमभवत्, शनैः शनैश्चैषा सौपवर्णी वाणी समस्तेऽपि भारते लोकभाषापदमगृह्णात्। ...... समयस्य प्रभावाद् विशालभारतस्य राष्ट्रभाषा सत्यप्येषा यावने शासने पुनः स्वस्थानाच्च्युता जाता" इति।

किमन्यत्, लोकभाषात्वकारणादेवैषा भाषा सिंहल-चम्पा-जावा-सुंडा-बोर्निओ-फिलिपाइन्स-चीन-तिब्बत-जापानप्रभृतिदेशेष्वपि गता लोकानां गतागत-कारणात्। यत्राद्यापि अस्याः प्रभावस्तत्तद्भाषायां संस्कृतौ चोपलभ्यते।

इत्येवमादिभिरनल्पैः प्रमाणैरनेकाभिर्युक्तिभिश्चेदमेव सिध्यति यद्विशाल-भारते पूर्वं चिरकालं यावत् संस्कृतभाषा लोकभाषाऽऽसनमासीनाऽवर्त्तत। साम्प्रतमप्यस्यां ते ते सर्व एव गुणा वेविद्यन्ते ये ये लोकभाषात्वकृते समपेक्षिताः सन्तीति शम्।



जयेष्वात्मजयः श्रेष्ठः।

—प्लेटो

मक्षिकाः पीडयन्त्येव निर्भयं तं मृगाधिपम्।

—जर्मन् आभाणकः

क्रौर्यं समुद्गच्छति दुर्बलत्वात्।

—सेनेक

# श्रृंगाररसशेवधिगाथासप्तशती

डा. ए.एम. गोपाणि *

दीपकर्णिसूनुः सातवाहनो नाम कश्चन विद्वान् भूपालः पुरा प्रतिष्ठाननगरे बभूव। तत्सभां गुणाढ्यप्रभृतयो बहवो विद्वांसो मण्डयांचक्रुः ।। प्रतिष्ठानपुरं दक्षिणापथे आसीत्। तदधुना "पैठण" नाम्ना प्रसिद्धम् ।। "कविवत्सलहालाद्युपनामक श्रीसातवाहननरेन्द्रनिर्मिता विविधान्योक्तिमयप्राकृतश्रीगुम्फिता शुचिरसप्रधाना काव्योत्तमा सप्तशत्यवसानमगात्" एवं समाप्तिर्वर्तते डॉक्टरपीटर्सनेन बुन्दीनगराधीशपुस्तकालयादानीते गाथासप्तशतीपुस्तके। वात्स्यायनेन कामसूत्रे स्मृतः कथासरित्सागरवर्णितश्च सातवाहन एक एव ।। तेनैवेयं गाथासप्तशती प्राचीनग्रन्थेभ्यः संकलिता। स च ख्रिस्ताब्दस्य प्रथमशतके बभूवेत्याधुनिकानां विद्वद्वर्याणामभिप्रायः। श्रीपालितकविनैव धनलिप्सया स्वप्रभोर्हालस्य नाम्नायं गाथासप्तशतकग्रन्थः संगृहीतः स्यादित्यप्यनुमीयते रामचरिताख्यमहाकाव्यस्यांतर्गतश्लोकद्वयेन ।। संग्रहरूपेऽस्मिन्ग्रन्थे काश्चन गाथा हालप्रणीता अपि सन्ति ।। एतत्पुस्तकान्तर्गता गाथा ध्वन्यालोके, सरस्वतीकण्ठाभरणे, काव्यप्रकाशे चोदाहृताः सन्ति ।।

अतिप्रत्नस्य मनोहरस्यास्य ग्रन्थस्य निम्नलिखितानां कतिपयगाथानां रसप्रवस्रृतिरानन्दवयतु रसिकजनानिति दृढमाशास्महे ।।

वस्त्रादिमालिन्यं भवतीत्याशङ्क्य काचित् गृहकार्यं न करोति ।।

* एम. ए., पि एच. डि. प्राध्यापकः, भवनीयसोमानीमहाविद्यालये, मुम्बई—७.

तां बोधयितुमन्या एवमाह:—

घरिणीए महाणसकम्मलग्गमसिमलिइएण हत्थेण ।
छित्तं मुहं हसिज्जइ चंदावत्थं गअं पइणा ।।

यस्य यदुचितं कर्म तत् कुर्वाणस्य वैरूप्यमप्यलंकरोति । अनेन कारणेन तस्या मुखं मषीकार्ष्ण्यग्रस्तमपि पत्या उपहासपूर्वकमिन्दुनोपमीयते । अतः कुलीननारीणां गृहकृत्यपराङ्मुखत्वमयोग्यमिति व्यज्यते ।।

प्रस्थानाय प्रवृत्तोऽपि न प्रस्थितोऽयमिति कस्यचिच्छङ्कायां तद्वयस्यः सपरिहासमाह:——

एक्को वि कासासारो ण देइ गंतुं पआहिणवलंतो ।
किं उण बाहाउलिअं लोअणजुअलं पिअअमाए ।।

यदि प्रदक्षिणं गच्छन्नेकोऽपि व्याधाक्रान्तः कृष्णसारो गमननिषेधाय भवति तर्हि कान्तायाः बाष्पाकुलितं कृष्णसारलोचनयुगलं पत्युर्गमननिषेधाय कथं न भवति ? अपि तु भवत्येव ।। कान्तास्नेहनिगडितोऽयं न गच्छतीति भावार्थः ।

विनाशकारणेषु सत्स्वपि सतां विनाशो न भवतीति तर्कं पुरस्कार्यं काचिदसती निजदोषप्रच्छादनार्थमाह:—

चत्तरधरिणी पिअदंसणा अ तरुणी पउत्थपइआ अ ।
असईसपज्जिआ दुग्गआ अ ण हु खंडिअं सीलं ।।

चत्वरगृहिणी चत्वरे राजमार्गे गृहं यस्याः । प्रियदर्शना सुंदरमुखी । प्रोषितभर्तृका । असत्याः दुःशीलवत्याः प्रतिवेशिनी । अत्र चत्वरगृहिणीत्वादेः शीलभङ्गकारणे सत्यपि शीलभङ्गो न जात इति विशेषोक्तिरलंकारः ।।

विमृश्यकारिणं नायकं नायिकाभिमुखं कर्त्तुं दूत्युत्साहवर्धकवचनमाह:—

आरंभंतस्स धुवं लच्छी मरणं वि होइ पुरिसस्स ।
तं मरणमणारंभे वि होइ लच्छी उण ण होई ।।

  

आरभमाणस्यानारभमाणस्य द्वयोरपि काले मरणमत्र। परंतु आरभमाणस्य लक्ष्मीप्राप्तिः संभावना। अनारभमाणस्य तत्प्राप्तिर्न-कदाऽपि भवेत्। तस्मादारंभ एव समीचीनः। तत्किमित्यतिसूक्ष्मप्रेक्षि-तया लक्ष्मीमिवानुसरंतीं तामुपेक्षस इति ध्वनिः॥

चतुराः परनारीप्रेमोपायेन वारयंतीति काऽपि निजसखीमुद्बो-धयितुमाहः—

सालोए व्विअ सूरे घरिणी घरसामिअस्म घेत्तूण।
णेच्छंतस्स वि पाए धुअइ हसंती हसंतस्स॥

सूर्यालोके सत्यर्थादप्रसङ्ग एव चरणप्रक्षालनादन्यनारीसमीप-गमनप्रतिषेधे निजपत्न्या अव्यक्तेच्छां ज्ञात्वा हसतः स्वामिनश्चरणौ पत्नी ज्ञाताव्यक्तेच्छाऽहमनेनेति हसन्ती सती प्रक्षालयतीति गूढार्थः। पत्न्या प्रतिचरणप्रक्षालनान्तरं पतिर्बहिर्न निस्सरतीति सामाजिकप्रथा॥

स्पंदितवामनेत्रा प्रोषितभर्तृका नारीणां वामनेत्रस्फुरणस्य शुभ-सूचकतया प्रियागमनमवधार्य ससंतोषमाह काऽपिः—

फुरिए वामच्छि तुए जइ एहिइ सोपिओज्ज ता सुइरं।
संमीलिअ दाहिणअं तुइ अवि एहं पलोइस्सं॥

हे वामनयन! त्वया स्फुरिते स्पन्दिते सति यदि मम स प्रियोऽद्य समागमिष्यति तर्हि दक्षिणनयनं सम्मील्य तं मे प्रियं त्वयैव द्रक्ष्ये। त्वामेवैकं प्रियदर्शनेन कृतार्थीकरिष्ये न तु दक्षिणनयनमिति सूचितम्॥

प्रियानुनयार्थं दूती कलहान्तरितां कांचिदाहः——

मा कुण पडिवक्खसुहं अणुणेहि पिअं पसाअलोहिल्लं।
अइगहिअगरुअमाणेण पुत्ति! रासिव्व छिज्जिहिसि॥

प्रतिपक्षं सपत्नीजनम्। प्रसादलोभिनं प्रियं। प्रसादाभिलाषिणं प्रियं यदि त्वं नानुनेष्यसि तर्हि तव तत् सपत्नीजनसुखायैव। अपरं च त्वमतिगृहीतगुरुकमानेन धान्यराशिरिव क्षीणा भविष्यसि। धान्यादि-

राशिरुपरि पाषाणादिना नियन्त्रितो यथा क्षयं याति तद्गच्छन्नपि। असौ तव प्रियो मानी। तस्मात् स त्वां नानुनेष्यति। मानं परित्यज। अनुनयामुं तव प्रियम्। न चेत्, त्वं क्षीणा सपत्न्यश्च सुखिन्यो भविष्यन्ति नूनम्॥

कोऽपि कामी काञ्चिद्दुर्लभां नायिकां केनाप्युपायेन प्राप्तुमसमर्थः सन् भिक्षाप्रार्थनमिषेण तदीयं गृहं यातः। तं प्रेक्ष्य सा स्वयमेव भिक्षाप्रदानाय द्वारे आगता। ततो भिक्षाप्रदानाय बहिर्निर्गता वधूः किं विलंबयतीति जिज्ञासुं श्वश्रूं प्रति सपत्नी भिक्षार्थिभिक्षादात्रोः परस्परप्रणयं सासूयं सूचयन्त्याहः—

भिच्छाअरो पेच्छइ णाहिमंडलं सावि तस्स मुहअंदं।
तं चटुअं अ करंकं दोण्ह वि काआ विलुंपंति॥

चटुकं भिक्षादानपात्रं दर्वीम्। करङ्कं भिक्षाधारणपात्रं च काका विलुम्पन्ति। तद्वदन्नं खादन्तीत्यर्थः। द्वयोः परस्परदर्शनमात्रेण प्रणयोदयात् स्तम्भोत्पादनात् काकानां भयरहितत्वं दर्शितम्॥



दृष्ट्वैकासनसंस्थिते प्रियतमे पश्चादुपेत्यादरा-
देकस्या नयने पिधाय विहितक्रीडानुबन्धच्छलः।
ईषद्वक्रितकन्धरः सपुलकः प्रेमोल्लसन्मानसा-
मन्तर्हासलसत्कपोलफलकां धूर्तोऽपरां चुम्बति॥
—अमरुकविः।



द्विजराजमुखी मृगराजकटी
गजराजविराजितमन्दगतिः।
यदि सा दयिता हृदये वसति
क्व जपः क्व तपः क्व समाधिरतिः॥

# संस्कृतभाषाप्रचारः

प्रा. नलिन भट्ट*

अतीते व्याख्याने संस्कृतगिरः प्रचारप्रतीपविघ्नवृन्दस्य प्रदर्शनं यथाभानमस्माभिः कृतम्। विदित्वा विघ्नविलसितं विमर्दकविनियोगस्य शक्यत्वात्। अथाऽस्मिन्व्याख्याने कैरुपायैर्विगतचेतनेवेयं भाषाऽमृता, पुनर्लब्धप्राणोच्छ्वसन्ती स्यात्तच्चिन्तयामः। तत्र–

(१) राष्ट्रमुक्तिः प्रथमोपायः प्रधानः।
(२) भारतीय नृपतिश्रेष्ठचादीनामाश्रयप्राप्तिः द्वितीयः।
(३) संस्कृतभाषामहिम्नः प्रचारकार्यम्।
(४) सर्वासां पाठशालानां केन्द्रीकरणम्।
(५) सर्वेभ्यः मनुपुत्रेभ्यः अध्ययनाधिकारदानम्।
(६) एकस्य महाविद्यापीठस्य स्थापनम्।
(७) आबालवृद्धसर्वेषां नियमेन संस्कृतस्य पठनम्।
(८) अभ्यासक्रमे आंग्लभाषादीनां गौणत्वसम्पादनम्।
(९) सामुदायिकास्मितायाा जागरणम्।
(१०) संस्कृते लेखनभाषणादीनामाग्रहः।
(११) विद्यातपोयुक्तानां ब्राह्मणानां सर्जनम्।
(१२) भाषाप्रेम्णः उत्पादनम्–इत्याद्युपायः।

संस्कृतभाषोद्धारे नैका व्यक्तिः समर्था। सामुदायिकसाहाय्याभावेऽस्या उन्नतिरशक्या। प्राचीने काले भारतीभाषाया अद्भुतरूपे विकासे राज्ञां आसीदाश्रयः। ते च पण्डितान् संस्कृतभाषाभिज्ञान् यज्ञादिव्याजेनापुष्यन्। अददन् ते उत्साहं पंडितेभ्यः। जीवननिर्वाहनिश्चिन्ताः पण्डिताः आत्मनः सकलां शक्तिं विद्यावितरणे, प्रचारे, पठने, विकासे केन्द्रितामुकुर्वन्। सम्प्रति तु

* एम्. ए., प्राध्यापकः, संस्कृतविभागे भवनीये कलामहाविद्यालये।

  

विपरीतैव स्थितिः। आश्रयाभावात् सविद्या अपि पण्डिताः कृपणां स्थितिमनुभवन्ति। जीवनयात्रां यथाकथञ्चित् निर्वहन्त इमे कथं कटिबद्धाः स्युः राष्ट्रहितोद्योगे?। न हि चार्वाकं अतोष्य शंकरः प्रसीदति। अतः राजभिः श्रेष्ठिभिः चास्यां दिशि सक्रियं किञ्चित् कर्त्तव्यम्। लक्ष्मीश्चेत् सरस्वतीं न पुष्णाति कोऽर्थस्तया जडया लक्ष्म्या। विद्या हि पारम्पर्येण लक्ष्मीजननी। सुता चेन्मातरं गरलं दद्यात्स्वयमप्यात्मघातमेव करिष्यति। न हि विद्याविमुखा लब्धाया अपि लक्ष्म्याः परिपालने शक्ताः। अतः श्रीसरस्वत्योः परस्परसंबन्धं वीक्ष्य लक्ष्मीनन्दनैरत्र विधायकं किञ्चित् विधेयम्।

किञ्च—संस्कृतभाषायाः महिम्नः प्रचारोऽपि कार्यः। जनता तावत् सम्प्रति संस्कृतमहिम्नः अज्ञा एव वर्त्तते। नहि हालिकस्य संस्कृतपरिचयोऽस्ति। कृषीवलप्रधानो हि देशः। अतः यथा सर्वोऽपि लोकः एतद्भाषाभिज्ञस्यात्तथा करणीयम्। व्याख्यानादिभिः इदं शक्यम्। नियोज्या व्याख्यातारः चतुर्ष्वपि दिक्षु। तैश्च प्रबुद्धा जनता स्वयमेवाश्लिष्यति संस्कृतम्।

अस्मदीयजनतायां तावत् व्यवस्थाशक्तेरभाव एव विद्यते। योजनाया व्यवस्थायाश्चाभावात् कृतमपि सामुदायिकं कर्म न यथेष्टं फलं सूते। 'संघेशक्तिः कलौ युगे' इत्यस्याः सूक्तेरर्थो हृदि चिन्तनीयः। संस्कृताध्ययने अतिव्ययो भवति। यद्यर्थव्ययो व्यवस्थितयोजनापूर्वकः स्यात्तदा सुन्दरं फलं प्राप्स्यामः। एवंकरणाय सर्वासां पाठशालानां केन्द्रीकरणं योग्यतमम्। यावान् व्ययः पाठशालानां स्थितये भवति तावति व्यर्थयोजनापूर्वके व्यवस्थिते, महान्तो विद्यालया अपि संचालयिष्यन्ते। यदि सर्वासां शालानां केन्द्रीकरणं स्यात् व्यवस्थितमध्ययनमेकरूपं सर्वत्र भवेत्। निखिलस्यापिदेशस्य शिक्षणमेकरूपं संहतये महोपकारावहम्। एकैव भाषैकैवसभ्यतैकैवास्माकं संस्कृतिः। शालासु सर्वत्रैकरूपस्याभ्यासस्यावश्यकताऽनुभवात् ज्ञास्यते। आहिमालयात् आकन्याकुमारि, आछारिकाया आब्रह्मदेशं सर्वत्रैकैवाभ्यासपद्धतिः प्रान्तीयास्मितामपमृज्य राष्ट्रियैक्यं संपादयिष्यति। अतः पाठशालानां सर्वासां केन्द्रीकरणमस्यां दिशि स्तुत्यं भविष्यति।

किञ्च—संस्कृतभाषाकपाटः सर्वेभ्यः मानवेभ्योऽविशेषेणोद्घाटनीयः। कथं सरस्वतीमन्दिरे केषांचित् प्रवेशाधिकारः केषांचिच्च न? ज्ञानं हि सर्व-

जनीना संपत्। यथाहि चन्द्रज्योत्स्ना सूर्यप्रभा वा सर्वेषामविशेषेण संपत्तिः न कस्यापि तत्र प्रतिबन्धस्तथा ज्ञानप्रभाऽपि सर्वेषां मनुपुत्राणां संपत्तिर्भवितुमर्हति यदा यवनैरपि वेदवाणी पठिता, तैरपि वैदिककर्माणि निर्वर्त्तितानि, तैरपि भारतीभाषाऽभ्यस्ता, को विवेकः भारतीयेभ्य एव प्रतिषेधस्य। अयमत्राधिकारी नायमत्राधिक्रियत इत्ययं तावत् वेदकालिको विचारः। देशकालौ संकीर्त्याचार-धर्मेषु परिवर्त्तनं तावद्विहितम्। यो हि देशः देशकालौ तिरस्कृत्य, मौढ्येन, पुराणमित्येव सर्वं साधु इति दुराग्रहं करोति न स प्रगत्यध्वनि पदानि निदधाति। अतः विवेकरहितान् वादान् परित्यज्य सर्वेभ्यो भारतीयेभ्यो भारतीयभाषा-मन्दिरमविशेषेणोद्घाटनीयम्। संस्कृतभाषाध्ययने सर्वेषामेवाधिकारोऽस्ति। पठन्तु भारतीभाषां न केवलं भारतीया एवापितु निखिला मानवाः। न तत्र काचिद् हानिः। प्रत्युत लाभ एव वर्त्तते। संस्कृतस्य प्रसारो भविष्यति। भगवती भरतभूमिः जगतः गुरुपदवीं प्राप्स्यति। अतः संस्कृतभाषाप्रचाराय सर्वे एव मनुपुत्रास्तां पठन्तु यथाभिलाषम्।

यथा प्राचीनभारते तक्षशिला–नलन्दाख्याः महाविद्यापीठा अवर्त्तन्त यत्र युगपत् दशसहस्राध्यापकाः नियुक्ताः आसन्निति श्रूयते तथा साम्प्रतं भारते मध्यस्थस्यैकस्य महाविद्यापीठस्यावश्यकताऽनिवार्या। येन संस्कृतभाषादानसंस्थानां नियन्त्रणं स्यात्। यत्र च विद्यार्थिनां परीक्षाः स्युः उपाधयश्च येन दत्ताः सर्वत्र सम्मानिताः स्युः। अद्य तावत् उपाधिमतामपि पण्डितानां सन्मानं न भवति तथा यथा आंग्लभाषानिष्णातानाम्। आंग्लभाषानिष्णाताः सर्वत्र स्ववृत्तिं साधयन्ति। पण्डिताश्चास्माकं दुर्भिक्षमेव सेवन्ते। अतः शासनसम्मितं मध्यस्थं विद्यापीठं नियामकं स्थापयेत्। एवं चेत् पाण्डिताः संस्कृतमभ्यस्य आंग्लभाषा-प्रवीणा इव स्ववृत्ति-साधने शक्ताः स्युः अवश्यं संस्कृताध्ययनं प्रचण्डं वेगं लभेत।

किञ्च–यथा अद्यतने शिक्षणे सर्वेषां आंग्लभाषाभ्यासः नियमेन विहित-स्तथा आबालवृद्धं सर्वेषां संस्कृताभ्यासोऽनिवार्यो विधेयः। यो हि संस्कृतान-भिज्ञः स्यात् नरो वा नारी वा, न स कुत्रचिदपि सम्मानं प्राप्नुयादिति राजशासनं भवितुमर्हति। यथाहि आंग्लभाषाविहीनोऽद्यासभ्यकल्पः अबहुमानार्हः गण्यते तथैव संस्कृतभाषाविधुरोऽपि सभ्यताशून्य इव उपानत्स्थानभागीव गणनामर्हतीति

प्रबलां सर्वव्यापिनीं भावनां प्रचारयेत्। यथा लोकः स्वभाषाऽज्ञानात् स्वयमेवापत्रपेत तथा कार्यम्। न तस्मै पुरुषाय नार्यै वा सम्मानं दद्यात् सपर्यामर्पयेत् दानं वितरेत्, गौरवं यच्छेत् यो या वा स्वभाषां निर्भर्त्सयेत्। एतस्या भावनाया विकासात् स्वयमेव जनता स्वभाषामाश्लिष्यति।

अद्यतनेऽभ्यासक्रमे आंग्लभाषायाः प्राधान्यं वर्तते। तस्य प्राधान्यस्य गौणत्वं संपादनीयम्। तदैव स्वभाषोद्धारः संपत्स्यते। यदाऽयं निखिलाया अपि जातेः जीवनमरणप्रश्नः तदा। आंग्लभाषायाः साहित्यमद्भुतं, साहित्य दृष्ट्याऽपि तस्या अभ्यासो विधेय इत्ययं क्षुल्लकः स्वात्मघाती च नोद्भाव्यः पूर्वपक्षः। भवतु तस्याः साहित्यं विस्मयकारकम्। किन्तेन? अधुनाऽस्माभिः स्वार्थान्धैर्भवितव्यम्। स्वार्थोऽहि प्रधानः। स्वार्थं साधनाय दुष्टाः संकुचितदृष्टयोऽपि वयं किन्न स्याम?—न तत्र प्रत्यवायः। इयं हि नीतिः। नीतिपथविस्मरणात् असाम्प्रतायाः उदारभावनायाः अस्माभिः आत्मविनाश एव नियन्त्रितः। अतः सम्पूर्णो न्यक्कार एवात्र विहितः। वयमत्युदारा इति तु भ्रम एव। हिन्दुजातितुल्या मूढा जातिरेव नास्ति या स्वबालकान् हिनस्ति परान् च पुष्णाति। ईश्वरेणास्मभ्यः भारतं दत्तं, भारतीभाषा प्रदत्ता, कथं तच्च तां च तस्य तस्याश्च विस्मरेम, पोषणं च प्रतिबध्नीम? भवतु कस्याश्चिदप्यन्याया भाषायाः घातः उदासीना एव वयं तत्र। यदि आंग्लभाषासाहित्यादिना विना दरिद्रा भवेम दारिद्र्यमपि तत् सहर्षं स्वीकुर्मः। दारिद्र्यमपि स्वाभिमानपुरःसरं गौरवान्वितं वरम् न जातु परभाषास्वीकारेण समृद्धं जीवन्मरणम्। अतः संस्कृतस्य प्राधान्यं आंग्लभाषायाश्च गौणत्वसम्पादनं विधेयम्।

अथैकं महत्वपूर्णं साधनं वयमत्र संस्कृतभाषायाः पुनरुद्धारे प्रबलतमं च प्रदर्शयामः। सामुदायिकास्मितताया जागृतिः। दिश्यस्यां अद्भुतकल्पं फलं जनयिष्यति। अस्मिताऽस्माकीनी सामुदायिकी न्यक्कृतैव स्वपिति। गाढसुषुप्तिं परिष्वज्य सुप्ताऽस्मिताऽस्माकम्। भारतमस्माकं देशः संस्कृतभाषाऽस्माकं रिक्थं इति भावनापि संस्कारिणि जनेऽपि न लक्ष्यते। सामुदायिकास्मिताऽऽच्छादिकामज्ञानतिरस्करिणीं ज्ञानकुलिशेन तीक्ष्णेन भिन्द्यात्। भिन्नायां च तस्यां प्रबुद्धाऽस्मिताजातिः क्षणमात्रेण स्वात्मानं गहने पतितं भारतीभाषाऽस्माकं सर्वस्वमिति प्रतिरोम्णि संविद्यात्। तदैव जागृतिं प्राप्स्यति देशः।

  

भाषायाः प्रचारं चेत् कामयामहे तस्यामेव लेखनं भाषणं व्यवहारश्च कार्यः। नहि 'अस्माकं भाषा—अस्माकं भाषेति रिक्तोद्धोषमात्रात् कार्यं सेत्स्यति। संस्कृतभाषा मृतेत्यस्यायमेवार्थः यत् न सा सम्प्रति व्यवहारे प्रयुज्यते। व्यवहारे चेदस्या अवतारः स्याद् झटिति तस्या उद्धारोऽपि भवेत्। अतः संस्कृते एव व्याहारस्य लेखनस्य व्यवहारस्य चाग्रहो रक्ष्यः। इदमपि न सामुदायिक साहाय्यं विना भविष्यति। दुर्गमश्चायं पन्थाः इदमपि नास्माकं नयनागोचरम्। तथापि न तदृते निस्तारः अतः सर्वैरपि संस्कृतभाषायां एव व्यवहारः संपाद्यः।

किंच— संस्कृतभाषा तावत् तपःसाध्या। सिद्धिरिवायोगिनं नोपसर्पति भारतीभाषाऽतपस्विनम्। ब्राह्मणाश्च सनातनतः विद्यागोप्तारः। ते च कुम्भकर्ण इव दीर्घामक्षोभ्यां सेवन्ते। चेत् विद्यारक्षका एव सुप्ताः कोऽन्यः तस्या रक्षणे सन्नध्दः स्यात्? ब्राह्मणाश्चैदंयुगीनाः प्रायशः न तपोधनाः न विद्याधनाः। तेषां हस्ते च पतिता विद्या संस्कृता। अद्भुता विप्राणां सत्ता। तेषां हि शासनं प्रजाहृदये वर्त्तते भवतु प्रजादेहे यस्य कस्यापि। ब्राह्मणाः आजन्मनः आ च मरणं प्रजां सन्मार्गे उन्मार्गे वा नेतुं समर्थाः। इमे भूसुराश्चेत् प्रबुद्धाः स्युः क्षणमात्रेणाघटघटनमपि कुर्युः। इदमेव परन्तु शल्यं हृदि यन्न जानन्ति ते स्वप्रभावम्। न ते मन्स्यन्ते यदा शासकप्रजातोऽपि तेषां सत्ताऽधिकेति वयं वच्मः। पुरोहिता इमेऽधुनाऽनुयायिनः सन्ति। अग्रेसराश्चेदिमे भवेयुः पुनरपि भारतीभाषोद्धारं पश्येत्। एतदर्थं निखिलया प्रजया तेषु नैतिको भर देयः। अतः सरस्वतीतनयैः विप्रैः विद्याधनैः तपोयुक्तैर्भाव्यम्। तदैव संस्कृतभाषोद्धारः भविष्यति।

अथान्तिमोपायं प्रदर्श्येति भणामः। यथाऽस्मास्वस्माकं स्नेहः सहजः तथैव भाषायामपि निरतिशयेन स्नेहेन सहजेन भवितव्यम्। प्रियं पतितं प्रियः प्रोद्धरति। पतितां भाषां प्रियां प्रिया वयं प्रोद्धरेम। सर्वेषु निर्दिष्टेषु साधनेषु भाषास्नेहः परं साधनं सर्वेषामितरेषां जनकम्। भाषाभावाभावेन तस्या उद्धरणाय प्रवृत्तिरेवानुपपन्ना। अतः निर्व्याजप्रेम्णः प्रभवाय प्रभूतोपायानुष्ठानं कर्त्तव्यम्। शैशवत एवेदं संस्कारबीजं बालमानसे वपेत् यद् संस्कृतमस्माकं जन्मभाषा। तां विना हे बाल! भविष्यज्जीवने त्वं शून्यः। तव सपर्या, सन्मानं, पूजा, गौरवं सर्वं—संस्कृत एव प्रतिष्ठितम्। अतः पठ त्वं भाषामिमां। नो चेन्न त्वं भरतभूमिजन्मा। त्वं देशद्रोही। जातिकलंकः।

कुलांगार इति। चेत् सुशिक्षितरः संस्कारमिमं मुद्रयेयुः बालमानसे, विकसिष्यति फलपर्यन्तं तद्बीजं भाविनि युगे। भूयोऽपि भारतभूमिस्तथाकरणात् भव्यता-मासादयेदित्यत्र न संशयतुषोऽपि वर्त्तते।

एवं संस्कृतभाषायाः पुनः प्रचाराय, संजीवनायोपायजातं यथामान-मस्माभिः प्रदर्शितम्। अथात्र यत् कर्त्तव्यं तत् कुर्वन्तु महाभागा विद्वांसः संस्कृतभारतीप्रिया इत्याशास्महे। कर्मण्यवतीर्णं ज्ञानं स्तोकमपि महत्फलं प्रसूत इति सर्वदा स्मरणीयम्। महिमा तु कर्मण एव ज्यायान् न केवलस्य ज्ञानस्य। कर्मभूमिमनारूढं ज्ञानं हि भाररूपम्। अतोऽकर्मण्यतापिशाचीं केनाप्युपायेन विधूय भगवतीं कर्मण्यतां सर्वोऽपि लोकः समाश्रयतु क्षिप्रमेव पतितां संस्कृत-भारतीं समुद्धरत्विति शम्।



आपाततः परीक्षन्ते जना न परमार्थतः।
सर्वे विदन्ति नेत्राणि किन्तु पश्यन्ति केचन॥

—मेकियावेलि

*

पत्नी प्रमादशीलस्य विधवासदृशी भवेत्।

—हंगेरियन् आभाणकः

*

शनैर्जिह्वा प्रयोक्तव्या चक्षुरेव हि सत्वरम्।

*

—सर्वेण्टीस्

शुचिरेव हि मन्तव्यः प्रियस्तु परमात्मनः।

—कोरान्

# पद्मिनीपरिणयम्

[ अनुवर्तमानम् ]

पंचमः सर्गः

तिरुक्कणपुरम्
श्रीनिवासाचार्यः

ततो यियक्षुर्नृपतिस्स्वमात्यान्
द्विजांस्तथा याज्ञिककर्मदक्षान् ।।
आनाय्य तेभ्यस्स्वमनोरथं सः
निवेदयिष्यन्स्वयमाह हृष्टः ।। १ ।।

पुदाख्यया यो निरयो विगीतः
स पुत्रहीनस्य सुदुर्भगस्य ।।
अवश्यभावीति समामनन्ति
मन्वादयो वेदविदो महान्तः ।। २ ।।

तत्तारणे शक्तिमता सुतेन
हीनोऽहमस्मीति दिवानिशं च ।।
खिन्नस्य मे नैव रतिः कदापि
शय्यागतस्यापि च नैव निद्रा ।। ३ ।।

मत्तः परं पिण्डभुजो विलुप्त-
पिण्डोदका, इत्यतिदुःखितेन ।।
मया प्रदत्तं पितरो हि साश्रु
नैवापमम्भः प्रपिबेयुरद्धा ! ।। ४ ।।

सञ्चिन्तयन्नेवमहं विनिद्रो
गुरोर्वसिष्ठस्य तपोवनं तत् ॥
संप्राप्य तत्पादयुगं प्रणम्यं
स्थितोऽभवं सोऽपि कृपार्द्रचित्तः ॥ ५ ॥

इहावस त्वं कतिचिद्दिनानि
पुण्ये वने धर्मरतान्मुनीन्द्रान् ॥
प्रणम्य मत्कर्मसु साह्यकारी
भवेति मां संदिदिशे मुनीन्द्रः ॥ ६ ॥

तथेति सोऽहं नियमैस्समेतः (युतस्सन्)
गुरोर्हि शुश्रूषणदत्तचित्तः ॥
आराधयन्नासमथैकदा मां
प्रसन्नचेता मुनिरित्यवोचत् ॥ ७ ॥

भूपाल ! यज्ञं हयमेधमादौ
विधाय पुत्रेष्टिमथो विधत्स्व ॥
भवान्तरोपार्जितपापहीनः
त्वमाप्नुया डिम्भयुगं गुणेडचम् ॥ ८ ॥

इत्थं प्रसन्नेन तपोधनेन
नियुक्त आर्येण मखद्वयं तत् ॥
विधातुकामोऽस्मि सहाप्रमत्तैः
श्रेयोरतैस्स्निग्धजनैर्भवद्भिः ॥ ९ ॥

ददत्वनुज्ञां भगवन्त एते
द्विजा, अमात्यास्सुहृदोऽनुरक्ताः ॥
इतीरितास्ते खलु साधुवादैः
अमानयंस्तां नरदेववार्त्ताम् ॥ १० ॥

भूपैरशेषैर्मख एष शक्यः
कर्तुं तथाप्यस्य हि यातुधानाः ॥
प्रत्यूहकामाः प्रचरन्ति, यज्ञ–
नाशे विनाशं समुपैति कर्ता ॥ ११ ॥

ततो हि विघ्नो न भवेन्न चाङ्ग–
हानिर्यथा भोजनदक्षिणादेः ॥
लोपो न च स्यान्मखसंविधाने,
तथाभवद्भिर्यतितव्यमत्र ॥ १२ ॥

दूरे पुरस्याधितटं तटिन्याः
वाटो विशालस्तु मखस्य रम्यः ॥
निर्मीयतां तापससत्तमानां
वासा, नृपाणामपि चोपकार्याः ॥ १३ ॥

अन्नस्य शाला विविधाः प्रयाश्च
कल्प्या हि नानाविधवस्तुपूर्णाः ॥
रूप्यैर्हिरण्यैर्मणिभिर्महार्घैः
पूर्णस्तथा कोशगृहा विधेयाः ॥ १४ ॥

वासांसि चित्राणि च कम्बलानि
सुवर्णसूत्रैः परिकर्मितानि ॥
पट्टांशुकान्याभरणानि तत्र
पुञ्जीक्रियन्तां विविधान्यमात्याः ॥ १५ ॥

पौरा जना जानपदाश्च ये ये
समागतास्ते खलु पूर्णकामाः ॥
यथा भवेयुर्हि तथोपचाराः
कार्या भवद्भिर्बहुसावधानैः ॥ १६ ॥

नावज्ञया किञ्चिदपीह देयं
न भक्ष्यभोज्याद्यथ लीलया वा ॥
अन्नं हि सत्कृत्य सदा प्रदेयं
यथा न कोऽप्यत्र भवेत्क्षुधार्तः ॥ १७ ॥

कर्मान्तिकाश्शिल्पकरा नटाश्च
ये वेदवेदान्तविदो न यज्ञाः ॥
तत्तत्कलासु प्रवराश्च ये ये
सर्वे प्रपूज्यास्तदभीष्टदानैः ॥ १८ ॥

इतीरिता राजवरेण सर्वोऽ-
प्यमात्यवर्गो द्विजसत्तमाश्च ॥
"नैवेयमाश्चर्यकरी रतिस्ते
धर्मे रतस्ये"ति नृपं ननन्दुः ॥ १९ ॥

ततो वसन्ते नृपतिस्तुरङ्गं
सल्लक्षणं भूषणदीप्रगात्रम् ॥
सञ्चारयन्गामखिलां समर्थैः
व्यसर्जयद्योधवरैस्सुगुप्तम् ॥ २० ॥

ततस्त्वमात्या नृपतेर्निदेशात्
पुराद्बही रम्यतटे तटिन्याः ॥
देशे विशाले किल यज्ञवाटं
वितेनिरे कर्मकरैर्मनोज्ञम् ॥ २१ ॥

प्रासादपङ्क्तीर्नृपसत्तमानां
तथैव रम्यान्निलयान्मुनीनां ॥
गृहाननेकांश्च तथेतरेषां
विनिर्ममुस्तत्र निवासहेतोः ॥ २२ ॥

अन्यान्गृहान्रत्नहिरण्यधान्य-
पट्टांशुकै रल्लकसूक्ष्मवस्त्रैः ॥
यज्ञीयसंभारभरैश्च पूर्णान्
अकल्पयन्गोमहिषादिशालाः ॥ २३ ॥

ततो वसुर्यज्ञकृते वसिष्ठं
आनेतुकामस्स्वयमेव गत्वा ॥
प्रणम्य तं प्रार्थयते स्म, यज्ञ-
भारं प्रवोढुं गुरुवर्यमादौ ॥ २४ ॥

अङ्गीकृते तेन स भूमिपालः
अन्यानृषीन्यज्ञविदो द्विजांश्च
आनाययांस्तं श्वशुरं च मान्यं,
अमात्यमुख्यान्प्रजिघाय तूर्णम् ॥ २५ ॥

वर्षे तु पूर्णे तुरगे निवृत्ते
यज्ञाय सर्वेऽपि च भूमिपालाः ॥
आकारिता मन्त्रिमुखेन राज्ञा
सोपायना यज्ञभुवं समीयुः ॥ २६ ॥

वृता मुनीन्द्रा अपि यज्ञवाटं
उपागमन्कर्मविधानदक्षाः ॥
तथा द्विजाः कल्पविदो महान्तः
उपागताश्शास्त्रविशारदाश्च ॥ २७ ॥

तदा वसिष्ठस्स मुनीन्नरेन्द्रान्
उपेत्य सत्कृत्य यथार्हमेतान् ॥
वसुं तमूचे समयो मखस्य
प्राप्तोऽद्य दीक्षां विश भूमिप! त्वम् ॥ २८ ॥

"शुभो मुहूर्तस्तव यज्ञियोऽसौ"
इति त्वरन्ते खलु याज्ञिकास्ते ॥
इत्येवमुक्तो गुरुणा स भूपः
तदैव दीक्षां विविशे मखस्य ॥ २९ ॥

ततो वसिष्ठं पुरतस्तु कृत्वा
राज्ञोऽश्वमेधाख्यमखे प्रवृत्ते ॥
कर्माणि सर्वाण्यपि तानि चक्रुः
द्विजा यथावत् श्रुतिपारगास्ते (च्छ्रु) ॥ ३० ॥

इति श्रीकृष्णनगरीयश्रीनिवासाचार्यविरचिते श्रीपद्मिनीपरिणयकाव्ये पञ्चमः सर्गः ।

पिब, वेत्सि कुतः प्राप्तः
किमर्थञ्चात्र नैव नु ।
पिब, भूयो न जानासि
किमर्थं क्व गमिष्यसि ॥

—ओमर्खय्याम्

नरके शासिता श्रेयान्
न स्वर्गे परिचारकः ।

—मिल्टन्

# नाभुक्तं क्षीयते कर्म

(सत्यघटना)

भाईशंकर पुरोहितः*

आसीत् कश्चिद् सुगुप्तनामा गान्धिककर्मव्यापृतो वणिक्। पितृप्राप्तं व्यवसायमिममनुतिष्ठन् सः सुखेन कुटुम्बभरणमवाप। दैनन्दिनवित्तलाभेन सह दायादप्राप्तधनस्य प्रभूतात्संचयात्कुसीदमपि पर्याप्तमविन्दतायम्। दशसहस्रजनोषिते ग्रामे किल वित्ततुन्दिलेषु पञ्चषेष्वस्य नाम कनिष्ठिकाधिष्ठितमासीत्।

अभूत्तस्य दूरग्रामवासिनी भगिनी। एकपुत्रा सा तत्पतिश्चापक्ववयसावेव कालाकारितावभूताम्। अष्टवर्षीयः तत्पुत्रः सप्रेम साग्रहञ्च परिपालनाय गृहमानीयत सुगुप्तेन। सुतनिर्विशेषमेव परिपुष्यते स्म भागिनेयः। दामोदरनाम्नोऽस्य बालस्यैवमेव वर्षचतुष्टयं ज्येष्ठमातुलस्य गृहे सुसुखं व्यतीतमभवत्। स्वभावशीतला मधुभाषिणी च मातुलान्यपि सुतनिर्विशेषं परिपालयन्त्यमुं विस्मारितवती स्वमातुः। अत एव मातुलेन कनिष्ठेन भूयोभूयः स्वगृहनिवासाय सप्रेम निमन्त्रितोऽपि दामोदरो नाऽकामयत तत्र चिरवासम्।

अथ ग्रामे लभ्यां सर्वामपि शिक्षां प्राप्तवतोऽस्य बालस्यावश्यकमासीत् कुत्रचिन्नगरेऽग्रशिक्षालाभाय गमनम्। अतो नातिदूरवर्तिनि नगरे मातुलेन दामोदरः प्रेषितः। स च कुत्रचिच्छात्रालयेऽन्तेवासित्वमवाप।

दामोदरस्य पिता स्वग्रामे बभूव सर्वश्रेष्ठो धनिकः। तद्धनव्यवस्थापि मातुलेन सुगुप्तेनैव दामोदरपालकत्वेनात्मसादक्रियत। द्वितीयमातुलो व्यवस्थायामस्यां सहभागी बुभूषुः ग्रामजनानुपसृत्य स्वाभि-

* वेदान्तसाहित्याचार्यः, शास्त्रीयपरीक्षामन्त्री, उपप्रधानाचार्यः मु. सं. महाविद्यालये, सहसंपादकश्च संविदः

प्रायसिध्यै प्रायतत। परं दामोदरस्य प्रथममातुलरक्षितत्वान्नाभूदयं शक्तस्तथाकर्तुम् । प्रथममातुलश्च स्वस्रेयधनव्यवहारे निष्प्रत्यूहं स्वीयमधिकारं प्रतिष्ठापितवान् ।

व्यतीतं वर्षद्वयं दामोदरस्य नगरच्छात्रालये स्थितस्य। प्रतिभा-संपन्नः, रमणीयाकृतिः, सरलव्यवहारः, आर्जवमूर्तिः, अध्ययने चाद्वितीयो दामोदरः प्रीतिमापादयत् गुरूणां सतीर्थ्यानाञ्च। वर्षे वारद्वयं महा-विराममनुभवितुं मातुलकुले गच्छति तस्मिन् सर्वे वयस्याः सोदरविरहजं दुःखमन्वभवन् । पुनर्मिलनावसरे च तं कुशलं दृष्ट्वा हर्षभरितान्तरा बहुविधाः छात्रकथाः कुर्वन्तो घण्टा निमेषानिव लघूभूता अपश्यन् ।

एवं मित्राणां विनेतॄणाञ्चानुपमसौहार्दसुखमनुभवतोऽस्यासीदपर-सत्रं तृतीयवर्षस्य। सहसायमिन्द्रियतापकेनाननुभूतपूर्वेण ज्वरेण समा-क्रान्तोऽभवत् । दिनद्वयं आवास एवौषधोपायान् कुर्वद्भिः, तेन च ज्वरा-पनोदनमपश्यद्भिश्छात्रैः पालकैश्च प्रवेशितोऽयं सर्वसाधनसमन्विते विशालरुग्णालये । ज्ञापितोदन्तश्च मातुलस्तत्रागत्य, औषधोपचारकर्म स्वायत्तीचकार ।

सोऽयं मातुलो दामोदरं तदर्थमेव भाटकगृहीते आवासे आनीय तत्र चान्यैरेव चिकित्सकैरुपचारव्यापारमारब्धवान्। व्यतीतेष्वपि पञ्च-विंशतौ दिनेषु न पुनरवाप स्वास्थ्यं दामोदरः। ज्वरे मन्दायितेऽपि कासेनोदरपीडया च परिबाध्यमानस्यास्य शरीरं गणनीयास्थि सम-जायत। बन्धुभिर्मित्रैश्च भिषगन्तरमाकारयितुमुपादिश्यत । किन्तु स्वानीतस्य भिषजोऽनितरसुलभं पाटवं प्रकाशयन् मातुलो न तदङ्गीच-कार। दिने दिने क्षीणतरतां भजद् दामोदरगात्रं प्रेतानामपि भयङ्करं प्रातीयत। चक्षुषोर्ज्योतिः दिवादीप इव तन्द्रातुन्दिलं समदृश्यत। पानी-यमपि पातुं नासीत्तस्य प्रवृत्तिरन्नस्य तु का कथा! काले काले कुशलप्रश्नाय समागच्छन्तः सतीर्थ्यास्तस्य दशामिमां द्रष्टुमक्षमा इव समुच्छ्वलिताश्रवो विरलागमनाअभूवन्।

अश्रूयत चाचिरादेव स्निग्धानां कर्णभेदिका मर्मविदारिका च दामोदरोपरतिवार्ता ।

प्रतिनिवृत्तनिजग्रामेण मातुलेन सोरस्ताडमविरतसञ्चरदश्रु बहु विलपितम् । मरणं प्रकृतिः शरीरिणामिति वदद्भिर्बन्धुभिरनारतं निवारितोऽपि सः दामोदरगुणानालापन् विलापपरंपरां व्यतनुत ।

मासैकात्परं कनिष्ठभ्रात्रा दामोदरवित्तविषयेऽनुयुक्तः सुगुप्तः सक्रोधः साश्रुनयनश्च तस्यौषधोपचारेषु सर्वमपि तद्व्ययीभूतम्, न केवलं तदेव स्वीयमपि बहु धनं मया प्रदेयमासीद्भिषग्भ्यः इत्यकथयत् । पूर्वमेव साशंकोऽसौ लघुभ्राता प्रभूतं भगिनीधनं ज्येष्ठेन निगिलितमिति अध्यवस्य, नगरं गत्वा तूष्णीं औषधव्यवस्थां भिषजश्चाज्ञासीत् । राजमन्त्रिणञ्च सविस्तरं सर्वमुदन्तं पत्रारूढं विधाय विज्ञापनमेकमप्रेषयद् वाक्कीलद्वारा ।

विदितवृत्तान्तः सुगुप्तो गृहागृहमुपसर्पन् "दृश्यतां बन्धवः ! दृश्यताम् । भागिनेयस्य सेवानिमग्नेन दिनमिदं रात्रिर्वेति न विदितं मया ! कदा पीतं कदा च भुक्तमिति नावगतं तच्चिन्तैकनिमग्नेन, सकलदिग्भागेभ्यो महार्हाण्यौषधान्याहृत्य श्रेष्ठैश्चिकित्सकैः प्रयुक्तानि । अथापि दुर्विलसितेन दैवेन भग्नो मे आशातन्तु" रिति चुक्रोश । पुनरपि साश्रुनयनो विलापभूयिष्ठया वाण्या अवदत् "पश्यत सुज्ञाः । भागिनेय-निमित्तं संपन्नस्वार्थनाशस्य नाहं रोदिमि । किन्तु भ्राता मे कनिष्ठो भागिनेयवित्तापहारिणं मां मनुत इति क्षते क्षारमिव न सोढुं प्रभवामि । किन्नु दुःखतरं भवेदेतस्मात् । भ्रातृरूपेण नूनं पूर्वभवस्य कश्चिद्रिपुरेवायं मन्मातृकुक्षिं प्रविष्ट इति प्रमिणोमि । को वेतः परं संबन्धिकर्मणि प्रवर्तेत दृष्ट्वेदं घोरमपकारराशिम्" . . . . एवमादि ।

जनास्तु अन्तर्हसन्तो बहिः सौहार्दं सहानुभूतिञ्च प्रदर्शयन्तस्तदुक्तं सर्वं यथावदिति वचनैस्तं प्राहुः । लोकानां मधुमयभाषितैः क्षणं तुष्टोऽपि

सुगुप्तो न लेभे विस्रब्धां निद्राम्। 'स्वात्मा तु जानाति स्वकीयवृत्तम्' इति कोऽप्यगम्य आन्तरो भावस्तमनुदिनमन्तर्दाहेन निस्तेजसं कृशतराङ्गं च कुर्वन्नासीत्।

एवं व्यथितचेतसि तस्मिन्नग्न्यास्त्रमिवापतत्।

राजमन्त्रिण आज्ञापत्रमादाय यमदूता इव रक्षिणः तं समागच्छन्। रक्षिगृहं नीत्वा च विंशतिसहस्ररूपकाणां प्रतिभुवं स्वीकृत्य स विसर्जितः। भागिनेयस्य वित्तमपहर्तुं स प्रतिकूलौषधिप्रयोगैर्मारित इति तद्धनापहरण-मारणरूपकर्मभ्यामधिक्षिप्त आसीत्सुगुप्तः।

महानगराच्छ्रेष्ठतमं प्रभूतधनलभ्यं वाक्कीलं स्वरक्षायै नियोजितवतोऽस्य वर्षद्वये धैर्यमिव वित्तमपि प्रतप्तायसि पतितं जलमिव निःशेषमभवत्। परिणामभीतिर्व्यायत्तमुखी भुजगीव तं प्रतिक्षणमकम्पयत्।

सुचिरं विमृश्य न्यायाधिकारिभिश्च निर्णयो निवेदितो यत्सुगुप्तो लक्षरूप्यकात्मकं भागिनेयधनं मृषा निमित्तैरपाहरत्, दामोदरप्राणाश्चानुचितौषधोपचारेण जग्राहेति।

ग्रामजनेषु साकूतं पश्यत्सु, सभर्त्सनं संबोधयत्सु, श्वपाकादपि निर्घृणतरोऽयं युक्तं रूपं दण्डमवापेति मिथः प्रभाषमाणेषु, सबन्धनं रक्षिभिरनीयत भूविवरप्रार्थीव लज्जावनताननः सुगुप्तः।

वर्षद्वयं कारागृहे चणकपेषणेन, काष्ठछेदनेन, कदन्नभक्षणेन, सश्रृङ्खलं संचरणेन, मलिनभूमिशयनेन, प्रतिक्षणं रक्षिकाणां निन्दावादैर्लगुडप्रहारैश्च जर्जरितगात्रः कालायसाकृतिश्च सः श्मशानप्रेत इव लोकान् भाययन्, दरिद्रराज इव सुजनानार्द्रीकुर्वन्, अस्पृश्य इव परिचितान् विद्रावयन्, लोकदृष्टिभ्यो बिभ्यत्, शून्यशून्यां दृष्टिमाकुलाकुलं प्रसारयन् प्राविशत् स्वाभ्युदयसाक्षि स्वनगरम्।

स्वपापभारमसहमान इव, परितस्तिरस्कारवर्षाविद्ध इव, लोकान्तरेऽवशिष्टदण्डभोगाय तित्वरन्निव, अन्तःप्रस्फुरता पश्चात्तापवह्निना दग्धजीवितसत्व इव च स अनुससार पूर्वजानां पदवीमित्यासीत्तर्कनिर्भरस्तद्ग्रामजनः ।



अधर्मेणार्जितं वित्तं दश वर्षाणि तिष्ठति ।
प्राप्ते त्वेकादशे वर्षे समूलं तद्विनश्यति ।।
अधर्मेणैधते पूर्वं ततो भद्राणि पश्यति ।
ततः सपत्नाञ्जयति समूलश्च विनश्यति ।।

—महाभारतम्



कृतोऽपराधो बहुभिस्स एव
फलन्तु भिन्नं खलु चित्रमेतत् ।
एके वहन्त्यद्भुतमृत्युदण्डं
वहन्ति चान्ये मुकुटं विशालम् ।

—ज्युवेनल्



चित्रं विचित्रं ननु, सम्मुखे नो
गतास्तमोद्वारमतीत्य केचित् ।
निवर्तते नैव च कोऽपि वक्तुं
मार्गं, तमन्वेष्टुमतो हि यामः ।।

—ओमर् खय्याम्
(अनु. आ. शा.)





(बालोपयोगिनी सरला कथा)

# रामायणकथा (रामजन्म)

भाईशंकर पुरोहितः

आसीत् दशरथः नाम राजा। अयोध्या तस्य राजधानी आसीत्। भगवतः सूर्यात् प्रवृत्ते वंशे अस्य जन्म। तस्य पूर्वजाः अतिविख्याताः अभूवन्। भगवान् मनुः, इक्ष्वाकुः, भगीरथः, दिलीपः, रघुः, अजः–एते सदाचाराः नृपाः अस्य पूर्वजाः। तेषु प्रथमः **मनुः** मानवानां गुरुः [1] इति प्रख्यातः। यतः तेन मानवेभ्यः उत्तमाः आचाराः नीतिनियमाः च शिक्षिताः। तस्य उपदेशानां संग्रहः 'मनुस्मृतिः' इति ग्रंथे वर्तते।

**भगीरथः** महत् तपः कृत्वा भगवतीं गंगां स्वर्गात् भूप्रदेशम् आनयत्। **गंगा** अस्माकं बहुविधं [2] कल्याणं करोति। ताम् आनीय भगीरथः अस्मासु अतीव उपकारम् अकरोत्। तेन महान् उद्योगः कृतः आसीत् गङ्गाम् आनेतुम्। अतः एव सः ऊद्योगिनाम् आदर्शः भवति।

**दिलीप** : संततिलाभाय गुरोः आज्ञाम् अनुसृत्य गोपूजाम् अकरोत्। गोः हिंसार्थं प्रवृत्तं सिहं सः 'मां भक्ष, मुञ्च इमां गाम्' इति अवदत्। तस्य ईदृशं उत्तमं त्यागं दृष्ट्वा गौः गुरुः च प्रीतौ अभवताम्। तयोः आशिषा च राजा रघुं पुत्रम् अलभत।



१. आदिपुरुषः शिक्षकः च। २. अनेकैः प्रकारैः।

रघु : पितृसमानः सदाचारेषु निरतः आसीत्। सः भुवं विजित्य 'विश्वजितं' यज्ञम् अकरोत्। तस्मिन् यज्ञे सः सर्वम् अपि धनं ब्राह्मणेभ्यः याचकेभ्यः च अयच्छत्। एकदा अकिञ्चनं रघुं कौत्सनामा वरतन्तोः[1] शिष्यः आगच्छत्। सः गुरवे देयाः चतुर्दशकोटीः सुवर्णमुद्राः लब्धुं तत्र आगच्छत्। रघोः सविधे[2] मृण्मयानि पात्राणि एव भवन्ति इति ज्ञात्वा सः अन्यं दातारं गन्तुम् ऐच्छत्। किन्तु रघुः तं दिनत्रयं प्रतिपालयितुं[3] उक्तवान्, कुबेरात् च धनम् आनेतुं सन्नद्धः[4] अभवत्। रघोः भीतेन कुबेरेण[5] सुवर्णमुद्राणां वृष्टिः कृता। रघुः कौत्साय सर्वम् अपि धनं ग्रहीतुम् अभणत्। परं तु कौत्सः गुरवे देयात् धनात् पणकम् अपि अधिकं ग्रहीतुं न ऐच्छत्। एवं परस्परं धनदानाय कलहकारिणोः तयोः कः श्रेयान् इति निर्णयं कर्तुं न अशक्नुवन् अयोध्यावासिनः जनाः। एतत् महाकविना कालिदासेन एवं वर्णितं रघुवंशे--

**जनस्य साकेतनिवासिनस्तौ द्वावप्यभूतामभिनन्द्यसत्वौ।**
**गुरुप्रदेयाधिकनिःस्पृहोऽर्थी नृपोऽर्थिकामादधिकप्रदश्च॥**

रघुः कौत्सस्य आशीर्वादैः अजं सुतम् अलभत। अथ विदर्भराजस्य रूपेण, गुणैः, चातुर्येण च अनुपमा पुत्री आसीत्। तस्याः 'इन्दुमती' इति नाम। स्वयंवरे सा अजं अवृणोत्। तौ दम्पती परस्परं अतीव प्रीतिमन्तौ आस्ताम्। एकदा आरामे उपविष्टयोः तयोः इन्दुमत्याः वक्षसि आकाशात् पुष्पमाला अपतत्। तेन इन्दुमती मृता। राजा अजः बहु विलापम् अकरोत्। मरणाय च प्रवृत्तः किन्तु गुरोः वसिष्ठस्य वचनैः स आत्मानम् अधारयत्। अनयोः अज-इन्दुमत्योः सुतः दशरथः। सः अपि बाल्ये एव पिता इव मेधावी, सदाचारः, शस्त्रेषु कुशलः, प्रजाप्रियः च अभवत्।

---

१ महतः गुरुकुलस्य वरतन्तुः कुलपतिः आसीत्। २ समीपे। ३ प्रतीक्षितुम्, प्रतीक्षां कर्तुम्। ४ तत्परः। ५ कुबेरः यक्षानां राजा, धनपतिः।

अस्य दशरथस्य तिस्त्रः पत्न्यः आसन्। तासां कौशल्या सुमित्रा कैकेयी इति नामानि। प्रौढाम् अवस्थां प्राप्तः अपि राजा न पुत्रम् अलभत। पुत्राभावः तं राज्ञीः च चिन्ताकुलान् अकरोत्। समृद्धं राज्यं, विविधाः भोगाः च तान् न अनन्दयन्। स्वस्य वंशस्य स्वस्मात् परं नाशं पश्यतः राज्ञः मनः व्याकुलम् अभवत्।

दशरथः गुरोः आज्ञया 'पुत्रेष्टिं' यज्ञम् अकुरुत। तस्य यज्ञस्य पुरोहितः आसीत् विभाण्डकसुतः 'ऋष्यशृंगः'। राजा ऋष्यशृंगेण सह पुत्र्याः शान्तायाः विवाहम् अकारयत्।

यज्ञान्ते कश्चित् दिव्यः पुरुषः हस्ते कलशं धारयन् उपस्थितः। कलशे पायसं आसीत्। पायसं विभज्य कौशल्यायै कैकेय्यै च अयच्छत् राजा। ते राज्ञ्यौ स्वस्वभागात् चतुर्थांशं सुमित्रायै अयच्छताम्। पायसं भुक्त्वा तिस्त्रः अपि महिष्यः गर्भवत्यः अभवन्। दशमे च मासे चत्वारि पुत्र-रत्नानि अजनयन्। कौशल्यायाः रामः, कैकेय्याः भरतः, सुमित्रायाः च लक्ष्मणशत्रुघ्नौ अजायन्त। एतेषां कुमाराणां जन्मसमये दिशः प्रसन्नाः आसन्। वायुः अनुकूलः अवहत्। सर्वत्र मङ्गलतूर्याणि अश्रूयन्त। प्रजाः आनन्देन अनृत्यन्। राज्ञः हर्षस्य तु किं वक्तव्यम्! आत्मनः तत् सौभाग्यं 'स्वप्नः अयं, भ्रमो वा भवेत्' इति मन्यमानः सः भूयोभूयः चक्षुषी परामृशति स्म। सः आत्मानं विस्मृत्य अन्तःपुरम् अधावत्। भास्वरान् मनोहरान् च अर्भकान् निर्निमेषम् अपश्यत्। पुनः पुनः पश्यन् अपि सः न तृप्तिम् अगच्छत्।



**श्रीकृष्णपञ्चाशिका**
**भृङ्गसन्देशः**
**वाणीमणिमालिक**
} (काव्यानि) कविः— **मण्डोट्टुशेरि कृष्ण नम्बूदिरिपादः**, कविताकान्तः, कविरत्नं, साहित्यरत्नम् ।

**भृङ्गसन्देशः** —खण्डकाव्यरत्नमिदं मेघदूतमनुसृत्य केरलदेशीयेन प्रथितनाम्ना कविनानेन पण्डितया स्वपत्न्या प्रेरितेन निबद्धम् । अत्र भागद्वयमस्ति । कश्चन कामी प्रियावियुक्तः उडुपतिपुरे वासं चक्रे। तत्र कस्यापि धनिकस्य गृहे वसन् एकदा पुष्पवाटिकायां भृङ्गमेकं ददर्श। स स्वप्रियायै सन्देशं हारयिष्यन् तमेव भृङ्गं दूत्ये नियोजयामास। एवञ्च भृङ्गसन्देशः प्रादुरभूत् । यद्यपि काव्यमिदं मेघदूतं नातिशयीत तथापि मेघदूतस्येषच्छायां बिभर्तीति संस्कृतकाव्यरसिकानां मोदाय कल्पेतेत्यत्र न कापि संशीतिः। यथोक्तं मेघदूते भूतगणो भूतनाथस्य कण्ठछविमन्तं मेघमवलोक्य मोमुद्यत इति तथैव मेघदूतच्छविच्छुरितां सर्वामपि कृतिं दृष्ट्वा तोषमनुभवति रसिकगणः। अनुकृतिरपि प्रशंसाया एकः प्रकारो ह्यास्ते। काव्यमिदं संस्कृतज्ञैरवश्यं पठनीयम् ।

अनेनैव कविना गुम्फिता काव्यमाला '**श्रीकृष्णपञ्चाशिका**।' सरसया वाण्या श्रीकृष्णरसवैभवमत्र समुपवर्णितम् । काव्यं केरललिप्यामस्ति। केरलीभाषामजानानामयं विघ्न एव। यदि नागरीलिपिरनुस्रियेत तर्हि संस्कृतकाव्यप्रणयिनां सर्वेषामपि उपकाराय भवेत् ।

**वाणीमणिमालिक**—केरलीभाषायामुपर्युक्तकविनैव ग्रथितो लघुकाव्यगुम्फः । अत्र द्वाविंशतिलघुकाव्यानि सन्ति।

**— आ. शा.**

# विविधवृत्तम्

## व्यासजयन्ती

प्रतिवर्षमिवास्मिन्नपि वर्षे बहुत्र स्थलेषु (दिनांक २-७-६६) गुरुपूर्णिमादिने व्यासजयन्ती समपाद्यत। तदितिवृत्तसंक्षेपोऽधो दीयते।

**पटना**—गुरुपूर्णिमायां शारदाकुटीस्थाने व्यासजयन्ती यथाविध्यनुष्ठिता। पं. **श्रीहरदेवशर्मभिराध्यक्ष्यं** निरौह्यत। तत्र **श्रीगोवर्धनशास्त्रिणः, श्रीकृष्णदेवशर्माणो**ऽन्येच विद्वांसः श्रीवेदव्यासस्यर्षेर्माहात्म्यं विविधैः प्रकारैरूपवर्णितवन्तः। अन्तेऽध्यक्षाणामुपसंहारभाषणेन सभा विसर्जिता।

**फरुखाबाद**—तिर्वागञ्जसत्सङ्गमन्दिरे व्यासपूजोत्सवः समपादि।

**मुम्बई**—भारतीयविद्याभवनस्य गीतामन्दिरे व्यासजयन्ती समाचर्यत। कुलपतयो **मुन्शीमहाशया** अध्यक्षा आसन्। **श्रीमदखण्डानन्दसरस्वतीस्वामिनो** महर्षेर्बहुमुखं धीवैभवं समवर्णयन्। आचार्यैः **श्रीवेङ्कटेश्वरदीक्षितै**रुपोद्घातभाषणमक्रियत। कुलपतयोऽपि विशालबुद्धेर्मुनेर्विषये सारिष्ठं व्याख्यानमकुर्वन्। **श्रीभाईशङ्करपुरोहितै**र्धन्यवादार्पणं विहितम्।

**देवप्रयाग**—श्रीरघुनाथकीर्तिआदर्शसंस्कृतमहाविद्यालये व्यासजयन्ती समाचरिता। तत्र श्रीमन्तः—**व्रजमोहनकोटियाल, माधवशर्मा, सुदामाप्रसादशास्त्री**—इत्येते भाषणान्यकुर्वन्।

**धारवाड**—विद्यागिरेः परिसरे व्यासजयन्ती समायोजिता आसीत्। महाभारतादुत्तमाः काव्यभागा वाचिताः। महर्षेश्च महिमा विशदीकृतः।

**रानीखेत**—३–७–६६ दिनाङ्केऽत्र व्यासजयन्ती समपाद्यत। तत्र **श्रीक्षेमानन्दशास्त्रिणो**ऽध्यक्षा आसन्। श्रीमन्तः—**रामदत्तपन्त, पानदेव सती वकील, भोलादत्त काण्डपाल वकील,**—इत्येते महर्षिमधिकृत्य श्रद्धाञ्जलिं समर्पितवन्तः। अध्यक्षैरपि मननीयं व्याख्यानमक्रियत।

**मधुरा**—गोविन्ददाससेवासमाजे संस्कृतनिलयाश्रयेण व्यासजयन्ती समनुष्ठिता। **श्रीशान्तानन्दस्वामिन** आध्यक्ष्यमवहन्। पि. बि. **राधाकृष्णमहाशया** महर्षेः पूजामकुर्वन्। तत्र श्रीमन्तः—पि. एस्. **गोविन्दैयङ्गार,** टि. वि. **हरिगोविन्दाचारी,** आर्. आर्. **सुब्बैय्यभागवतर्,** पि. आर्. **वेङ्कटरमैयङ्गार्,** पि. के. एन्. **राममूर्तिशर्मा,**

गोविन्ददासस्वामिनः–इत्येते महर्षिमधिकृत्याभाषन्त। श्रीकृष्णराम, श्रीकुप्पुस्वामि-एतौ समुपस्थितेभ्यः स्वागतं व्याहरताम्। अन्ते समाजस्य मन्त्रिणा श्री एस्. टि. के. कुप्पुस्वामिना धन्यवादाः समर्पिताः।

मधुरा–वैदिकसंवर्धनसभया व्यासजयन्ती सम्पादिता। श्रीगोविन्दैयङ्गार-महाशयोऽध्यक्ष आसीत्। अनेके विद्वांसस्तत्र भाषणान्यकुर्वन्। श्रीराममूर्तिशर्मणा समामन्त्रिणा धन्यवादसमर्पणं कृतम्।

मधुरा–सिद्धपीठाधिपतयः श्रीपरमानन्दाचार्यस्वामिनः स्वाश्रमे व्यासपूजां व्यदधत। आश्रमीयशिष्यैर्भगवद्गीतोपनिषत्पारायणं कृतम्। व्यासर्षेर्महत्त्व-मधिकृत्य भाषणान्यभूवन्।

मधुरा–श्रीविवेकानन्दस्वामिमठालये, श्रीसदानन्देश्वरमठालये च भगवतो व्यासस्य पूजा समपादि।

करीमनगर–संस्कृतविश्वपरिषदो धर्मपुरी (करीमनगर) शाखया व्यास-जयन्ती यथाविध्यनुष्ठिता। प्रातः ९-३० वादनवेलायां श्रीव्यासपूजा सम्पादिता। विद्यार्थिभिर्भगवद्गीतापारायणं कृतम्। सायं ५–३० वादनसमये सभा समायो-ज्यत। तत्र श्री ए. नरसिंग M.A.,B.Ed. अध्यक्ष आसीत्। तत्र श्री के. सदा-शिवशास्त्री, श्री पि. अच्युतशर्मा, श्री विश्वनाथशास्त्री–इत्येते महाशया व्याख्याना-न्यकुर्वन्। अध्यक्षभाषणात्परं श्री एम्. शामसुन्दरशास्त्री धन्यवादार्पणमन्वतिष्ठत्। मन्त्रपुष्पशान्तिपाठानन्तरं सभा समाप्ताभूत्।

गुलबर्ग–शाहपूरकेन्द्रे श्रीपूर्णप्रज्ञसंस्कृतपाठशालायां व्यासजयन्ती समा-चरिता आसीत्। श्रीकृष्णरावशर्ममहाशयोऽध्यक्षपीठमलमकरोत्। श्रीसागरप्रद्यु-म्नाचार्येण 'भगवान् व्यासो न नरः, न ऋषिरपि तु साक्षान्नारायण एव' इति पुरा-णेतिहासादिभ्यः प्रमाणान्यादाय प्रतिपादितम्। सभायां बहवः प्रमुखपुरुषाः, स्त्रियः, छात्राश्च समुपस्थिता आसन्।

गोकर्ण–श्रीमेधादक्षिणामूर्तिसंस्कृतविद्यापीठेन श्रीमहाबलेश्वरमन्दिरस्य प्रासादे व्यासजयन्तीसमारोहः सम्पादितः। तत्र श्रीविनायकराव चिक्करमने–इति महाशया अध्यक्षा अभवन्। विद्यापीठस्य मुख्याधिकारिभिः श्रीगणपतिशास्त्रि भडतीमहोदयैः स्वागतभाषणमक्रियत। तत्रैते महाशया अभाषन्त–श्रीसुब्रह्मण्य-शर्मा, पं. विघ्नेश्वरशर्मा, श्रीपरमेश्वरभट्टः, श्रीसांबभट्टः, श्रीकृष्णभट्टः, श्रीनर-

हरिभट्टः। अध्यक्षैः सारगर्भं भाषणं कृतम्। **श्रीश्यामभट्ट गोपीमहाशयो** धन्य-वादानार्पयत्।

**गोरखपुर**—श्रीसरस्वतीसंस्कृतपाठशालायां महता समारोहेण व्यासजयन्ती समायोजिता। सभायां पण्डितानां भाषणं, कवितापाठादिकञ्च मनोहरमासीत्। महर्षेः पूजापि विहिता।

**कोचिन्**—संस्कृतविश्वपरिषदः शाखया व्यासजयन्ती सममान्यत। तत्र श्री पि. एस्. **शिवरामकृष्णऐयरमहाशयोऽध्यक्षपदमलमकरोत्**। प्रथमतः एन्. **निर्मला-बायी**—के. **तंगमणि**—इति द्वाभ्यां प्रार्थना समपाद्यत। तत्र श्रीमन्तौ **हथिराम रतनजी शर्मा, के. पुरुषोत्तम पै**—इत्येतौ भाषितवन्तौ। श्रीमता **अनन्तभट्टमहा-**शयेन धन्यवादार्पणविधिर्निरवर्त्यत। श्रीवेदव्यासपूजापि व्यधीयत।

**अमदाबाद**—अमदाबादसंस्कृतपाठशालायां व्यासजयन्त्युत्सवः समनुष्ठितः। तत्र प्रधानाध्यापको **श्रीजमनाशंकरपीताम्बरमहाशय** आध्यक्ष्यं निरवहत्। तत्र श्रीव्यासपूजा—व्यासकृतिवाचन—व्यासजीवनपरिचयात्मकभाषणादिकार्यक्रम आसीत्। सभायामध्यापकाः, छात्राः, नागरिकाश्च समुपातिष्ठन्।

**कोचिन्**—रत्नहिन्दीविद्यालये रत्नहिन्दीसंस्कृतपरिषदाश्रयेण व्यासजयन्ती सम्पादिता। तत्र ब्रह्मश्री **अनन्तशर्ममहोदयोऽध्यक्षतामुदवहत्**। तत्रैते वक्तार आसन्—**श्रीचन्द्रमौलीश्वरः, श्रीकृष्णदासः, श्रीपुरुषोत्तममल्या, श्रीसुब्रह्मण्यऐयर्**। मन्त्रिणा **श्रीनीलकण्ठशास्त्रिणा** धन्यवादाः समर्पिताः। वेदपारायणपूर्वकं श्री-वेदव्यासपूजनञ्च सम्पन्नम्।

**पंजाब**—श्रीसाधनाविद्यापीठे **श्रीरामस्वरूपशास्त्रिण** आध्यक्ष्ये व्यासजयन्ती सम्मानिता।

**कलकत्ता**—श्रीसांगवेदविद्यालये श्रीमतां सप्ततीर्थ **रमेशशास्त्रिणां** सभापतित्वे श्रीवेदव्यासजयन्ती समभवत्। अनेके विद्वांसः, अतिथयश्च तत्रोपस्थिता आसन्। 'व्यासोच्छिष्ठं जगत्सर्वं' इति विषयमवलम्ब्याध्यक्षैर्व्याख्यानमक्रियत।

**जबलपुर**—श्रीगायत्रीसंस्कृतविद्यापीठभवने संस्कृतपरिषदो जबलपुर-शाखया व्यासजयन्ती समाचरिता। तत्र श्री पं. **कलिकाप्रसाददीक्षिताः** सभापतय आसन्। 'अधुनातनस्य भारतराष्ट्रस्याधःपतनस्य प्रधानं कारणं संस्कृतं प्रति जनताया उपेक्षा। संस्कृते खलु श्रीवेदव्यासवाल्मीक्यादिमेधाविभिः

सुसंस्कृतसमाजवादो वेदप्रतिपादितो निहितोऽस्ति। अतो हि संस्कृताध्ययनं समाजोद्धारायावश्यं कल्पते' इति विचारोऽध्यक्षैः प्रतिपादितः। तत्र प्रधानप्रवक्ता श्री पं. **सुन्दरशर्ममहोदय** आसीत्। प्रथमतो विद्यापीठस्य प्रधानाचार्यः **श्रीकाशीनाथशास्त्रिमहाशयः** स्वागतभाषणमकरोत्। अन्ते **श्रीबलरामशास्त्रिमहोदयो** धन्यवादानवदत्।

## भवने श्रीकृष्णजन्माष्टमी

८–९–६६ तमे दिनाङ्के भारतीयविद्याभवनस्य गीतामन्दिरे श्रीकृष्णजन्माष्टमी समपाद्यत। बहवो गण्यनागरिकास्तत्र समुपस्थिता आसन्। **कुलपतयः श्रीमुन्शीमहाशया** अपि समारोहे व्यराजन्त। सङ्गीतशिक्षापीठीयच्छात्राणां साध्यापकानां प्रार्थनागीतेन **श्रीभाईशङ्करपुरोहितानां** भगवद्गीतापारायणेन च सह कार्यक्रमस्यारम्भोऽभवत्। **श्रीसुशान्त बेर्नाजिना** स्वानुगामिभिः सह भजनगीतानि गीतानि।

कविः **श्रीकृष्णदासमनेकः** श्रीकृष्णजन्माष्टम्या महत्त्वं कीर्तनद्वारा अस्पष्टयत्। मनेकस्य कार्यक्रमात्पश्चात् **श्रीसुभासदेसाई–श्रीजसवन्त भावसार**–इत्येतौ गूर्जरभाषायां भजनगानान्यगायताम्।

श्रीमुम्बादेवीसंस्कृतमहाविद्यालयस्याध्यापकाश्छात्राश्च श्रीकृष्णजन्माष्टमीप्रार्थनागीतमगायन्। पूजा-प्रसादवितरणानन्तरं कार्यक्रमः समाप्तिमगात्।

## शतायुषः श्रीसातवलेकरमहाशयाः

'शतं जीव शरदो वर्धमानः' इत्याशीर्वदति मनुजकुलं भगवती श्रुतिः। परन्तु नाशिषोऽस्याः फलं सर्वे मानवा विन्दति। 'शतं शरदां' पश्यत्स्वपि न सर्वे वर्धमाना लक्ष्यन्ते। सन्ति केचनैव तादृशा महाभागाः कृतिनः पुरुषा ये श्रुतिमुपासमाना वर्धमाना लोकं च वर्धयन्तः शतस्य शरदां पारं यान्ति। एतादृशेषु महापुरुषेष्वन्यतमाः श्रीश्रीपाददामोदरसातवलेकरमहाशया' वर्तमानकाले वर्धन्त इत्यहो धन्या वयं भारते।

रत्नगिरिमण्डलान्तर्गते कोलागांव्नामके ग्रामे १९-९-१८६६ तमे क्रिस्ताब्दे महाशयानामेतेषां जन्माभूत्। प्रथमे वयस्येवैते श्रीमोक्षमूलरभट्टेन श्रीमद्दयानन्दसरस्वतीस्वामिना चात्यन्तं प्रभाविता अभूवन्। सातत्स्य महती श्रुतिसम्पत्तिरियं

सर्वैरपि स्वीकर्तव्येति तेषां मनस्यासीत्। अतस्तदर्थं प्रयतमानाः प्रथमतो महाराष्ट्रपत्रिकायां वेदमन्त्राणामर्थविवरणं प्राकाशयन्। तदातनांग्लशासनमेतन्नैवासहत। तेनैतत्कार्यं प्रतिरुद्धमभूत्।

प्रथमजागतिकयुद्धात्परं श्रीसातवलेकरमहाशयाः सतारामण्डलं गताः। तत्रत्यैः श्रीराजासाहेबमहाशयैरेतेषामाश्रयो दत्तः। अत्रैव कश्चन मुद्रणालयः स्थापितः। श्रीसातवलेकरमहाशयाः संस्कृतपण्डितानां साहाय्येन सार्थानां वेदग्रन्थानां मुद्रणं कृत्वा स्वल्पशुल्केन तान् सर्वग्राह्यान् व्यधुः।

द्वितीयजागतिकयुद्धानन्तरं चतुर्वेदात्मको ग्रन्थः केवलं पञ्चरुप्यकमूल्यो विक्रीतः। एतेनैते भारते सर्वत्र महत्वं समपादयन्।

श्रीसातवलेकरमहाशया एते चित्रकलानिपुणा अपि भवन्ति। J. J. School of Arts इति कलासंस्थातः स्वर्णपदकमप्येते लब्धवन्तः। सूरतप्रदेशे संस्कृतप्रचाराय तद्द्वारा वेदप्रचाराय महाशयैरेतैः स्वाध्यायमण्डलं च स्थापितम्। प्रतिवर्षमनेके विद्यार्थिनस्तत्र संस्कृतपरीक्षासु समुत्तीर्णा भवन्ति।

श्रुतिसेवापरायणैरेतैर्बह्वो ग्रन्था लिखिताः सन्ति। तेषु केचन :—

ऋग्वेद का सुबोधभाष्य, यजुर्वेद का सुबोधभाष्य, उपनिषद्भाष्यग्रन्थमाला, भगवद्गीता, रामायण, महाभारत।

एते महामहोपाध्यायवेदाचार्यादिबिरुदैरलंकृताः सन्ति। ऐषमस्तनस्य सेप्टेंबरमासस्यैकोनविंशतितमे दिनाङ्के श्रीश्रीपाददामोदरसातवलेकरमहाशयाः शतवार्षिका अभवन्निति सर्वेपि भारतीया वेदवाङ्मयसंपन्नास्तदनुरागिणश्च मोमुद्यन्ते। सर्वोऽपि भारतीयो महाशयेभ्य एतेभ्यः सर्वकालं कृतज्ञतामाविष्कुर्यात्। सम्प्रत्यस्मन्मध्ये ह्येतेषामवस्थितिमाकलय्य धन्यम्मन्यतामनुभवन्तो वयं पुनश्चैतेषां चिरायुषमारोग्यसौभाग्यं देहदार्ढ्यं च परमेश्वरोऽनुगृह्णात्विति तमेव करुणानिधानं प्रार्थयामहे।

## अन्तर्महाविद्यालयनाटकस्पर्धा

भारतीयविद्याभवनस्य कलाकेन्द्रेण प्रतिवर्षमन्तर्महाविद्यालयनाटकस्पर्धा समायोज्यते। ऐषमस्तन्यां स्पर्धायामेकादशभाषाणां नाटकानि समुपस्थितान्यासन्। ताश्च भाषाः—गुर्जर-महाराष्ट्र-हिन्दी-आंग्ल-तमिळ-मलयाळ-कोंकण-कर्णाटक-संस्कृत-वंग-पञ्चापाख्याः। तत्र प्रथमतो भिन्नानां भाषाणां पृथक्-

पृथग् विजयपारितोषिकाणि वितीर्णानि। अन्ते सर्वोत्तमनाटकस्य मुन्शीमहाविजय-पारितोषिकं प्रदत्तम्। अस्मिन्वर्षे द्वयोस्तुल्ययोग्यतावतोर्नाटकयोरिदं पारितोषिकं षण्मासात्मककालविभागेन विभज्य समर्पितम्।

स्पर्धायाः संक्षेपेणेतिवृत्तमित्थं :—

**गुर्जरभाषायाम्**—विल्सन्महाविद्यालयस्य 'ओळखान्' इति नाटकं विजय-पारितोषिकमलभत। आदर्शमहाविद्यालयस्य (ऐडियल् कॉलेज्) 'अँहि जे तार टूटचो छे' नाम नाटकं 'दामजीपुरुषोत्तमविजयपारितोषिकं' प्राप्तवत्।

**महाराष्ट्रभाषायाम्**—'जे. जे. इन्स्टिट्यूट ऑफ एप्लाइड् आर्ट' नामसंस्थायाः 'ब्रह्माण्डाची पोकळी आणि अवकाशाचा आकाशांतील पोळ' इति नाटकं विजय-पारितोषिकपात्रमभूत्।

**हिंदीभाषायाम्**—'आर्. डी. नेशनल् कॉलेज्' इत्यस्य 'मैं कौन हूँ' इति नाटकाय विजयपारितोषिकं वितीर्णम्।

**आंग्लभाषायाम्**—'गवर्नमेण्ट् डेण्टल् कॉलेज्' इति महाविद्यालयस्य 'विस्पर्'-इत्याख्यं नाटकं विजयपारितोषिकभागासीत्।

**तमिळभाषायाम्**—ए. एल. डहाणूकर महाविद्यालयस्य 'आर् वजहि' नाम नाटकं विजयपारितोषिकं प्रापत्।

**कन्नडभाषायाम्**—के.सी. महाविद्यालयस्य 'मदर्' नाम नाटकं विजयपारितोषिक-मलभत।

**वंगभाषायाम्**—खालसामहाविद्यालयस्य 'राजजातक' इति नाटकं विजय-पारितोषिकं विजितवत्।

संस्कृतभाषायां पारितोषिकविजेतृणां नामानि यथाधोनिर्दिष्टानि सन्ति :-

अत्र स्पर्धायै नाटकत्रयं समाविष्टमासीत्—मृच्छकटिकं, राजपुरुषः, असुर-निर्माणञ्चेति। महाविद्यालया यथाक्रमम्—जी. एस्. वैद्यकीयमहाविद्यालयः, सिद्धार्थशासनिकमहाविद्यालयः, मीठीबाईमहाविद्यालयश्च।

तत्रैते महाभागा निर्णायका आसन् :—

**श्री एस्. डी. कवीश्वर**

**श्री लक्ष्मीनारायण पाण्डेय**

**श्री सुब्रह्मण्यम्**

सर्वोत्कृष्टं पारितोषिक–जी. एस्. वैद्यकीयमहाविद्यालयः।
नाटकं–मृच्छकटिकम्।

प्रथमं पारितोषिकं– कुमारी पद्मा गुप्ते, जी. एस्. वैद्यकीयमहाविद्यालयस्य।
द्वितीयं पारितोषिकं– श्री बाल घाटे, सिद्धार्थशासनिकमहाविद्यालयस्य।
तृतीयं पारितोषिकं– श्री डि. वि. नायक, जी. एस्. वैद्यकीयमहाविद्यालयस्य।
श्रीमतीसरयूबाला खाण्डवाला
पारितोषिकं – कुमारी पद्मा गुप्ते।
योग्यतापत्रम् – कुमारी शैला वाकनिस्, जी. एस्. वैद्यकीयमहाविद्यालयस्य।
श्री प्रभाकर गोखले, सिद्धार्थशासनिकमहाविद्यालयस्य।

अवशिष्टासु भाषासु विजयपारितोषिकार्हाणि नाटकानि नासन्निति कृत्वा पारितोषिकाणि न वितीर्णानि।

'ब्रह्माण्डाची पोकळी....' इति महाराष्ट्रभाषानाटकं, 'ओळखान्' इति गुर्जरभाषानाटकं च मुन्शीमहाविजयपारितोषिकं षण्मासात्मककालविभागशः समलभेताम्।

पारितोषिकविजेतृभ्यो धन्यवादानर्पयन्तो वयमागामिनि वर्षे इतोऽप्यधिकसंख्यया नाटकानि स्पर्धायां प्रवेशं लभेरन्नित्याशां च व्यक्तीकुर्मः।

## महाभारतग्रन्थस्योद्घाटनम्

२२–९–६६ तमे दिनाङ्के पुण्यपत्तने भारतराष्ट्रपतिभिः सर्वपल्लिराधाकृष्णन्महाशयैर्महाभारतग्रन्थस्योद्घाटनमाचरितम्। ग्रन्थमुद्घाटयन्तो राष्ट्रपतयोऽवोचन् 'भारतवर्षस्यैकता न केवलं भूगोलविशेषेणापि तु महाभारतादिग्रन्थैः सम्पादिता।...यदा यदा वयं जगद्विचित्रव्यवहारसंभ्रान्तास्तदा विवेकालोकाय महाभारतमवलोकयामः।...प्रज्ञानिधिर्भारतम्...' इत्यादि

## वेदवाङ्मयसंरक्षणयोजना

वेदमूलो हि भारतीयधर्मः। निरपेक्षितधर्मराज्येऽस्मिन् भारतेऽधुनातनेऽधर्मप्रवणता जनानामेवमानां दरीदृश्यते। यदि भारतीयता संरक्षणीयाऽस्माभिस्तर्हि

वेदानां संरक्षणमनिवार्यम्। एतदेव मनसि निधाय राजस्थानीयसंस्कृतसंसद् वेदवाङ्मयस्य रक्षां, तस्य जनप्रियतां च साधयितुं स्तुत्यां योजनामेकामायोजितवतीति श्रूयते। संसदानया ग्रन्थालयः, वस्तुसंग्रहालयः, मन्त्राणां पाठस्य, वैदिकविधीनां चित्रपटनिर्मितिश्चेत्यादिकार्यक्रमो निर्वर्त्स्यते।

## राष्ट्रपतेः सम्मानपत्रभागिनः

वर्षेऽस्मिन्नपि अष्टौ प्राच्यपण्डिता राष्ट्रपतेः सम्मानपत्रपात्रतां गताः। ते–श्रीप्रतापराय मोहनलाल मोदी, डा. वा. वि. मिराशी, श्री कोलूरुसोमशेखरशास्त्री, श्री वि. आर्. श्रीनिवासताताचार्यः, श्रीविश्वबन्धुशास्त्री, श्री क्षेत्रेशचन्द्र चट्टोपाध्यायः–(एते षट् संस्कृतपण्डिताः) मौलाना अब्दुल्लमजीद दर्याबादी (अरबी), काजी सज्जदहुसेन (पर्श्यन्)। महाशयेभ्यो ह्येतेभ्योऽस्माकमभिनन्दनम्।

## राष्ट्रभाषायाः शास्त्रीयं लक्षणम्

प्रयागक्षेत्रे विश्वहिन्दुपरिषदङ्गत्वेन संस्कृतसम्मेलनमायोजितमासीत्। तत्र संस्कृतस्य राष्ट्रभाषात्वप्रतिपादनपरः प्रस्ताव श्री ल. म. चक्रदेवमहाशयैः प्रस्थापितः। डा. श्रीधरभास्करवर्णेकरमहाशयैस्सोऽनुमोदितः। त एव राष्ट्रभाषाया लक्षणं चतुर्षु श्लोकेषु विवव्रुः।

"यस्यामखिलराष्ट्रस्य सञ्चितं ज्ञानवैभवम्।
आत्मीयत्वं च सश्रद्धं राष्ट्रभाषेति सा मता॥ १॥

प्रादेशिकीनां भाषाणां सर्वासां जन्मदायिनी।
तथा पोषणकर्त्री च राष्ट्रभाषेति सा मता॥ २॥

अस्मिताखिलराष्ट्रस्य यस्यां सुप्रतिबिम्बिता।
सैव सर्वत्र लोकेऽस्मिन् राष्ट्रभाषेति सम्मता॥ ३॥

लक्षणं राष्ट्रभाषाया विमृश्यैतदशेषतः।
भारते संस्कृतं नाम राष्ट्रभाषेति निश्चितम्॥ ४॥

लक्षणमिदं सभाङ्गणगतैर्दशसहस्राधिकैः प्रतिनिधिभिः सहर्षमैककंठ्यमभिनन्दितम्।

## शोकसभा

श्रीवेंकटेश्वरदीक्षितानां निधननिमित्ता शोकसभा अगस्टमासस्य १६ दिनाङ्के भारतीयविद्याभवनस्य समागृहे समायोज्यत। अस्वास्थ्यहेतोः कुलपतयो मुन्शीमहाशयाः सभायां सन्निवातुमसमर्था आसन्। श्रीमती लीलावती मुन्शी सभाध्यक्ष्यं निरवहत्। प्रार्थनायाः परं श्रीमती मुन्शीमहाशया कुलपतीनां शोकसन्देशमवाचयत्। श्रीमन्तः—शंकरमठाध्यक्षः बि. नारायणस्वामी, भवनीय-कलामहाविद्यालयस्य प्रधानाध्यापकः पारीख, नवीन टि. खाण्डवाल, भाईशङ्कर पुरोहितः—इत्येते, दुःखानुभूतिं भाषणेन प्राकाशयन्। 'रघुपतिराघव राजा राम' इति गानेन सभा समापिता। दुःखसूचनाय सर्वे भवनीयविभागास्तद्दिने विरतकार्या आसन्।

० ० ० ० ० ०

भवनीयमुम्बादेवीसंस्कृतमहाविद्यालयेऽपि शोकसभा समायोजितासीत्। तत्र पण्डिताः, छात्राश्च श्रीदीक्षितानां पाण्डित्यस्वभाववैशिष्ट्यादिकमधिकृत्याभाषन्त।

० ० ० ० ० ०

९-९-६६ तमे दिनाङ्के भवनीयकलामहाविद्यालये—मुम्बईविद्वत्परिषद्, नागरीनिराजन्, शाकद्वीपीयसभा, मुम्बईआयुर्वेदसम्मेलन—एताभिः संस्थाभिः श्रीदीक्षितानां निधननिमित्ता शोकसभा सम्पादिता। तत्र प्रा. गौरीप्रसाद झालामहाशयोऽध्यक्ष आसीत्। तत्रैते महाशया अभाषन्त—श्रीमन्तः—नर्मदाशङ्कर-शास्त्री (प्रास्ताविकं), गौतमलाल दवे, रविशङ्करज्योतिषी, प्रा. नलिनभट्टः, वासुदेवविट्ठलव्यासः, विहारीलाल ज्योतिषी, प्रमोदचन्द्रशर्मा।

० ० ० ० ० ०

मुम्बईविश्वविद्यालयस्य स्नातककक्ष्यायां डा. पराडकरमहाशयः श्रीदीक्षितानां विषये भाषणमकरोत्। प्रार्थना, निमेषद्वयात्मकमौनञ्च तत्र समपद्यत।

० ० ० ० ० ०

२८-८-६६ तमे दिनाङ्के—श्रीशङ्करमठ—आस्तिकसमाज—दक्षिणभारतीयभजन-समाज—श्रीरामसच्चिदानन्दसमाज—दक्षिणभारतीयविद्यासंस्था – षण्मुखानन्दललित-कलासङ्गीतसभादिभिः संस्थाभिः श्रीदीक्षितानां स्वर्गमननिमित्ता शोकसभा (दक्षिण-भारतीयविद्यासंस्थायाः सभागृहे) समायोजि। भाषणकर्तृभिः श्रीदीक्षितानां बुद्धिप्राभवं, सहृदयत्वं च समुपावर्ण्येताम्।

० ० ० ० ० ०

२६-८-६६ तमे दिनाङ्के अहमदाबादनगरस्थश्रीस्वामिनारायणसंस्कृतमहा-विद्यालये श्रीकेशवराममहोदयानामाध्यक्ष्ये शोकसभा सम्पादिता। तत्र महापण्डितानां श्रीदीक्षितानां, श्रीजयदत्तशास्त्रिणाञ्च दुःखप्रदनिधनं प्रति शोकः प्रकटितः।

  

## श्रीवासुदेवशरण अग्रवाला दिवङ्गताः

वाराणस्यां संस्कृतानुसन्धानेन प्रथितयशसः पण्डितोत्तंसाः श्रीमन्तो वासुदेवशरण अग्रवाला जुलायीमासस्य २७ तमे दिनाङ्के दिवङ्गता इति खलु श्रुत्वा दूयते नश्चेतः। ते तु नैकग्रन्थानां प्रणेतारः, संस्कृताध्यापकाश्चासन्। एतेषां निधनेन संस्कृतप्रपञ्चस्य महती हानिः समभवत्।

## श्रीमथुराप्रसाददीक्षितानां स्वर्गमनम्

महामहोपाध्यायाः पण्डितमथुराप्रसाददीक्षिता वाराणस्यां २६-९-६६ तमे दिनाङ्के दिवंगता इति वार्तां दारुणां श्रुत्वा दूयामहे। ते तु संस्कृते प्रकाण्डपण्डिता आसन्। वाराणसेयसंस्कृतविश्वविद्यालयस्य ते गौरवप्राध्यापका अवर्तन्त। त्रिंशदधिका ग्रन्थास्तैर्ग्रथिताः सन्ति। उत्तरप्रदेशस्य शासनेन ५००० रुप्यकाणां निधिस्तेभ्यः समर्पित आसीत्। तद्राज्यपालैः श्रीविश्वनाथदासमहोदयैरपि स्वीयाद्वैयक्तिकनिधेः ५०० रूप्यकाणि तेभ्यः प्रदत्तानि। देहापायसमये ते ९२ वार्षिका आसन्। आत्मा तेषां शान्तिं शाश्वतीं निर्विशत्वित्याशास्महे।

## डा. सि. पि. रामस्वामि ऐयर्महाशयानां महाप्रस्थानम्

२६-९-६६ तमे दिनाङ्के लण्डनद्वीपे डा. सि. पि. रामस्वामि ऐयर्‌महाशयानां देहविपत्तिरभूदिति श्रुत्वा समग्रं भारतं मूढसञ्ज्ञमिवाभूत्। ते तु महाभागा विद्याशास्त्रप्रवीणाः राज्यविज्ञानविज्ञाः, वाग्मिधौरेयाश्चासन्। स्वीये ८२ तमेऽपि वर्षे ते दृढगात्राः अविशिथिलविचारसामर्थ्या आसन्। भाषणप्रदानायैव ते लण्डनद्वीपं गता आसन्। भारताद्राष्ट्रपत्यादयो महाशयाः शोकसंदेशान् प्रहितवन्तः।

एते ह्यैयर्महाशया आंग्लसंस्कृतोभयविद्याविशारदा अभवन्। भारतीयविद्याभवनस्यापि आधारस्तम्भरूपा अवर्तन्त। तेषामत्यन्तानवस्थितेर्भारतीयविचारप्रपञ्चो नष्टसम्पदिव प्रतिभाति।

आत्मायं स्वरूपानन्दमनुभूयादित्याशास्महे।

अक्टोबर्मासस्य प्रथमदिने भारतीयविद्याभवनस्य गीतामन्दिरे महाराष्ट्रराज्यपालानां चेरियन्महाशयानां सभापतित्वे श्रीरामस्वामिऐयर्महाभागानां निधननिमित्ता शोकसभा समायोजिता। तत्र श्रीरामस्वामिऐयर्महाशयानां बहुमुखीं प्रतिभामधिकृत्यैते महाशयाः भाषितवन्तः—श्रीमन्तः—के. एम्. मुन्शी—वै. वि. दीक्षित—ए. ए. मास्टर्—शान्तिलाल शाह—एम्. माधवन्ममहाशयाः। प्रथमतः श्रीमुन्शीमहोदयैः शोकप्रस्तावः समुपन्यस्तः। निमेषद्वयं मौनाचरणेन प्रस्तावः पारितः।

## शास्त्रीयपरीक्षाणां मान्यता

भवनेन प्रचालितासु शास्त्रीयपरीक्षासु शास्त्री-आचार्य-इति उपाधिपरीक्षे राजस्थान माध्यमिकशिक्षासमित्या (Board of secondary education, Rajasthan) एवं सम्मानिते भवतः ता. ३०-५-६४ दिनाङ्कितेन प्रस्तावेन ।

शास्त्री : माध्यमिकशालासु शिक्षकत्वप्राप्तये वेतनलाभाय च ।

आचार्य : उच्चमाध्यमिकशालासु शिक्षकत्वप्राप्तये वेतनलाभाय च ।

पूर्वमेव गुजरात-महाराष्ट्र राज्याभ्यां पूर्वमध्यमा-मेट्रिक, उत्तर-मध्यमा–ईंटरमिजिएट्, शास्त्री.–बी. ए., आचार्य.–एम्. ए.-परीक्षयोः साम्यमङ्गीकृतमासीत् । तदनुसारं शिक्षासंस्थासु शिक्षकत्वनियुक्ति वेतनक्रमश्च अनुष्ठीयेते ।

अद्य यावत् बहुत्र विशिष्य च गुर्जर-महाराष्ट्रप्रदेशयोः भवनीय पदवीप्राप्ता बहवो विद्वांसः शिक्षाकार्यं साधु सबहुमानं निर्वहन्ति ।

## भवनस्य शास्त्रीयपरीक्षाणां समयादि

भारतीय विद्याभवनेन प्रचाल्यमानाः, गुजरात-महाराष्ट्र-राजस्थानराजमान्याः, अन्याभिरनेकाभिः विद्यासंस्थाभिः सत्कृताः **शास्त्रीय-परीक्षाः** प्रतिवर्षमिव आगामिनि अेप्रिल मास-पूर्वार्धे भविष्यन्ति ।

विभिन्नानां परीक्षाणा**मावेदनपत्राणि** स्थापितेभ्यः केन्द्रेभ्यः, अधोनिर्दिष्टाद्वा संप्राप्य, यथावत्प्रपूर्य सशुल्कं केन्द्रद्वारा साक्षाद्वा कार्यालये प्रेषणीयानि दिसंबर मासस्य १५ तारिकान्तम् । तदनु मासं यावत् सविलंबशुल्कं आवेदनपत्राणि स्वीकरिष्यन्ते ।

अधिकं निम्नसंकेतेन पत्रं प्रेष्य ज्ञातुं शक्यते ।

**परीक्षासंपादकः**

शास्त्रीय परीक्षा विभागः,
भारतीय विद्या भवन,
बंबई ७

Regd. No. 9431/64.






# भारतीय विद्या भवन

# सिंघी जैन ग्रन्थमाला

## अद्यावधिमुद्रितग्रन्थनामावलि

१. मेरुतुङ्गाचार्यरचित प्रवन्धचिन्तामणि

२. उदयप्रभसूरिकृत धर्माभ्युदय महाकाव्य

३. कीर्तिकौमुदी आदि वस्तुपालप्रशस्तिसंग्रह

४. मेघविजयोपाध्यायकृत देवानन्दमहाकाव्य

५. यशोविजयोपाध्यायकृत जैनतर्कभाषा

६. हेमचन्द्राचार्यकृत प्रमाणमीमांसा

७. जिनेश्वरसूरिकृत कथाकोषप्रकरण

८. स्वयंभूविरचित पउमचरिउ भाग १–३

९. दामोदरकृत उक्तिव्यक्तिप्रकरण

१०. कौटिल्यकृत अर्थशास्त्र-सटीक.

सु. रामकृष्णन् द्वारा भारतीयविद्याभवन के लिए बम्बई से प्रकाशित व मुद्रित
तथा एसोसिएटेड एडवर्टाइजर्स एण्ड प्रिन्टर्स, तारदेव, बम्बई ३४ में मुद्रित ।

# संविद्

## नियमाः

१. 'संविद्' प्रतित्रिमासं ख्रिस्तमासस्य १५ तारिकायां प्रकाशमाप्स्यति । ते च मासाः अगस्त-नवम्बर-फेब्रुआरी-मे-इति भवन्ति ।

२. ग्राहकत्वं स्वीकुर्वाणस्य शुल्कं पूर्णवर्षस्यैव गण्यते । मध्येवर्षं ग्राहकत्वं भजतोऽपि समग्रवर्षस्यैव तद् भवेत् । तादृशाय ग्राहकाय वर्षस्य पूर्वभागे प्रकाशिता अङ्काः उपलब्धौ सत्यां प्रेषयिष्यन्ते । वर्षारंभः अगस्तमासात् गण्यते ।

३. ग्राहकः स्थानपरिवर्तनं चेत् कुर्यात् ग्राहकसंख्यामुल्लिख्य नवीनं संकेतं निर्दिशेत् कार्यालयाय ।

४. अंके यथासमयमप्राप्ते स्थानीयपत्रालये परिपृच्छ्य कार्यालयं निवेदयेत् ।

५. प्रकाशका लेखका वा संस्कृतमयीं नवीनां कृतिं द्विसंख्याकां प्रेषयेयुः, यदि ते समालोचनप्रकाशं कामयन्ते ।

## शुल्कनियमाः

संविदो वार्षिकं शुल्कं चत्वारि रूप्यकाणि, प्रत्यङ्कं च सपादरूप्यकं भवति ।

## लेखकेभ्यो विज्ञापनम्

लेखका अधोनिर्दिष्टान् तत्संबद्धान्वा विषयानाश्रित्य लेखान् प्रेषयितुं निवेद्यन्ते । ते यथा...

१. भारतीयसंस्कृतिसम्बद्धा– यथा धर्म, नीतिः, दर्शनम्, आगमाः, कलाः, काव्यानि, पुराणानि, इतिहासः इत्यादि ।

२. मौलिककृतयः– काव्यम्, नाटकम् निबन्धः, चरित्रवर्णनम्, बोधकथा, हास्यलेखः, हास्य-चातुर्यकण्डिका, व्यङ्ग्यलेखः– इत्यादि ।

३. आधुनिकराज्यचर्चा, विज्ञानप्रवाहाः, सामाजिकप्रश्नाः, अर्वाचीनकलाः, आधुनिकानि, प्राच्यानि, पाश्चात्यानि च दर्शनानि इत्यादि ।

४. संस्कृतेतरसाहित्यादुत्तमानां कृतीनां समग्ररूपाः साररूपा वा ललितया सरलया च शैल्या संस्कृतानुवादाः ।

५. प्राचीनाः कृतीः विषयान्वाऽऽश्रित्य विमर्शात्मकाः, संशोधनात्मकाश्च लेखाः ।

- लेखाः पत्रस्यैकस्मिन्नेव पार्श्वे स्पष्टाक्षरैर्लिखिता भवेयुः ।
- लेखप्राप्तेः सूचनाऽचिरात् प्रेषयिष्यते ।
- लेखकेभ्यः तत्कृतेः दश प्रतिकृतयः तत्कृतिसमन्वितोऽङ्कश्च प्रेषयिष्यन्ते ।
- यथासंभवं लेखभाषा लोकभोग्या सरला भवितुमर्हति ।

वर्ष : ३; अंक : २-४]

# संविद्

{ नवेम्बर १९६६
{ मे १९६७

[ संस्कृतत्रैमासिकी ]

कुलपति :
कनैयालाल मुन्शी

संपादक:
जयन्तकृष्ण ह. दवे

सहसंपादका:
एस्. सुब्रह्मण्य शास्त्री
भाईशंकर पुरोहित
सुरेश उपाध्याय

सहायक:
आतमाराम शास्त्री

प्रकाशक:
सु. रामकृष्णन्

कार्यालय:
भारतीय विद्या भवन,
मुंबई ७

शुल्कम्
वार्षिकम् रु. ४
प्रत्यङ्कम् रु. १.२५

अनुक्रमः पृष्ठम्

मुद्रणस्थानम्

एसोसिएटेड
एडवर्टाइजर्स एण्ड
प्रिन्टर्स, मुंबई ३४

# संविद्

आ नो भद्राः क्रतवो यन्तु विश्वतः ।

ऋग्वेद १.८९.१



## गणपतिं हवामहे

सदा बालरूपापि विघ्नाद्रिहन्त्री
महादन्तिवक्त्रापि पञ्चास्यमान्या ।
विधीन्द्रादिमृग्या गणेशाभिधा मे
विधत्तां श्रियं कापि कल्याणमूर्तिः ॥

*

रक्तं लम्बोदरं शूर्पकर्णकं रक्तवाससं
रक्तगन्धानुलिप्ताङ्गं रक्तपुष्पैः सुपूजितम् ।
भक्तानुकम्पितं देवं जगत्कारणमच्युतं
आविर्भूतं च सृष्ट्यादौ प्रकृतेः पुरुषात्परम् ॥



# सम्पादकीयम्

## संस्कृतभाषायाः अद्यतनपरिस्थितिः

संस्कारक्रमसम्पन्नामद्रुतामविलम्बिताम् ।
उच्चारयति कल्याणीं वाचं हृदयहारिणीम्॥
नूनं व्याकरणं कृत्स्नमनेन बहुधा श्रुतम् ॥

इति श्रीमद्रामायणगतानि श्रीरामचन्द्रस्य हनूमद्वचनमधिकृत्य प्रवृत्तानि वाक्यानि अस्या भाषायाः संस्कृतपदवाच्यत्वे निमित्तं निर्ब्रुवन्ति। अत्र हि व्याकरणशास्त्रेण प्रकृतिप्रत्ययविभजनादिसंस्कार-संस्कृतत्वादस्या इदं नामधेयं सम्पन्नमिति सुस्पष्टं विज्ञायते। पाणिनीये व्याकरणे छन्दोऽपरपर्यायस्य वेदस्य भाषाऽपरपर्यायस्य लौकिकसंस्कृतस्य च संस्कारः सम्पाद्यत इति वेदस्यापि लौकिकभाषाया इव संस्कृतपदवाच्यत्वं महतामनुमतमिति विज्ञायते । यत्तु मन्यते संस्कृतं इति नाम्नैव एतन्मूलभूता असंस्कृता काचन भाषा पूर्व-मासीदिति तत्तु न समीचीनतया प्रमाणपथमधिरोहति। यतः पूर्वं भाषा पश्चाद्व्याकरणप्रवृत्तिः इति हि सर्वैः अनुमतः पन्थाः; न पूर्वं व्याकरणं पश्चात् तदनुसारेण भाषणमिति। ततश्च पूर्वकालिका महर्षयः या सृष्टिकालमारभ्य प्रवृत्ता भाषा तस्या एव विविधानि व्याकरणानि रच-यित्वा संस्कारं सम्पादयामासुरिति तदनन्तरमेव चेमां संस्कृतपदेन व्यवजह्रुरिति च कल्पना ऋज्वी प्रामाणिकी च । जैमिनीयसूत्राणि व्याच-क्षाणेन आचार्यशबरस्वामिना वेदशब्दानामसंस्कृतत्वेन अर्थान्तरप्रतिपाद-

कत्वं शङ्कमानेन ग्रन्थादौ "य एव लौकिकाः शब्दास्त एव वैदिकाः त एव च तेषामर्थाः" इत्यादिना वेदशब्दानां संस्कृतशब्दाभिन्नत्वं तदर्थस्य लौकिकपदेन प्रतिपाद्यो योऽर्थः तदभिन्नत्वं च प्रत्यपादि। अन्यथा हि वेदार्थपरिज्ञानमस्माकमसम्भावितमेव स्यादिति।

इयं च भाषा महाभाष्यकारस्य भगवतः पतञ्जलेः काले आबालगोपं जनैः भाष्यमाणा आसीदिति तद्भाष्यादवगम्यते। तथा हि-अजेः व्यघञपोः इत्यस्मिन् सूत्रे तदीयं भाष्यम्ः—एवं हि कश्चिद्वैयाकरण आह। कोऽस्य रथस्य प्रवेतेति। सूत आह अहमायुष्मन्नस्य रथस्य प्राजितेति। वैयाकरण आह अपशब्द इति। सूत आह प्राप्तिज्ञो देवानां प्रियो न त्विष्टिज्ञः इष्यत एतद्रूपमिति। वैयाकरण आह अहो वयमनेन दुरुक्तेनबाध्यामह इति। सूत आह न खलु वेजः सूतः सुवतेरेव सूतः यदि सुवतेः कुत्सा प्रयोक्तव्या दुस्सूनेनेति वक्तव्यं इत्यादि। अत्र हि शाकटिकस्य संस्कृतभाषया व्यवहरणं सुशब्दापशब्दपरिज्ञानं इत्यादि इदमेव द्योतयति यत् रथ्याचारिणः साधारणजना अपि संस्कृताभिज्ञा आसन्निति। प्राक्तनानां राजकीयव्यवहाराणां संस्कृतप्रायत्वमित्यत्र प्राक्तनशिलालेखाः ताम्रशासनानि व्यवहाराध्यायस्य धर्मशास्त्रगतस्य न्यायस्थलेषूपयोगः इत्यादीनि बहूनि प्रमाणानि जाग्रति। काले गच्छति जनानामालस्यात् संस्कृताध्ययनवैरल्ये संजाते तत्तत्प्रान्तगता जनाः स्वस्ववासनानुसारेण संस्कृतपदानि विकृत्य व्यवजह्रुः। इत्थमेव च प्रान्त्यभाषा उत्पन्नाः। यूरोपीयभाषासु दृश्यमानानि संस्कृतच्छायापन्नानि पदान्यपि अस्मद्देशीयानां तत्तद्देशगतानां व्यवहरणेनैव तत्र तत्र प्रापितानि इत्यतः न तदर्थं इण्डोजरमन् भाषेति काचन भाषा नित्यानुमेया कल्पनीया।

यदुच्यते पाश्चात्यभाषासु कानिचित् पदानि संस्कृतच्छायानि अर्थान्तरे प्रयुज्यमानानि तासां असंस्कृतमूलत्वं व्यापयन्तीति, यतः अस्मद्देश एव संस्कृतपदत्वेन सम्मतानामपि पदानां भाषासु विभिन्नार्थत्वं

दरीदृष्यते यथा द्रविडभाषायां हरिणवाचिकुरङ्गपदं वानरे प्रयुज्यते गजवाचिकरटीतिपदं भल्लूके प्रयुज्यते। मीमांसायां च आर्यम्लेच्छाधिकरणे वेदगतपील्वादिपदार्थनिर्णये यत्र आर्यम्लेच्छयोः पदार्थे विप्रतिपत्तिः तत्र आर्यप्रसिद्धार्थग्रहणं तेषां शब्दैकसमधिगम्यधर्माधर्मयोरविप्लुतिलिप्सया शब्दार्थतत्त्वस्य नियमेन परिपालनात् इतरेषामतथात्वात् इत्यभ्यधायि । पिकादिशब्दार्थः आर्येषु अप्रसिद्धः म्लेच्छप्रसिद्धचैव निर्णेतव्यः इत्यपि तत्रैव निरटङ्कि। किं बहुना वैर् चोर् पाप् इत्यादीनां द्रविडप्रसिद्धानां संस्कृतपदत्वमेव रेफान्तत्वं परं तेषामुच्चारयितृप्रमादागतमिति भट्टपादाः प्रतिपादयन्ति ।

सेयं संस्कृतभाषा या उत्तमं गौरवितं च स्थानमन्वभूत् प्राक्काले, यामाश्रित्य भारतमण्डलस्य ऐकराष्ट्र्यमुद्घष्यते अधुनापि राज्यपालैः, यया भारतीयैः वैदिककर्मकलापः तीर्थस्नानसंकल्पादिकं च निर्वर्त्यते निखिलेपि भारतमण्डले, यस्यै स्पृहयन्ति रसिकोत्तमाः भूमण्डले सर्वेषु राष्ट्रेषु, यस्याः सकाशादेव व्याकरणादिनियमान् गृहीत्वा लौकिकप्रान्त्यभाषासु व्याकरणानि व्यरच्यन्त, यस्याः कोशः सर्वलौकिकभाषाकोशेभ्यः महत्तरः, यस्यामायतते मानववर्गस्य समीचीनमप्रतिबद्धं आत्मज्ञानं सेयं शासकानां हस्तं प्राप्य कष्टामवस्थां सम्प्राप्ता । यतो हि प्रान्त्यसर्वकाराः स्वस्वप्रान्त्यभाषाणां प्रामुख्यं सम्पिपादयिषवः हिन्दीमाङ्गरेजीं च परित्यक्तुमशक्नुवानाः तयोः द्वितीयतृतीयस्थाने दत्त्वा संस्कृते छुरिकां व्यापारयन्ति। ते हि एवं मन्यन्ते :— न संस्कृतभाषा अखिलभारतभाषात्वमर्हति तस्याः मृतभाषात्वात् तत्पठनस्य क्लेशसाध्यत्वाच्च, नापि आङ्गरेजी तथा, तस्याः विदेशीयत्वेन अस्मत्सम्मानानर्हत्वात् भाषाविषये विदेशपारतन्त्र्यं अस्मद्गौरवहानिश्च स्यादिति। नापि हिन्दी तथा, यद्यपि हिन्दी भारते इतरभाषाभाषिभ्यः अधिकैर्जनैः संभाष्यते तथापि तस्याः भारतभाषात्वे येषां हिन्दी मातृभाषा तेषां

गौरवाधिक्यं उद्योगेषु सौलभ्यं इतरेषां न्यूनतेति मन्यन्ते। अत एव इतरे "क्लृप्तानां विनिगमनाविरहे कल्प्यमन्यत् प्रसिद्धचतीति" न्यायेन आङ्ग्रेजीमपि भारतभाषां अङ्गीकर्तुमिच्छन्ति। निर्बन्धेन आङ्ग्रेजीं माणवकान् पाठयन्ति। परंतु अद्यतनमध्यसर्वकारा निर्बन्धेन हिन्दीमेव राष्ट्रभाषां करिष्यन्ति। एवं च मातृभाषा, आङ्ग्रेजी, देशैक्यसम्पादनाय हिन्दी इत्येवं भाषात्रयेण अवरुद्धे माणवकचेतसि संस्कृतस्य अवकाश एव दुर्लभः समजनि।

सर्वेषां माणवकानां हिन्दीपाठनेन तस्याः भारतभाषात्वसमर्थनेपि स्वारसिकं स्वाभाविकं च देशैक्यं न सम्पादितं भवेत्। निर्बन्धकृतस्य राष्ट्रैक्यस्य निर्वाहः परं किञ्चिद्दूरं सम्पादितो भवेत्। परं कालेन प्रान्त्यराष्ट्रियजनानां तत्पालकानां च परस्परं स्पर्धया स शिथिलीभवेत्। यूरोपदेशवत् भिन्नभिन्नानां स्वतन्त्राणां राष्ट्राणां सङ्घातः भारतं भवेत्। परस्परं कलहे युद्धे च पर्यवसिष्यति। यदि एतद्दोषपरिहाराय संस्कृतभाषायाः राष्ट्रभाषात्वं स्वीक्रियेत ततः भारतस्य संस्कृतभाषयैव सुस्पष्टायाः संस्कृतेरैक्यात् प्रान्त्यराष्ट्रियाणां कलहादिकं परिहर्तुं शक्येतापि। संस्कृतभाषा न मृता इदानीमपि बहुभिः तया व्यवहारात्, नापि क्लेशसाध्याध्ययना, शास्त्राध्ययने क्लेशोऽपि भाषापरिज्ञानस्य सुलभासाध्यत्वात्। परंतु अस्याः राष्ट्रभाषात्वं शासकाः नैव स्वीकरिष्यन्ति तेषां बाल्यतः आङ्ग्रेजीभाषाध्ययनप्रवृत्तत्वात् तद्वासनावासितत्वाच्च। यदि हिन्द्याः यत् स्थानं पाठशालासु इदानीं दीयते तदेव संस्कृतभाषायाः दीयेत, ततः विंशतिवर्षेभ्यः ऊर्ध्वं संस्कृतस्य राष्ट्रभाषात्वं संपादयितुं शक्येत। परंतु केवलं मनोराज्यमिदम्।

अस्यां दुस्स्थितौ भारतसंस्कृतेः तन्मूलभूतायाः संस्कृतभाषायाश्च संरक्षणं कथं स्यात्? तत्तद्ग्रामेषु नगरेषु च सायंप्रातःकालयोः बालकानां बालिकानां च संस्कृताध्ययनं कारयितव्यं पण्डितैः। तत्सम्बन्धी व्ययः गृहस्थैः मध्यसर्वकारेण च वोढव्यः।

एवमेवालोच्य भारतीयसंस्कृतिप्रचारणबद्धदीक्षैः मान्यतमैः श्रीमुन्शीमहोदयैः सरल-शास्त्रीय-संस्कृतपरीक्षाः नियमिताः। तदुपयोगिपाठ्यग्रन्थाश्च अल्पमूल्यप्राप्याः निर्मापिताः। कोविदान्तपरीक्षासु उत्तीर्णानां बालकानां विनाक्लेशं स्वयमेव रामायणमहाभारतादि संस्कृतग्रन्थपठने पाटवं तदर्थग्रहणं शास्त्राध्ययने अभिरुचिश्च सम्भवेत्। संस्कृतभाषा अस्मद्देशे सुरक्षिता भवेत्। अतः प्रार्थये प्रियपाठकान् यत्भवद्भिः अस्मिन् विषये नोदासितव्यम् अपितु बद्धपरिकरैः भाव्यं स्वाध्यायप्रवचने एवेति नाको मौद्गल्यः इति श्रुत्युक्तप्रकारेण संस्कृताभिज्ञैः तत्प्रचाराय सर्वोप्युपायः समादरणीय इति।



## विज्ञप्तिः

संविदोऽङ्कत्रयमत्र सम्पुटे प्राकाश्यं नीतम्। मुद्रणयन्त्रदोषादिहेतोरङ्का एते यथासमयं प्रकाशयितुं अशक्या अभूवन्निति विज्ञापयितुं लज्जामहे।

सम्पुटेऽस्मिन् पृष्ठसंख्या न्यूना वर्तते। किन्तु स्वल्पप्रमाणाक्षरमुद्रणेनाधिका लेखा अत्र प्रदत्ताः।



# विद्यामूर्तिः श्री सातवलेकरः

भाईशंकर पुरोहित

महापण्डितस्य **श्रीपाददामोदरसातवलेकरस्य** जीवितं विद्यावीरस्य परां कोटिमाटीकते।

उत्साहभरितेन मनसा, प्रत्यवायप्रतिकारप्रवणेन चेतसा, कल्याणमयीं कामपि प्रवृत्तिमालम्बमानो धैर्यधनः 'वीर' इति आभिजात्येन नाम्ना विभूष्यते। वीरस्यास्य चत्वारो भेदाः प्राचीनैराचार्यैः स्वीकृताः। युद्धवीर-धर्मवीर-दानवीर-दयावीरेति। वीरप्रकाराणामेषां दृष्टान्ता अपि सुप्रसिद्धाः। महाराजः प्रतापः छत्रपतिः शिवाजी च युद्धवीरस्य, युधिष्ठिरो महात्मा गांधीच धर्मवीरस्य, कर्णः भामाशा च दानवीरस्य, शिबिः आल्बर्टस्विझरश्च (जर्मनजातः आफ्रिकालोकानां परमसेवको वर्षात्पूर्वं दिवं गतो महात्मा) दयावीरस्य, दृष्टान्ता भवन्ति। आजीविनं प्रतिक्षणं च विद्याव्यासङ्गैककर्माणः, शारीरं मानसं च दुःखमविगणय्य भगवतीं सरस्वतीं परमेण प्रीतिभावेनानुपमेन च धैर्येण ये उपासते। तादृशाः पुरुषपुंगवा वीराख्यां स्वभावत एवार्हन्तीति 'विद्यावीर' इति पञ्चमो वीरप्रकारोऽवश्यमाद्दतव्यः। तादृशेषु वीरेषु **श्रीपाद सातवलेकरस्य** नाम प्रणवश्छन्दसामिव प्रथमायत इति दृढं प्रत्येमि।

## प्रवृत्तिबीजम्

श्रीसातवलेकरः मुंबापुरीस्थे 'जे. जे. स्कूल ऑफ आर्टस्' विद्यालये चित्रकलामभ्यस्यन् तारुण्ये राष्ट्रभक्तिभरितानां केषाञ्चिद्वेदमन्त्राणां मराठ्यामनुवादं प्रकाशयामास। मन्त्रगतां राष्ट्रभक्तिस्फूर्तिं पर्यालोच्य

* वेदान्तसाहित्याचार्यः शास्त्रीयपरीक्षामंत्री, उपप्रधानाचार्यः मु. सं. महाविद्यालये, सहसम्पादकश्च संविदः।

कदाचिदयमनुवादो लोकमानसे पारतंत्र्योन्मूलनाय विद्रोहबुद्धि जनयेदिति भावयद् आङ्ग्लशासनं श्रीसातवलेकरं, अनुवाद–प्रकाशकमूद्रकौ च कारागृहातिथीनकारयत् ।

**वेदवाङ्मयसेवा**

वेदमंत्राणामनुवादेऽपि यद्येतावान् प्रभावस्तर्हि वैदमंत्राणां साक्षात्प्रभाव: कीदृशो नु स्यादि ति कुतुहलाविष्ट: श्री सातवलेकर: समग्रतया - तान ध्यगिष्ट । अध्ययनरतस्यास्य वंशलब्धा वे दनिष्ठा शतगुणा समकाशत । अत: परं वेदप्रचार एव मे परं कर्तव्यमिति च प्रतिजज्ञे श्री सातवलेकरः । तदर्थं पूर्वं वेदान् हिन्द्याऽनूद्य 'पंचाप' प्रान्त उत्तरे च भारते ग्रामाद्-गामं नगरान्नगरं च पर्य्यंटितम् । तत्र खलु श्री दयानंदस्वामिनः प्रयासै:-पूर्वमेव वेदनिष्ठा संधुक्षिताऽवर्तत । अत: सातवलेकरस्य कार्यं सुकरमभूत् । अनेकासु सभासु वदेस्यौजस्विन अंशान् व्याखानै: प्रकाशयन् श्री सातवलेकर: भारतीयानां स्वविद्यासु नवीनां स्फूर्तिमुदभावयत् । तदनु मराठ्यामपि वेदानुवादा: कारिता: प्रकाशिताश्च । वेदसंदेशं ग्रामं ग्रामं जनं जनं च प्रापयितुं वैदिकधर्म: पुरुषार्थ: इति च मासिके प्रकाशिते । एतत्सर्वं महा राष्ट्रे 'औंध' नगरे औंधनरेशस्य साह्येन संपाद्यते स्म । समग्राणां वेदानां हिन्द्यनुवाद: रूपञ्चभी रुप्यकैरेव जनसाधारणेन लभ्योऽभवत् श्री सातवले -करोद्यमेन । श्री सातवलेकरस्य वेदवाङ्मयप्रकाशनप्रकृत्ति: श्री दयानंद मोक्षमुलरयोर्दृष्टान्तेनापि प्रोत्साहिताऽभूत् । तयो: परमयमेव च वेदप्रचारकेषु सर्वोत्तम इति गण्यते ।

**विविधप्रकाशनानि**–वेदानामिव रामायण-महाभारतादीनामनुवादा: प्रकाशिता: । तत्रापि श्रीमद्भगवद्गीताया: 'पुरुषार्थबोधिनी' इत्थन्वर्थनाम्नी विस्तृता टीका पण्डितश्रेष्ठस्यास्य पुरुषार्थं साधु प्रकाशयते ।

८२ वर्षस्को जनश्चेज्जीवति सुखं निवृत्तिमेव संश्लिषेत् । किन्तु

तद्वयस्को महाकर्मा सातवलेकरः औधं विहाय गुजरातस्य दक्षिणे भागे 'पारडी' स्थानं नवीनमेव प्रवृत्तिनीडमकल्पयत् । तत्र स्थितेन च पूर्वप्रवृत्तिभिः सह 'संस्कृतस्वयंशिक्षक' इति श्रेण्या चतुर्दश ग्रंथा रचिताः । यानाश्रित्य सामान्योऽपि जनः स्वयं संस्कृतभाषामधीयीत । भारतीय-संस्कृतेः परमो निधिः संस्कृतमिति दृढं विश्वसिति पण्डितश्रेष्ठः । अतस्तेन तत्प्रचाराय सर्वत्र देशभागेषु सरलसंस्कृतपरीक्षाः प्रवर्तिताः । स्वयं च तत्र तत्र परिश्रम्य लोकेषु संस्कृतप्रेम समुद्बोधितम् । प्रवृत्तिरियं भारताद्बहिरपि विस्तारिता श्रीसातवलेकरेण ।

**लौकिकीप्रवृत्तिः**

विद्यायामिव कलायामपि पूर्वप्रीतिः परिपालिताऽभवत् । अथापि '**नायमात्मा बलहीनेन लभ्यः**' इति श्रुतिवाक्ये सर्वात्मना विश्वसन् श्री सातवलेकरः सूर्यनमस्कार-आसन-प्राणायामेति विविधैरुपायैः शरीर-दार्ढ्याय लोकान् स्वदृष्टान्तेनोपादिशत् । अहमदाबाद-आर्यसमाज भवने च वर्षाणि यावत्स्वयं लोकानशिक्षयदासनादिकम् । अद्य शततमे वर्षे वर्तमानोऽप्ययं स्वास्थ्योत्साहवता विग्रहेण यूनोऽपि लज्जामापादयति, प्रतिदिनञ्च द्वादशप्रायाः घण्टा उद्यमैर्यापयति ।

'**आशिष्ठो बलिष्ठः**' इति श्रुतिघोषिता आशानिष्ठा मूर्तिमतीव लक्ष्यते श्री सातवलेकरे । विधौ प्रतिकूलतामुपगतेऽपि न कदापि व्यामोहः स्पृशति श्रद्धाधनममुम् । तादृशे काले '**निमित्तमात्रं भव सव्यसाचिन्**' इति गीतावाक्यं स्मरतोऽस्य चेतः पुनः प्रयत्नाय प्रद्योतते । हास्यौषधेन च निरुत्साहरोगानुत्सारयितुमतिकौशलमेतस्य ।

'**शतं जीवेम शरदः**' भवतीयं नः प्रार्थना । 'शतायुर्वै पुरुषो भवति' इति प्रसिद्धिश्च जागर्ति । पुरुषायुषमिदं प्राप्तवन्तं श्री सातवलेकरं कया प्रार्थनया योजयेम ? भगवत्याः सरस्वत्याः प्रियपुत्रस्यास्य, भगवन् ! '**द्विशतं जीव शरदः**' इत्यभ्यर्थनयैव संभावनं युक्तरूपं पश्यामः ।





# भारतीयसंस्कृतौ रामायणस्य प्रभावः

## शंकर प्रसाद बन्दोपाध्यायः*

भारतीया संस्कृतिः सुसमञ्जसं प्रकाशतेऽस्मिन् रामायणमहाकाव्ये। अस्मिन् काव्ये भारतीयसंस्कृतेर्विभिन्ना दिक् यथा सुसंहतरूपेण उज्जलरूपेण च चित्रिता न तथा अन्यत्र कुत्रचिदपि विद्यते । रामायणमहाकाव्यं न केवलं भारतीयां संस्कृतिं साधु प्रकाशयति अपि तु अनन्तकालं यावत्तां नियन्त्रयति। भारतवर्षस्य व्यक्तिजीवनं, गृहस्थजीवनं समाजजीवनं तथा राष्ट्रजीवनं रामायणस्य आदर्शेनैव बहुदिवसादेव नियन्त्रितं भवति। पृथिव्याः अन्यस्य कस्यचिद्देशस्य जातीयजीवनं एकेन काव्यग्रन्थेन एतादृशं परिपूर्णभावेन प्रकाशितं नियन्त्रितञ्चाभवदित्यहं न जाने। अस्य महाग्रन्थस्य आख्यानोपदेशादयः भारतवर्षस्य विपुलजनतासु परिव्याप्ताः विद्यन्ते। यथा इलियड्-उडिसीति महाकाव्यद्वयं प्राचीनग्रीस्देशस्य हृत्पद्मसम्भवं हृत्पद्मवासि च तथा अस्मद्देशेऽपि रामायणंमहाभारतं चेति महाकाव्यद्वयं देशस्य निगूढान्तस्तलादुत्सारितं सत् चिरकालं देशवासिनां हृत्पद्मं परिप्लवते। अस्माकं जातेः या साधना, या च आराधना, यश्च सङ्कल्पस्तत् सर्वमस्मिन् महाकाव्ये शाश्वतकालमहिम्ना विधृतं विद्यते । अत एवायं ग्रन्थो भारतीयजनगणानां सकाशे आदर्शस्थानीय एव ।

अखिलकविकुलनिकषायमाणो विश्वकविः रवीन्द्रनाथः रामायणस्य आलोचनप्रसङ्गेन प्राचीनसाहित्यग्रन्थे एवमुक्तवान् यत्– "इदमेव रामा-

*माणिक्यरामचतुष्पाठी, अलिगंज, मेदिनीपुरम्, पश्चिमवङ्ग ।

यणस्य प्रधानं विशिष्टत्वं यदिदमस्माकं गृहस्य कथामेवात्यन्तबृहद्रूपेण प्रकाशयति"। अस्माकं गृहस्थजीवनस्य स्त्री-पुत्र-पितृ-मातृ-प्रभृतिपरिजनान् केन्द्रीकृत्य यद्विरह-मिलनं, या च प्रीति-भक्ति-श्रद्धा प्रतिनियतं स्फुरति तदेवोपजीव्येदं महाकाव्यं विरचितम्। अत एव वत्सरात् परं वत्सरोऽत्येति, समाजजीवने च विभिन्नप्रकारा आघातसंघाताः संघटन्ति, किन्त्विदं महाकाव्यं अविकृतरूपेणैव भारतीयजनचेतांसि प्रभावयति। रामचन्द्र इवादर्शो नृपतिः, लक्ष्मण इवानुगतो भ्राता, सीतेव पतिव्रता नारी, हनुमानिवादर्शः प्रभुभक्तः, सुग्रीव इव परोपकारी सुहृत्, दशरथ इवादर्शः पिता, कौशल्येव जननी निरन्तरं भारतीयाननुप्राणयन्ति। महर्षिणा वाल्मीकिना रामायणस्य बालकाण्डे चिरस्थायित्वरूपा भविष्यद्वाणी उक्ता–

यावत् स्थास्यन्ति गिरयः सरितश्च महीतले।
तावद्रामायणकथा लोकेषु प्रचरिष्यति॥

उच्च-नीच-धनि-निर्धन-राजपुत्र-कृषकपुत्रनिर्विशेषेण रामायणी कथा जनसाधारणेषु परिव्याप्ता तिष्ठति। स्मरणातीतकालादद्यावधि रामचरितं सम्पदि विपदि च जनैः स्मर्यते। रवीन्द्रनाथेनोक्तम् प्राचीनसाहित्यग्रन्थे–"अतः खलु शताब्द्याः परं शताब्दी गच्छति किन्तु रामायण-महाभारतयोः स्रोतः भारतवर्षं लेशमात्रमपि न शुष्यति। प्रतिदिवसमेते महाकाव्ये प्रतिग्रामं प्रतिगृहञ्च पठ्येते–वणिज आपणात् राज्ञः प्रासादपर्यन्तमपि सर्वत्रैवैतयोः समानः समादरः। धन्यं ते कवियुगले, ययोरभिधानं कालस्य महाप्रान्तरवक्षसि विलीनं, किन्तु ययोर्वाणी अद्यापि बहुकोटिनरनारीणां द्वारे द्वारे अजस्रधारया शक्तिं शान्तिं च वहति, अतिप्राचीनशताब्दीनां फलिमृत्तिकां अहरहः आनीय अद्यापि भारतवर्षस्य-चित्रभूमेः उर्वरतां सम्पादयति।"

(अनुवादः–प्राचीनसाहित्यम्–पृ० ३)

  

रवीन्द्रनाथस्य भावदृष्टचा रामायणं न केवलमेकं महाकाव्यं कवेर्भावविलासविशेषो वा अपि तु इदं महाकाव्यं भारतवर्षस्य शाश्वतकालस्य महानितिहासविशेषः। अन्यथायं महाग्रन्थः शताब्द्याः परं शताब्दीं व्याप्य भारतवासिनां हृदये अकुण्ठधारां भक्तिं प्रीतिं श्रद्धाञ्चाकर्षितुं न क्षमते। रामायणं न काल्पनिकं अपितु परमं सत्यवस्तु, अतः कारणादेव भारतीयजनचेतसि रामायणं अनन्यसाधारणमर्यादायां सुप्रतिष्ठितं विद्यते।

साहित्यसमालोचकेन मेक्डोनाल (Macdonell) महोदयेनापि संस्कृतसाहित्येतिहासग्रन्थे उक्तं यत्–संस्कृतसाहित्यस्य न कापि सृष्टिः रामायणवद् अद्यापि जनप्रियतामापद्यते। (History of Sanskrit Literature. p.–266).

भारतवर्षस्येतिहासस्य उक्तरूपेणापि रामायणस्य महती उपयोगिता विद्यते। मौर्यपूर्वकालाद् मौर्योत्तरकालपर्यन्तं सामाजिकविवर्तनस्यैको विपुल इतिहासः रामायणकाव्ये सुसंरक्षितोऽस्ति।

संसारे किमपि काव्यं महाकाव्यं वा लोकप्रियतायां रामायणस्य समतां गन्तुं न क्षमते। निर्माणकालादेव खल्वेतद्रामायणं सहृदयवतां काव्यरसरसिकानां हृदयानि आकर्षति। इदमेव रामायणमनुस्मृत्य परवर्तिकाले विशालाः साहित्यसृष्टयः जाताः। अश्वघोष-भास-कालिदास-भवभूति-कुमारदास-प्रभृतयः यशःसुधाधवलीकृतदिगन्तरालाः महाकवयो रामायणकथामनुस्मृत्य संस्कृतभाषया अमृतवर्षिलेखनीप्रसृतान् काव्यादीन् विरचय्य आनन्दरसेन काव्यपाठकानां हृदयमभिप्लवन्ते वर्त्तमानेऽपि समये। ख्रिष्टीयप्रथमशतके जैनकविना विमलसूरिणा रामायणकथामुपजीव्य "पउमचरिआ" नामको ग्रन्थो विरचितः। इन्दोचीन-जावा-मालय-प्रभृतिदेशेष्वपि रामायणस्य लोकप्रियतायाः परिचयः प्राचीनतथ्यानुसन्धित्सुभिः प्राप्तः। यवद्वीपे एकस्मिन् शिवमन्दिरे विष्णुमन्दिरे च शिलासु उत्कीर्णाः रामायणवृत्तान्ताः प्रत्नतत्वविद्भिः प्राप्ताः। एतेषां देशानां साहित्यमपि रामायणकथां नितरां प्रभावयति॥



# सीतारावणसंवादझरी

वि. कृष्णस्वामी अय्यंगार*

'सीतारावणसंवादझरी' नामायं ग्रन्थः मैसूरदेशवासिना चामराजनगररामाशास्त्रिणा रचितः प्रथते। अस्मिन् ग्रन्थे एकोनषष्टिसंख्यानि शब्दचमत्कारभरितानि गम्भीररमणीयार्थानि च पद्यानि उपलभ्यन्ते। अशोकवने राक्षसीमध्ये वर्तमानां सीतामालोक्य शिंशपावृक्षशाखानिषण्णो हनूमान् कथमेतया सह संभाषेयेति विचारयन्नतिष्ठत्, तत्रान्तरे सपरिवारो रावणः सीतामुपसृत्य तां विविधाभिरुक्तिभिर्वशीकर्तुमयतत। रावणः स्वोक्तिषु रामं यथेच्छं निनिन्द, आत्मानं च प्रशंसस। परंतु पतिव्रता सीता तस्योक्तिभिर्न प्रालोभ्यत, सा पुनस्साध्वी पतिनिन्दामसहमाना रावणस्य च दोषान्प्रकाशयितुमिच्छन्ती एतादृशमुत्तरं ददौ, यस्य श्लेषमहिम्ना द्वावर्थौ बभूवतुः। प्रथमस्तावदर्थः पतिव्रतास्वभावानुगुणतया 'ईदृशं वचनं मा वादीः, अलमनेन' इत्यादिरूपः सर्वैरपि ज्ञायते। द्वितीयस्तु निगूढः सूक्ष्मदर्शिभिरेव वेद्योऽर्थः "तव उक्तौ अस्य वर्णस्य स्थाने एतं वर्णं निवेशय, इमं वर्णं विलोपय, अमुं वा वर्णमादौ संयोजय" इत्येवंरूपः, रावणोक्तिषु कस्यचिद्वर्णस्य लोपमादेशमागमं वा विधत्ते। एतदनुसारेण कृते वर्णपरिवर्तने सैव रावणोक्तिः संप्रति रामस्य प्रशंसायां

* एम. ए. पिएच. डि. हिन्दी विभाग, द. भा. हि. प्र. सभा, मद्रास.



रावणस्य च निन्दायां पर्यवस्यतीति चमत्कारकारी एष शब्दविन्यासः। एवं सीतया उभयार्थकैः प्रतिवचनैः प्रत्याख्यातोऽपि रावणः तस्याः उत्तरे निगूढमर्थान्तरमजानन् यदा तु पतिव्रताकर्णारुन्तुदवचनोपन्यासात् न विरराम, तदा अतिस्पष्टैरसंदिग्धार्थकैः शब्दैः सीता तस्योक्तिषु वर्णलोपं विधाय तासां स्वाभिमतमर्थं साधयामास। ततोऽयं लज्जितस्तिरस्कृतो रावणस्तां तर्जयित्वा गृहं न्यवर्तत। हनूमांश्च इमं सीतारावणसंवादं साकल्येन श्रुत्वा मेधावितया च मनसि सम्यगवधार्य, कृतकार्यो लङ्कातः प्रतिनिवृत्तः रामाय तं सर्वमावेदयामास। एवमयं ग्रन्थः सीतारावणसंवादरूपः कविना न्यबध्यत। तदाह–

इत्यूनां षष्टिमेकेन पद्यानि पवनात्मजः।
अपि रामाय विदुषे विवृण्वन्हृषितोऽब्रवीत्॥

[सीतारावणसंवादझरी, श्लोकः–७६] इति। अस्मिन् ग्रन्थे आहत्य १०८ श्लोकाः सन्ति। तत्र प्रथमे षोडश श्लोका भूमिकामारचयन्ति। तदनु एकोनषष्टिः पद्यानि सीतारावणयोः संवादं सचमत्कारमुपस्थापयन्ति। ततो रामेण रावणस्य पराभवः, सीताप्राप्तिश्च विंशत्या श्लोकैर्वर्णयिष्यते। पश्चाच्च सप्त श्लोकाः रामस्याभिषेकान्तं वृत्तान्तं प्रकाशयन्ति। अन्ते च पञ्चभिः पद्यैः कविः किंचित् स्वकीयं विज्ञापयति। एष ग्रन्थस्य विषयनिर्देशः।

अयं ग्रन्थकारः कस्मिन्वर्षे उदभूत्, कुत्र कथं बाल्यं यौवनं वा यापयामासेत्यादिकं वृत्तमन्विष्यन्तोऽपि न लभामहे। अन्तःसाक्ष्यादेतावत्तु जानीमो यदसौ सुगृहीतनाम्नां महाविदुषां कुले जन्म लेभे। अस्य पिता श्रीवेंकटरमणशास्त्री मैसूरदेशस्थे श्रीशंकरभगवत्पादैः प्रतिष्ठापिते श्रृङ्गगिरि (श्रृङ्गेरीति लोकप्रसिद्धं रूपम्) शारदापीठे चिरमुवास। अस्य ज्येष्ठो भ्राता श्रीमान् श्रीकण्ठशास्त्री नानाशास्त्रपारंगतो बभूव, येन रचिता 'धातुकारिका, धातुरूपप्रकाशिका' इत्यादयो ग्रन्थाः

तस्य पाण्डित्यं प्रमाणयन्ति। पित्रा भ्रात्राचार्यं ग्रन्थकारोऽपि विद्यासु सम्यग् विनीतः प्राज्ञगोष्ठीगरिष्ठतां प्रापेति तर्कयामः। यद्यपि विनयोक्तिनिपुणोऽसौ कविर्निम्नाङ्किते पद्ये, "तर्कव्याकरणादिषु क्वचिदपि प्रज्ञाविशेषाद्यशो नैवाप्नोद्विदुषां वरस्य जगति ख्यातस्य पुत्रोऽपि यः। व्यर्थं हन्त स चामराजनगरीरामोऽजनिष्टाथवा सीतारावणवादझर्यवतरेत्कस्मादतस्माद् भुवि ॥

(सीतारावणसंवादझरी, श्लोकः—१०८) इति आत्मनः शास्त्रेषु विशेषेण प्रवेशं परिचयं वा न्यषेधत्, तथापि अयं ग्रन्थ एवास्य असाधारणं शास्त्रज्ञानमावेदयति। एष मैसूरमहाराजस्य श्रीकृष्णराजेन्द्रमहाप्रभोरास्थानपण्डितेष्वन्यतमः, मैसूरनगरे स्थापिते राजकीयसंस्कृतमहाविद्यालये अध्यापकश्च बभूव, इतोऽधिकमस्य कवेर्जीवनवृत्तान्तं कुत्रापि न लभामहे।

कदाचिदसौ पण्डितसमाजे कंचित् प्राचीनतापक्षपातिनं विद्वांसं, "भवित्री रम्भोर्वित्यादि पद्यतुल्यमेकमपि पद्यं चमत्कारपूर्णमाधुनिकाः संस्कृतज्ञा न प्रणेतुं शक्नुवन्ती" त्यधिक्षिपन्तं शुश्राव। इदं तावत्प्राचीनं पद्यमत्र उदाहरणम्:—

"भवित्री रम्भोरु त्रिदशवदनग्लानिरधुना
स मे रामः स्थाता न युधि पुरतो लक्ष्मणसखः।
इयं यास्यत्युच्चैर्विपदमधुना वानरचमूः।
लघिष्ठेदं षष्ठाक्षरपरविलोपात्पठ पुनः ॥"

अस्मिन्पद्ये आद्यास्त्रयो पादा रावणोक्तिरूपाः सन्ति। स हीत्थं कथयति— "हे रम्भोरु सीते, अधुना समरे मयि विजयमाने त्रिदशानां देवानां मुखकान्तिः क्षयमेष्यति। तव पतिरसौ रामः सभ्रातृकोऽपि मे पुरः स्थातुमपि न शक्ष्यति। तस्य साहाय्यं कर्तुमागता चैषा वानरसेना महतीं विपदं यास्यती'ति। सीता तु प्रत्युवाच— 'अरे नीच, इमामेवोक्तिं प्रति-

  

पादं सप्तमाक्षरं लोपयित्वा पुनः कथये'ति सप्तमाक्षरलोपे कृते रावणस्योक्तिरित्थं पर्यवस्यति–

" भवित्री रम्भोरु दशवदनग्लानिरधुना
स मे रामः स्थाता युधि पुरतो लक्ष्मणसखः।
इयं यास्यत्युच्चैः पदमधुना वानरचमूः " इति।

तथा च, ' हे सीते, अधुना समरारम्भे एव दशवदनस्य मम हर्षक्षयो भविष्यति। लक्ष्मणेन सहितस्स रामो हि मया योत्स्यते। अत एव इन्द्रादिजेतुरपि मम रामात्पराभवमाशङ्कमानस्य ग्लानिरुत्पत्स्यते। अद्य वानराणां सेनापि राक्षसान् विजित्य महत् पदमवाप्स्यती"ति रावणेन विवक्षितस्य सर्वथैव प्रतिकूलमर्थान्तरं प्रतीयते। एष वर्णलोपकृतोऽर्थभेद एवात्र चमत्कारमूलम्। एतादृशानि पद्यानि दुष्कराणि; आधुनिकाः संस्कृतज्ञाः स्थूलबुद्धयो हीदृशानि पद्यरत्नानि निर्मातुं न प्रभवन्तीति स विद्वत्समाजमधिचिक्षेप। एतं चाधिक्षेपमसहमानोऽयं ग्रन्थकारस्तस्मिन्नेव क्षणे 'एतादृशानि गूढार्थगर्भितानि शतं पद्यानि रचयिष्यामी'ति प्रतिज्ञामकरोत्। किन्तु कृतप्रतिज्ञोऽपि उपर्युक्तशब्दार्थचयनाय प्रयस्यन्नपि शतं श्लोकान् निर्मातुं न शशाक। त्रिंशद्वर्षकाले केवलं पञ्चाशत् पद्यानि प्राणैषीत्। भवित्रीत्यादि पद्ये सीतायाः प्रतिवचने श्लेषो नास्ति। एषु तु पञ्चाशति पद्येषु सीताया उक्तिरर्थद्वयगर्भा प्रकाशते। द्वितीयो निगूढोऽर्थं एव रावणोक्तौ वर्णलोपादिकं किमपि परिवर्तनं सूचयति। अतश्च नव पद्यानि तादृशान्यपि कविरयं रचयामास, येषु सीताया उक्तिरेकार्था स्पष्टैः शब्दैर्वर्णलोपमेव विदधाति। तथापि प्रतिज्ञाया अनिस्तारात्, " यदि कश्चिदवशिष्टानि पञ्चाशत् पद्यानि रचयित्वा मम प्रतिज्ञामिमं ग्रन्थं च युगपत्पूरयिष्यति तर्हि तस्मै सहस्रं नमांसि करिष्यामी"ति कविराह।

" अन्यूनैः शतकात्कृतिः स्वयमियं गूढार्थपद्यैर्युता
कर्तव्येति ससंविदप्यतिचिरं श्रान्तो मतिक्षोभतः।

विश्रान्तोऽस्म्यवशिष्टमर्धशतकं संग्रथ्य मत्संविदा
सार्धं यः परिपूरयेत्कृतिमिमां तस्मै सहस्रं नमः।
भवित्री रम्भोर्वित्यनभिनवपद्यं यदि ह त-
द्विधं पद्यं त्वेवासुकरमिति कस्यापि वचसा।
दशास्योक्ति-अङ्घ्रि क्षितिदुहितृवागन्त्यचरण-
स्फुटैकार्थं चोक्तं सुललितमिह श्लोकनवकम् ॥"

(सीतारावणसंवादझरी, श्लोकौ १०४–१०५)

इति ग्रन्थकारस्तमिममर्थं स्पष्टीचकार।

सीतायाः प्रवृत्ति पृच्छन्तं रामं हनूमान् सीतावृत्तान्तकथनेन तोषयामास। रामश्च 'मम प्रिया कथंशीला, स च रक्षोऽधम; किंवृत्त' इति पप्रच्छ, तदा हनूमान् सीतायाः शीलं रामभक्ति दृढतां च प्रतिपादयितुं, श्रुतपूर्वं मनसि अवधृतं च इममेव सीतारावणसंवादं रामस्य पुरोऽन्ववादीदिति कविर्भूमिकां निबध्नाति। तदाह–

"स च श्रीरामचन्द्रेण परिपृष्टोऽनिलात्मजः।
व्यजिज्ञपत् किमुक्तेन बहुना रघुपुंगव ॥
यत्सौशील्यं जनकदुहितुर्यस्त्वयि प्रेमभूमा
यस्त्वच्छौर्यप्रणयगरिमा याप्यवज्ञा दशास्ये।
या चाहन्ता निशिचरपतेस्तत्समस्तं व्यनक्ति
प्रत्यक्षं मे रघुवर तयोः संप्रवृत्तो विवादः ॥

(सीतारावणसंवादझरी, श्लोकौ–११–१२) इति। तदस्मात् ग्रन्थात् कानिचित् पद्यानि आदाय तेषामर्थतः शब्दतश्च सौन्दर्यं परीक्षामहे।

(१) परिक्षीणालस्यः समरभुवि रक्षःकुलपतिः
सलज्जः स्वस्तुत्याममलहितमार्गैकपथिकः।

  

प्रणम्रस्त्रीलभ्यः सुमुखि विलसत्कीर्तिरिति च,
श्रुतो नाहं किं, रेऽधम मुहुरलं त्वां श्रुतवती ॥

(सीतारावणसंवादझरी, श्लोकः–१७)

अत्र चतुर्थपादे 'श्रुतो नाहं किं' मित्यन्तं रावणस्य वचनम्। स ह्येवमात्मानं प्रशंसति–"समरे मम आलस्यं नास्ति। राक्षसानां कुलस्याहमेव नायकः। आत्मप्रशंसायामहं लज्जे, तथापि गत्यन्तराभावात्तवाग्रे स्वगुणानीषत्कीर्तयामि। निर्मले हिते च मार्गे गच्छतो मे का क्षतिः? काममिव सुन्दरं मां विलासिन्यः स्वयं वृणते; मम कीर्तिस्तु भुवनत्रयेऽपि विलसति" इति। पतिव्रता सीता रावणं प्रत्याह–'त्वामहं मुहुः श्रुतवती। तस्मादलमनेन आत्मप्रशंसाप्रयासेन' इति। एष तावत्तस्या उत्तरस्य सर्ववेद्यः प्रथमोऽर्थः। द्वितीयस्तु निगूढोऽर्थः, 'त्वां मुहुरलं लकाररहितमेव श्रुतवती'ति। वाच्यवाचकयोरभेदाध्यवसायात्, त्वामित्यस्यालमिति विशेषणमुपपद्यते। दशपूर्वरथं यमाख्ययेति कालिदासः, हिरण्यपूर्वकशिपुं प्रचक्षते इति माघश्च प्रायुञ्जाताम्। 'त्वदुक्तौ लकारो माभूत्, लकारं लोपयित्वा तदेव वाक्यं पुनः कथये'ति भावः। एवं लकारलोपे कृते सैव रावणोक्तिः,

"परिक्षीणास्यः समरभुवि रक्षःकुपतिः
सज्जः स्वस्तुत्याममहितमार्गैकपथिकः।
प्रणम्रस्त्रीभ्यः सुमुखि विसत्कीर्तिरिति च
श्रुतो नाहं किम्" इति पर्यवस्यति। तथा च,

रावणः स्वयमेवात्मानं निन्दतीति फलति। 'समरे ममास्यानि परिक्षीयन्ते। पराक्रमरहितस्य मे रामादिभ्यो वीरेभ्यो भीतस्य कथं मुखोल्लासः स्यात्? अहं राक्षसानां कुत्सितः पतिः, स्वापचारेण राक्षसनाशस्योपस्थापितत्वात्। एवं दूषितकर्मापि आत्मप्रशंसायां सदा सज्जः संनद्ध एवास्मि। अमहिते साधुजनगर्हिते मार्गेऽहमेक एव संचरामि। स्त्रीभ्योऽ

पि कोपस्फुरिताधराभ्यो बिभ्यत्ताः प्रणामेनैव प्रसादयामि। एवं कामान्धस्य स्त्रीवशस्य मम सत्कीर्तिरहितत्वं किमु वक्तव्यम्? किमेते ममदोषास्तव कर्णपथं न प्रविष्टाः? इति तस्याभिप्रायोऽमीभिः शब्दैराविष्क्रियते। पश्यत कथमेकस्य वर्णस्य लोपेन, अर्थ एवानर्थः संवर्तत इति। तत्रापि सीतावाक्येऽर्थद्वयसमावेशः चमत्कारस्यातिशयं पुष्णाति।

(२) अतल्पं निद्रालू रजनिषु कुवाग्दुर्गततमो
महाकातर्याढ्यो मनसि विधुतप्रोज्ज्वलयशाः।
वधान्मांसादानां बहुविमतलाभो जनकजे
कथं श्लाघ्यो रामः, खल तमसकृन्मा स्पृश गिरा।।

(श्लोकः–१८)

अत्रापि चतुर्थे पादे, 'कथं श्लाघ्यो रामः' इत्यन्ता रावणस्योक्तिः। तव भर्ता रामः राज्यभ्रष्टो वने वसन् तल्पं विनैव शेते। स कुवाक्, दुर्गतो दरिद्रश्च। मनसि च महता कातर्येण भयेन युक्तः स कथं वीरस्य मम हस्तगतां त्वां प्राप्स्यति? उज्ज्वलं यशश्चानेन राज्यं त्यजतैव विधुतं त्यक्तमिति मन्ये। जनस्थाने केषांचिद्राक्षसानां वधं कृत्वाऽयं बहून् विमतान् शत्रूनेव लेभे। तदयं कथं श्लाघामर्हती'ति रावणः पृच्छति। पत्युर्निन्दामसहमाना सीता त्वाह– 'तं मे प्रख्यातगुणं पतिं रे दुष्ट, तवानया असत्यया वाण्या मा स्पृश' इति। अत्र निगूढो द्वितीयोऽर्थस्तु, 'तं तकारमसकृन्मा स्पृश, तव वाक्ये यत्र यत्र तकारोऽस्ति तत्र तत्र तं लोपयित्वा तदेव वाक्यं पुनः कथये' ति। तकारलोपे चेदम्,

"अल्पं निद्रालू रजनिषु कुवाग्दुर्गमो
महाकार्याढ्यो मनसि विधुप्रोज्ज्वलयशाः।
वधान्मांसादानां बहुविमलाभो जनकजे
कथं श्लाघ्यो रामः" इति रूपान्तरं भजते।

तस्य चायमर्थो भवति– "तव भर्ता नित्योद्योगशीलत्वादप्रमत्तत्वाच्च

  

रात्रावपि अल्पमेव निद्राति। कुवाचः पुरुषास्तमुपगन्तुं नेशते। स सदा मनसि महान्ति कार्याणि चिन्तयति। तस्य च यशः चन्द्रोज्ज्वलं प्रथते। जनस्थाने राक्षसानां चतुर्दश सहस्राणि एक एव हत्वा बह्वीं विमलां च आभां शोभामसौ लेभे। एतादृशस्य महापुरुषस्य श्लाघनं कथमहं कुर्या' मिति। एवमत्रापि तकारस्य एकस्य वर्णस्य लोपेन, रावणकृता रामनिन्दा राजस्तुतिरूपतामेतीति स्पष्टश्चमत्कारः। एवं वर्णलोपेनार्थभेदे साधिते तच्चित्रं च्यावितक्षरं वदन्ति। एतौ द्वावपि श्लोकौ 'च्यावितक्षर'स्योदाहरणे।

"कस्मिंश्चित् च्याविते वर्णे यत्रान्योऽर्थः प्रतीयते।
चित्रं तदेव विज्ञेयं च्यावितक्षरनामकम्॥"

इति लक्षणात्।

(३) सदायत्तं सत्याविकलमपि मां विद्ध्यवनिजे
सुधेत्येव ग्राह्या त्वदनुनयनोक्तिर्मम न किम्?
सुखाधिक्यं रामादपि मयि विमूढा अपि विद–
त्त्यसम्बद्धं मे न श्रुतिमधम तेऽभ्येति वचनम्॥
(श्लोकः–२७)

अत्र तृतीयपादान्तं रावणस्य वाक्यम्। "हे अवनिजे सीते! मां सतां साधूनामायत्तं वशवर्तिनं सत्येन च अविकलं सहितं विद्धि। सदाचारपरायणः सत्यवादी चाहमिति भावः। तवानुनयार्थं ममेदं वचनं माधुर्यसुधारूपमेव भवति। अप्रौढा अपि जनाः, रामापेक्षयातिशयात् ममोत्कर्षं जानन्तस्तव मम सम्बन्धादेवाधिकं सुखं भविष्यतीति कथयेयुः। क्व ते राज्यभ्रष्टो दुर्गतस्स भर्ता, क्व चाहमिन्द्रादीनप्यतिशयानः समृद्धभोगो नित्यानन्द" इति भावः। एवमुक्ता सीता प्रत्याह– "रे नीच, तवेदमसम्बद्धं वचनं मम श्रुतिं नाभ्येति। तव वाक्यमुन्मत्तप्रलापवदर्थरहितं मन्ये" इति। तस्याः प्रतिवचने निगूढमर्थान्तरं तु "रे

अधम, ते वचनमसं सकाररहितं, मे न बद्धं तस्य स्थाने मकारेण घटितं च श्रुतिमभ्येति" इति विभाव्यताम्। सकारं निष्कास्य तत्स्थाने मकारमानीय, इदमेव वाक्यं पुनः पठ्यते चेत् युक्तार्थकत्वात् श्रोष्यामीति भावः। एवं सकारस्य स्थाने मकारादेशे कृते, सैवोक्तिः,

"मदायत्तं मत्या विकलमपि मां विद्ध्यवनिजे
मुधेत्येव ग्राह्या त्वदनुनयनोक्तिर्मम न किम्?
मुखाधिक्यं रामादपि मयि विमूढा अपि विदन्ति"

इति परिणमति। अस्याश्च तात्पर्यम्, "हे सीते! मां मद्यपानात् सदा मदवशं गतं, मत्या विकलं बुद्धिहीनं च जानीहि। एवं बुद्धिहीनत्वादेव हि कथं त्वामनुनेतुमीदृशानि अर्थशून्यानि वचांसि ब्रवीमि। मम एतानि वचांसि मुधा व्यर्थानीति कः संशयः? पामरा अपि चक्षुष्मन्तः, रामस्यैकं मुखं मम तु दशेति मयि मुखाधिक्यं जानन्त्येव। एवं च मुखेषु संख्या कृतमाधिक्यमेकमेव ममोत्कर्षः, नान्यः कश्चित्" इति। एवमत्र वर्णादेशेनार्थभेदः चमत्कारकारी प्रदर्शितः।

(४) प्रलापरचितोद्यमः किमहमस्मि काकुत्स्थवत्
स किं स्वजनपालनोद्यमधुरंधरोऽहं यथा।
ममेव ननु तस्य किं जनकजे महालङ्कृता–
स्त्यलातघटितेव ते खल विभाति वाग्दारुणा॥

(श्लोकः–२९)

अत्र चतुर्थपादेऽस्तीति प्रथमं पदम्। तदन्तं च रावणस्य वचनं रामनिन्दायामात्मस्तुतौ च प्रवर्तते। "रामो हि प्रलापमात्रे कृतश्रमः न किंचित् कार्यं करोति। अहं तु तथा न प्रलपामि। अहं यथा स्वजनं पालयामि किं तथा रामः पालयति? स हि स्वधर्मप्रजापालनं परित्यज्य वनं प्राप्तो न केवलं राज्यादपि तु धर्मादपि भ्रष्टः। ममेयं महती लङ्का; किं रामस्य काचिदीदृशी नगरी अस्ति?" इति रावणस्सगर्व-

  

माह, सीता तु तस्य निन्दाक्षरैर्दूयमानसा प्रत्याह–"रे खल, तवैषा दारुणा परुषा वाक् शब्दैर्न हि, किन्तु अलातैः अङ्गारैरेव घटितेति प्रतिभाति" इति। हृदयदाहकत्वादिमानि पदानि अलातान्येव मन्ये इति भावः। निगूढमर्थान्तरं तु "रे खल, तव वाक् अला-लकार-रहिता तघटिता तकारयुक्ता च प्रतिभाती"ति। लकारस्य स्थाने तकारमेवोच्चारयन्निदं पठेत्यर्थः। एवं तकारादेशं विधाय पठिता रावणस्योक्तिः।

"प्रतापरचितोद्यमः किमहमस्मि काकुत्स्थवत्
स किं स्वजनपातनोद्यमधुरंधरोऽहं यथा।
ममेव ननु तस्य किं जनकजे महातङ्कतास्ति"

इत्येवंरूपा परिवर्तते। तस्याश्चायमर्थो निष्पद्यते "काकुत्स्थस्तावत् प्रतापेन शत्रूञ्जयति; किमहं तथा कर्तुं प्रयते? मम प्रतापरहितत्वात्तदशक्यं जानीहि। अहं तु महान्ति पापानि कुर्वन् न केवलमात्मानमपि तु स्वजनानपि नरके पातयामि। किन्तु विग्रहवान् धर्म इति श्रुतो रामस्तथा न करोति। मम रामादनिशं भीतस्य महानातङ्कः तस्य तु वीरस्यातङ्कः एव नास्ति। एवमावयोर्भेदं जानीहि" इति।

अनयोः श्लोकयोरेकस्य वर्णस्य स्थाने वर्णान्तरस्य विधानादेतत् प्रतिदत्ताक्षरं नाम चित्रमाहुः।

"च्यावितस्यास्पदेऽन्येन प्रतिदत्तेन केनचित्।
प्रतीयतेऽन्यो यत्रार्थः प्रतिदत्ताक्षरं हि तत्॥"

इति लक्षणात्। इयमादेशस्य सरणिः।

(५) तापोन्मेषविवर्जितो युधि मितौजस्काभिमुख्या–
तिगः, सीते सादितदुर्जयप्रतिरथः कृत्याविमूढाशयः।
स्थानायत्तजयेन्द्रियश्च किमहं श्रोत्रेऽस्मि लग्नो न ते,

प्रागेव त्वमरे प्रसङ्गत इह श्रोत्रेऽसि लग्नो मुहुः ॥

(श्लोकः–२६)

अत्र तृतीयपादान्तं रावणस्य भावितम्। अस्यार्थः–"सीते, अहं समरे जितकाशी तापलेशमपि न भजामि। ये च मितौजस्का अल्पबलाः शत्रवस्तानहमुपेक्षमाणोऽतिलङ्घ्य गच्छामि; महावीरत्वात् वीरानन्विष्य तैः सह युध्ये। दुर्जयान्प्रतिरथान् शत्रून् सादयामि हन्मीत्यर्थः। कृत्येषु प्रजापालनादिकार्येषु अविमूढः अप्रमत्तः जागरूको भवामि। जयलक्ष्मीश्च मम स्थाने गृहे राज्ये वाऽयत्ता मदधीना वर्तते। अतो मामेव भजस्व" इति। सीता प्रत्याह–'प्रसङ्गतः पापिजनप्रस्तावे पूर्वमेव त्वामहं श्रुतवती' ति। अस्या निगूढं तात्पर्यं तु, 'प्रागेव त्वदुक्तविशेषणेभ्यः पूर्वं, प्रसङ्गतः 'प्र' इत्यनेनोपसर्गेण संयुक्तस्त्वं श्रुतः। तस्यात् प्रशब्दमादौ संयोज्य तानि विशेषणानि पुनः पठेति। एवं प्रशब्दस्यापि संयोजने कृते।

"प्रतापोन्मेषविवर्जितो युधि प्रमितौजस्काभिमुख्यातिगः, सीते प्रसादितदुर्जयप्रतिरथः प्रकृत्या विमूढाशयः। प्रस्थानायत्तजयेन्दिरश्च किमहं श्रोत्रेऽस्मि लग्नो न ते" इति तदेव वाक्यं विपर्यस्यति। तस्यायमर्थः–"सीते, समरे मम प्रतापस्योन्मेषमात्रमपि न भवति। ये च प्रमितौजस्का विख्यातवीर्याः शत्रवस्तेषामाभिमुख्यं सर्वथा परिहरामि। दुर्जयानरीन् प्रसादयामि पादयोः प्रणिपत्य तेषामनुग्रहं संपादयामि। प्रकृत्या स्वभावेनैव मूढोऽहं किमन्यत्कुर्याम्? अद्य रामेण वैरानुबन्धे जाते मम जयलक्ष्मीः प्रस्थातुकामा वर्तते" इति। एवमत्र प्रशब्दस्यागमेन अर्थभेदः समर्थितः।

(६) हारौचित्यनिवेदकाखिलगुणः सीतेऽस्म्यहं पश्य मां
सर्गात्यन्तबहिर्भवत्त्वधिषणापादिस्वरूपोऽस्म्यहन्।

स्यां चाहं हननत्यगप्यभिमतिस्ते चेत्तथा, रेऽधम
प्राक्संन्यासत एव ते समुचितं वेद्मिस्वरूपं ननु ॥

(श्लोकः–३४)

अत्र तृतीये पादे तथेत्यन्तं वचनं रावणस्य। रेऽधमेत्यादिकं तु सीतायाः। रावण एवमाह–"सीते, मां मम गुणांश्च पश्य। ममैते कल्याणा गुणाः, प्रशंसनीयस्य मम वक्षसि हारसमर्पणमुचितमिति निवेदयन्ति। मम स्वरूपमितरविलक्षणं सर्गे सृष्टौ (त्रिलोक्यामपि) अन्यत्र कुत्रापीदृशस्य शोभाविशेषस्यादृष्टत्वात् इदं सृष्टिर्बहिर्भूतमिति धिषणां बुद्धिमापादयति। अहं राक्षसराजः मांसभोजी तस्मात् हननं प्राणिवधं करोमि। यदि त्वं मां परिगृह्य प्राणिवधं मा कार्षीरित्यादिशसि, तर्हि तव संतोषाय हननमपि त्यजेयम्।" इति। सीता प्रत्याह– "वृथा किमात्मानं श्लाघसे? यदा त्वं रामाद्भीतः कपटेन संन्यासी भूत्वा मामपहर्तुमागतस्तदाप्रभृत्येव तव स्वरूपमहं सम्यग् जानामी" ति। अस्या निगूढं तात्पर्यन्तु 'प्राक् त्वदुक्तेभ्यो विशेषणेभ्यः पूर्वं संन्यासतः 'सम्' इत्यस्योपसर्गस्य विन्यासात् तव स्वरूपं यथार्थं जानामी' ति। 'सं' शब्दस्यादौ योजनायामिदं रावणस्य वाक्यं सिध्यति –

"संहारौचित्यनिवेदकाखिलगुणः सीतेऽस्म्यहं पश्य मां, संसर्गात्यन्तबहिर्भवत्वधिषणापादिस्वरूपोऽस्म्यहम्। स्यां चाहं संहननत्यगप्यभिमतिस्ते चेत्तथा" इति। अस्यार्थः–"सीते मम क्रौर्यनिष्ठुरत्वादयो गुणाः परदारापहरणादीनि च कर्माणि तत्प्रयुक्तानि मम संहारयोग्यतामेव प्रकाशयन्ति। लोककण्टकस्य संहार एव न्याय्यः किल। मम स्वरूपमपीदृशं भयंकरं यत्तदवलोकनमात्रेण जनानामेष संसर्गबहिर्भूत इति बुद्धिरुत्पद्यते। न कोऽपि मम सम्पर्कं सहते वाञ्छति वा। यदि त्वमिच्छसि तर्हि अहं संहननं शरीरमपि त्यजेयम्। मम मरणमपि त्वत्संकल्पायत्तं पश्यामि" इति। एवमनयोः श्लोकयोरेकस्य वर्णस्याधिक्यं विधाय अर्थान्तरप्रतीतिः प्रदर्शिता। इदमधिदत्ताक्षरं नामतृतीयं चित्रभेदं वदन्ति।

"कस्मिंश्चिदधिके वर्णे दत्तेऽर्थो यत्र भिद्यते।
अधिदत्ताक्षरं नाम चित्रं तदिति बुध्यताम् ॥"

इति लक्षणात्, एषा 'आगम'स्य सरणिः।

एवं पञ्चाशति पद्येषु सीताया वचनं श्लेषेण योजयित्वा, ततो नवसु श्लोकेषु 'स्फुटैकार्थां' प्रत्युक्ति कविर्निर्बबन्ध। तस्या इदमुदाहरणम्-

(२) रामायातिपटुत्वमेव समरे व्यक्तं भवेन्मामकं
राकेशोपनिभं ममैव भुवने जानीहि सीते यशः।
राजीवेऽपि गतस्पृहस्तव मुखं सानन्दमलोकये,
रावर्णं विरहय्य तत्पुनरपि ब्रूहि क्षपाटाधम ॥

(श्लोकः–६७)

अत्र तृतीयपादान्ते स्ववाक्ये रावण आह–"सीते, समरारम्भे मम पटुत्वं रामः स्पष्टं ज्ञास्यति। लोके ममैकस्यैव यशः राकेशेन पूर्णिमाचन्द्रेणोपमितं जानीहि। कस्याप्यन्यस्य नैतादृशी कीर्तिः। तव मुखमालोकयतो मे मनसि राजीवं कमलमपि स्पृहणीयतां न लभते" इति। सीता तु स्पष्टमेव त्रिष्वपि पादेषु 'रा' वर्णं त्यजेत्याह। तथा च,

"मायातिपटुत्वमेव समरे व्यक्तं भवेन्मामकं
केशोपमितं ममैव भुवने जानीहि सीते यशः।
जीवेऽपि गतस्पृहस्तव मुखं सानन्दमालोकये।"

इति पठनीयं भवति। तत्र चायमर्थः परिणमति–"समरे मम माया कौशलमेव प्रकटं भविष्यति, पराक्रमवर्जितेन मया माययैव स्वरक्षणस्य करणीयत्वात्। लोके हि यशः शुभ्रतया चन्द्रणोपमीयते; मम तु लोक कण्टकस्य यशः कृष्णवर्णतया केशेनैवोपमीयते। तव मुखमालोकमानोऽहं जीवेऽपि गतस्पृहो निराशोऽस्मि; तवापहर्तारं मां रामो हनिष्यतीति प्रत्येमि; तथापि मोहान्धस्तव मुखं प्रेक्षे" इति। एवमत्र प्रथमवर्णलोपादर्थभेदं कविर्दर्शयामास। क्रमेण च द्वितीयादिवर्णलोपेऽपि

  

इत्थमर्थभेदं प्रदर्श्य, एकोनषष्टि पद्यानि रचयित्वा, विरराम। तत्रेदं पद्यं द्रष्टव्यम्–

(२) रामः सीते विकलसदभिप्रीतिभारो भवत्यां
युध्युद्द्रावप्रहसिततमानेव कुर्यात्स वीरान्।
नाथस्तेऽसावननुगुण इत्येव जानीहि नूनं,
षष्ठं वर्णं विजहदथवा सप्तमं जल्प पापिन्॥ (श्लोकः–६३)

इति। अत्र पादत्रये रावण आह–"सीते, रामस्य भवत्यां प्रीतिर्नास्ति। समरे च भीतः पलायमानः स वीरान् (उद्द्रावः पलायनम्) प्रहाससन्तुष्टानेव करिष्यति। तस्मात् प्रेमहीनोऽशक्तश्च स ते पतिरनुगुणो नेति दृढमवेहि" इति। सीता प्रत्याह–"रे पापिन्, षष्ठं सप्तमं वा वर्णं लोपयित्वा इदमेव वाक्यं पुनर्वद" इति। षष्ठवर्णलोपे कृते रावणस्य वाक्यमेतत्।

"रामः सीते विलसदभिप्रीतिभारो भवत्यां
युध्युद्द्रावप्रसिततमानेव कुर्यात्स वीरान्।
नाथस्तेसावनुगुण इत्येव जानीहि नूनम्॥

इत्येवरूपं संपद्यते। तथा च, रामस्य त्वयि प्रीतिभारो विलसत्येव। स च रामः समरे मदीयान् राक्षसवीरान् दुद्रावे पलायने प्रसितानासक्तान् करिष्यति मम भटास्तस्माद्भीताः पलायिष्यन्ते। पतिव्रतायास्तवासावनुगुणः पतिरेकपत्नीव्रतधारीति जानीहि" इत्यर्थः तस्मात् लभ्यते। अथवा, सप्तमं वर्णं विलोपयेति विकल्प उक्तः। सप्तमवर्णलोपे तु, "रामः सीते विकसदभिप्रीतिभारो भवत्यां युध्युद्द्राव प्रहततमानेन कुर्यात्स वीरान्।

नाथस्ते सावनगुण इत्येव जानीहि नूनम्"

इति रावणवाक्यस्य पाठान्तरं जायते। तस्य चायमर्थः–

"सीते, त्वयि रामस्य प्रीतिभारो विकसति वर्धमान एवास्ते।

स च मम वीरान् संग्रामे उद्रैः बाणविशेषैः अवप्रहततमान् सम्यक् क्षत-विक्षतान्करिष्यति। उद्रः पन्नगभेदे च यादी भेदेषु भेदयोः" इति निघण्टुसारे। तवासौ पतिः अनगुणः–अगुणो न भवति, गुणवानेवेति अवधारय। "संभाव्यनिषेधनिवर्तने द्वौ प्रतिषेधौ" इति काव्यालंकार-सूत्रकारो वामन आह। "तस्मात्तव पतिर्गुणवानिति दृढं संप्रत्ययं विधेहि।" इति। एकस्य वर्णस्य लोपेऽपि अर्थभेदस्य साधनं दुष्करं जानतामिदं विस्मयमावहति यदसौ कविः षष्ठं वा सप्तमं वा वर्णं विलोपयेति विकल्पमुक्त्वा द्वयोर्लोपेऽपि अर्थभेदमबाधितं दर्शयामासेति।

एतादृशानि चित्राणि गूढार्थगर्भितोत्तरघटितत्वात् मन्दधीनां दुरवगाहानीति जानन् ग्रन्थकारः स्वयमेवास्य ग्रन्थस्य संस्कृतभाषामयीं टीकामपि लिलेख। सटीकश्चायं ग्रन्थः, मैसूरनगरे राजकीयमुद्रणालये संमुद्रितः, १९०५ तमे क्रिस्ताब्दे प्रकाशितः पप्रथे। १८६५ तमे क्रिस्ताब्दे कविः ग्रन्थरचनामारभे; त्रिंशत् वर्षाणि निरन्तरं परिश्रम्य पञ्चाशदेव श्लोकान् निरमिमीत; १८९६ तमे क्रिस्ताब्दे च ग्रन्थं समापयामास, ग्रन्थकारस्य प्रतिभा परिश्रमः काव्यनिर्माणे तस्य दृढो व्यवसायश्च प्रशंसामर्हन्ति। शब्दचमत्कारेण सहैवात्र ग्रन्थे अर्थगाम्भीर्यमपि पश्यतां सहृदयानामानन्दः प्रतिष्ठां लभते।

केचिदाधुनिकाः शब्दालंकारान् काव्यस्य शोभाकरान्न मन्यन्ते। अनुप्रासा यमकानि एकाक्षरचक्रपद्मबन्धादीनि च चित्राणि क्वचित्क्वचित् रसप्रतीतौ विघ्नमप्याचरन्तीति, अत एव तानि वर्जनीयानीति आनन्द-वर्धनमहोदयः प्राचीना अपि मेनिरे। तावता शब्दालंकाराः सर्वथा त्याज्या इति निष्कर्षो न कर्तव्यः। रसप्रतीतिविरोधाभावे तेषामलंकाराणां स्वीकारे दोषासंभवात्। किं च,

"पिनाकफणिबालेन्दुभस्ममन्दाकिनीयुता।
पवर्गरचिता मूर्तिरपवर्गप्रदास्तु मे॥"

इत्यादौ यः शब्दहेतुकः चमत्कारः प्रकाशते, तस्य निषेधो न रोचते। अत एव; अस्मिन् ग्रन्थे लभ्यमानः चमत्कारोऽपि, शब्दविन्यास-हेतुकः सन्नपि, न सहृदयैरुपेक्षणीयः प्रतिभाति। अन्ते च ग्रन्थकारः, "ग्रन्थं वीक्ष्य गुणागुणाववहिता निर्धार्यं नन्दन्ति ये ये निन्दन्ति च तांश्च तांश्च शिरसा भक्त्येव वन्दामहे। कर्तुः साम्प्रतिकत्वमेव परमो दोषः कृतेरित्यमुमस्पृष्ट्वैव हुमित्यनादरकृतां नामापि न ब्रूमहे॥"

(सीतारावणसंवादझरीश्लोकः–१०६)

इति गुणदोषविवेकमेव प्रार्थयामास, कालिदासोऽपि,

"पुराणमित्येव न साधु सर्वं
न चापि काव्यं नवमित्यवद्यम्।
सन्तः परीक्ष्यान्यतरद् भजन्ते
मूढः परप्रत्ययनेयबुद्धिः॥"

(मालविकाग्निमित्रे प्रस्तावनायाम्)

इति प्राचीनतामात्रप्रेमिणः सदसद्विवेकरहितान् दूषयामास, वयं तमेवापराधं मा कार्ष्म; अस्याः सीतारावणसंवादझर्या गुणानभिनन्दाम। यदि विद्वांसो ग्रन्थमेतं पठेयुः प्रचारयेयुश्च, तर्हि ममायमल्पः प्रयासः सफलो भविष्यतीति मन्ये।



धनन्यूनताचिन्तया दिनाद्दिनं कार्श्यं गच्छन्तं पुरुषं परीक्ष्य वैद्य उवाच "विश्रान्तिमनुभव। मासात्पूर्वं कश्चन पुरुषोऽत्रागतः। सोऽपि स्वसौचिकाय (Jailor) वेतनं दातुमसमर्थश्चिन्ताकृश आसीत्। स मयोक्तः सर्वामपि चिन्तां परित्यज्य विश्रान्तिमनुभवितुम्। इदानीं सः स्वास्थ्यमावहति"

"जानामि। अहं तस्यैव सौचिकः"

# रामायणं हास्यरसश्च

वि. वेङ्कटाचलम् *

पाणौ कङ्कणमुत्फणः फणिपतिः, नेत्रं ज्वलत्पावकं,
कण्ठः कूटितकालकूटकुटिलो, वस्त्रं गजेन्द्राजिनम्।
गौरी लोचनलोभनाय सुभगो वेषो वरस्यैष मे
गण्डोल्लासविभावितः पशुपतेर्हास्योद्गमः पातु नः॥



[ मद्रपुरी संस्कृतकलाशालाया प्रतिवर्षं प्रवर्तमानायां रामायणनिबन्धलेखनस्पर्धायाः कृते समार्पिपमहं निबन्धमिमं १९४५ वर्षे। समर्पितेषु निबन्धेषु श्रेष्ठतया निर्धारितोऽयं प्रापच्च तदर्थं कल्पितं स्वर्णपदकम्। तदात्वेऽहमासं पूर्वोक्तविद्यास्थानेऽन्यतमः छात्रेषु। छात्रदशायां लिखितेऽस्मिन् लेखे संप्रति पुनः पठ्यमाने यद्यपि तत्र तत्र शब्दार्थाश्च भूयिष्ठमरुन्तुदप्राया इव नैकधा संशोधनाय निर्बध्नन्ति मतिं, तथापि येन रूपेण निबन्धः समर्पितः तेनैव रूपेणास्य प्रकाशनं युक्तरूपमिति धिया शुशुत्साकण्डूतिं स्वलेखन्याः प्रयत्नतः प्रतिरुध्य प्राक्तनेनैव रूपेणायमत्र प्रस्तूयते। यदि नाम रामायणनदीष्णानां रसतत्त्वविदां पण्डितानामिह शब्दयोजने अर्थमार्गे वा क्वचित् क्वचित् ईषदपरिपक्वमिव, असमञ्जसमिव, प्रामादिकमिव वा प्रतिभायात् तत्र छात्रजनान् प्रति सहजसुलभा अनुकम्पा धारणीयेति सप्रश्रयप्रार्थनेयमुपह्रियते—लेखकः ]

पुरा किल भगवती वाणी भगवतः पुरुषधुरन्धरस्य वाल्मीकेः मानसराजहंसे सुखासीना वामा-

---

*एम्. ए., वेदान्तशिरोमणिः–वेदान्तविशारदः संस्कृतविभागाध्यक्षः, माधवमहाविद्यालयः, विक्रमविश्वविद्यालयः, उज्जयिनी।

ङ्कसमारोपितवामवीणा लयनिमीलितनयनार्धा निजवीणारवानुषङ्गं निरुपममाधुर्यजुषा कण्ठस्वरेण प्रसन्नमधुरां प्रशान्तगम्भीरां ततान गीतिमेकां नवरसपरिवाहिनीम् । स खलु प्राचेतसचेतोविकासः संप्रति अत्युन्नतां प्रथामवाप्य काव्यसोपानप्रथमपीठमधितिष्ठन् रामायणमिति जेगीयते लोके। जोघुष्यते च दिगन्तकोणेषु। तस्य हि माधुर्यपरमसीमास्पृशो दिव्यगीतस्य परिस्पन्दाः सांप्रतमपि उन्मादयन्ति हृदयानि सहृदयानां, क्वथयन्ति, भ्रमयन्ति, मन्थयन्ति च ! तस्य च महिम्नो रहस्यं रसः। यदि तावत् रसचक्षुर्नाभविष्यत् वाल्मीकिः, ध्रुवमेवापतिष्यत् रामायणमपि विस्मृतिकुहरेषु इत्यत्र कस्तावदभिज्ञः सन्देग्धि ? न खलु जागर्त्येकोऽपि रसः यमादिकवी रामायणे नोपनिबबन्ध, परिपोषपरमसीमानं वा न निनाय। कवितालतायाः प्राथमिके किलास्मिन् पुण्यपुष्पे समुज्ज्वलन्ति नवरससच्छाया नववर्णच्छायाः। कविताकीराङ्गनायाः प्रथमकूजितेऽस्मिन्ध्वनन्ति नवरसध्वानाः। यत्सत्यं रसानामाकरो नाम रामायणम्। परमगम्भीराद् अपारविस्ताराद् अस्मात् खलु रसमहोदधेः अणुकणपरिमाणमास्वाद्य रससारं मधुरं चुकूज कृत्स्नः कविलोकः। स्वकाव्यं समग्ररसनिकेतनमिति स्वयमेवाह भगवान् वाल्मीकिः–

"रसैः श्रृङ्गारकरुणहास्यरौद्रभयानकैः। वीरादिभिश्च संयुक्तं काव्यमेतदगायताम्" इति।

एवं रसिकतल्लजः कश्चिद्रामायणरसपण्डितोऽपि रामाश्रितानेव नवरसानुदाजहार–

'श्रृङ्गारं क्षितिनन्दिनीविहरणे, वीरं धनुर्भञ्जने,
कारुण्यं बलिभोजनेऽद्भुतरसं सिन्धौ गिरिस्थापने।
हास्यं शूर्पणखामुखे, भयमघे, बीभत्समन्यामुखे,
रौद्रं रावणमर्दने, मुनिजने शान्तं, वपुः पातु नः॥' इति।

कृत्स्नो हि रसप्रपञ्चः पात्रगतो दृश्यगतश्चति द्विधा विभजनीयततां प्रदर्शयति। तथा च हास्यरसोऽपि क्वचित्पात्रगतः, क्वचित् दृश्यगतश्च। अतश्च रामायणीयो हास्यरसः पात्रगतो दृश्यगतश्चेति द्विधा विभज्याधुना मीमांस्यते।

प्रथमं तावत्पात्रगतं हास्यरसं विचारयामः। रामायणे हि विराधमन्थराकैकेयीशूर्पणखाप्रभृतीनि पात्राणि हास्यरसालम्बनानि। तत्रापि शूर्पणखैव भजति परमोच्छ्रितां पदवीम्। शूर्पणखावृत्तान्ते हि कविधुरन्धरो हास्यरसमङ्गित्वेन जग्रन्थ। इतरत्र तु हास्यस्य न क्वचित् प्रधानं पदं समर्पितम्, अपि तु गौणम् अत एव पूर्वोदाहृते पद्येऽपि "हास्यं शूर्पणखामुखे" इति स एव निर्दिष्टः। अतश्च रामायणहास्यरसं मीमांसमाना वयमपि तामेव हास्यपीयूषवर्षिणीं गाथां प्रथममालोचनपथम् अवतारयामः।

अत्र भगवान् वाल्मीकिः रसैकप्रवणत्वमात्मनो निदर्शयन् हेमन्तर्तुं विस्तरशश्चित्रयित्वा तदव्यवधानेन शूर्पणखासर्गम् अयूयुजत्। अनेन हेमन्तकालोपन्यासेन अनुपदमुपवर्णयिष्यमाणस्य शूर्पणखायाः उत्पथमान्मथविकारस्य पूर्वपीठिकामारचयति कविमूर्धन्यः। अनेनैव च शूर्पणखामन्मथोत्तेजकेन हेमन्तेन हास्यरसोऽपि परिपुष्यति। अस्मिन् हि काले दिवसाः 'मृदुसूर्याः सनीहाराः पटुशीताः समारुताः'। शीता वृद्धतरायामाश्च त्रियामाः। जलचराः पक्षिणोऽपि सलिलतटमध्यासिताः जलावगाहने नोत्सहन्ते। अत्यन्ततृषितोऽपि वन्यः करी न शीतलजलस्पर्शं सहते। किन्तु झटिति करं प्रतिसंरहते। नैतावतापि विरमति शैत्यपिशाचिका। "प्रकृत्या शीतलस्पर्शो हिमविद्धश्च सांप्रतम्। प्रवाति पश्चिमो वायुः काले द्विगुणशीतलः॥ "इत्यहो गण्डस्योपरि स्फोटः! किं करिष्यति मन्मथजडीकृता तपस्विनी शूर्पणखा तत्रापि भर्तृहीना? "साधु शूर्पणखे! साधु, न त्वमपराध्यसि, न वासौ भुवनत्रयधानुष्कः पञ्चेषुः। किन्तु कुटिलो-

ऽयं हेमन्तकाल एवापराध्यति, य एवं जानकीसन्निधावेव रामे रतिमुत्पाद्य भवतीमत्यन्तशोकोदर्के कर्मणि न्ययुङ्क्त," इत्येवं शूर्पणखामुपहसितुमिव इमं वृत्तान्तं हेमन्तकाले उपन्यास्थत् कविधुरन्धरः। हेमन्तकाले हि स्त्रीपुरुषाः शैत्योद्दीपितमान्मथाः न परस्परवियोगं सोढुमुत्सहन्ते। तदुक्तं सोपहासं केनचिन्—

"हसन्तीं वा हसन्तीं वा हसन्तीं वामलोचनाम्।
हेमन्ते ये न सेवन्ते ते नराः दैववञ्चिताः" इति।

का कथा तर्हि राक्षस्याः शूर्पणखायाः! सा कामुकी सद्यः पुरुषमृगयामारेभे शरीरसन्तापप्रशमाय। इमामेव दुरवस्थामालोच्य शूर्पणखायाः, प्राह कालिदासः—

"सा सीतासन्निधावेव तं वव्रे कथितान्वया।
अत्यारूढो हि नारीणामकालज्ञो मनोभवः॥" इति।

अत एव भगवान् वाल्मीकिर्मन्मथभिक्षां याचमानायाः शूर्पणखायाः रामस्य च मेरुसर्षपयोरिव अन्तरं प्रथयितुं रामस्य शरीरशोभां "सिंहोरस्कः", "सुकुमारः" इत्यादिभिः उपन्यस्य, 'कन्दर्पसदृशप्रभ' इत्यनेन तां चरमोत्कर्षमारोप्य अनन्तरं निरुपमां रसधोरणीमालम्ब्य अनयोर्वैपरीत्यं व्यञ्जयन् शूर्पणखां परिहसति--

"सुमुखं दुर्मुखी रामं वृत्तमध्यं महोदरी।
विशालाक्षं विरूपाक्षी सुकेशं ताम्रमूर्धजा॥
प्रीतिरूपं विरूपा सा सुस्वरं भैरवस्वरा।
तरुणं दारुणा वृद्धा दक्षिणं वामभाषिणी॥
न्यायवृत्तं सुदुर्वृत्ता प्रियमप्रियदर्शना।
शरीरजसमाविष्टा राक्षसी वाक्यमब्रवीत्॥"

इति हन्त! प्रतिमानपथमप्यतिशेते अनयोर्वैषम्यम्। क्व वा सञ्चितोऽयं विरञ्चिना वैषम्यप्रपञ्चः? वैषम्यपरमावधौ प्रतिष्ठितमिदं मिथुन

विभाव्य, अनयोः शृङ्गाररसमुल्लासं च मनस्याकलय्य कस्य वा सहृदयस्य कटिबन्धो न प्रस्फुटेत् प्रकटहासेन ? शूर्पणखायाः रामलक्ष्मणाभ्यां संलापे तु कविर्हास्यरसपरमसीमानमधिरोहति। सीतासकाशात् रामस्य मनः प्रत्याहृत्य, आत्मनि रतिमुत्पादयितुकामा ब्रूते शूर्पणखा "भवतः किं फलमनया सीतया ? क्व तावत् भवान् 'साक्षात् मन्मथमन्मथः,' क्व चेयं विकृतगात्री विरूपा ? एनां करालां निर्णतोदरीं वीक्ष्य किं न जुगुप्सते भवतश्चेतः ? पश्य मां कामरूपां सुकुमारगात्रीं युवतिं शृङ्गार-रसभूमिम्। मन्मथसच्छायशरीरप्रभस्य भवतः सौन्दर्यसारसर्वस्वां मां विहाय क्व जागर्त्यनुरूपा भार्या ? यदि मन्यसे आवयोश्शोभने शृङ्गारे इमौ प्रतिबन्धकाविति, तर्हि मा भैषीः। क्षणमात्रेण तयोर्निरन्तरं स्थानं प्रदास्यामि सर्वङ्कषे ममोदरे।"

"ततः पर्वतशृङ्गाणि वनानि विविधानि च।
पश्यन् सह मया कान्त दण्डकान् विचरिष्यसि॥"

इति। अस्मिन् शूर्पणखासंलापे भगवान् वाल्मीकिर्हास्यरसमन्तर्गूढचारं प्रवाहयति। सा खलु राक्षसी सौन्दर्यदेवतां जानकीं "करालां निर्णतो दरीम्" इति धिक्करोति इति किं ब्रूमः कालचक्रवैपरीत्यम् ? हन्त ! निम्बफलमपि मधुमयमाम्रफलं कटुरित्यधिक्षिपति। अद्धा ! मलजल-कुल्यापङ्किलो वराहोऽपि शुभ्रतनुं राजहंसं मलिनं इत्याक्रन्दति। साधु शूर्पणखे। साधु सर्वं त्वयि शोभते। अत एव भगवान् वाल्मीकिरुपसंहारे "इति सा लक्ष्मणेनोक्ता कराला निर्णतोदरी" इति तैरेव पदैः तां प्रतिक्षिपति।

अथ रामः तां परिजिहासिषुः लक्ष्मणं प्रति प्रेषयति। सोऽपि भ्रातु-राकूतं विभाव्य, भ्रात्रा परिहसितामेव पुनः परिहासयति, भ्रान्तामेव भ्रमयति, जडीकृतां पुनरसौ जडयति। पुनरपि सा वराकी राममभिवर्तते। अस्याः कामान्धायाः शूर्पणखायाः अविदितपरिहासायाः तत इतो भ्रमणम्

उपहसन्नाह कालिदासः– "साऽभूद्रामाश्रया भूयः नदीवोभयकूलभाक्" इति। तथा भोजोऽपि सोपहासमाह–

"दशरथात्मजयुग्मनिरीक्षणक्षणसमाकुलबुद्धिरियं दधौ।
उभयकूलसमस्थितशाद्वलभ्रमगतागतखिन्नगवीदशाम् ॥" इति।

सोऽयं शूर्पणखावृत्तान्तः सर्वप्रसिद्ध इति अत्र हास्यरसोपपादनेन नातीव प्रयत्यते। अत्र शूर्पणखासर्गे तावदिदं सुधीभिः विभावनीयम्। यावत् पौर्वाह्णिकं कर्म परिसमाप्य पर्णशालायां लक्ष्मणेन सह संकथाभिः रामः कालं यापयति, तावदेव तत्र समागता शूर्पणखा इति अभिहितम्। अतश्च कालो मध्याह्न इति स्फुटं प्रतीयते। तथा च मध्याह्नकाल एव शूर्पणखायाः रामे रतिरुदियाय इत्यभिदधानो भगवान् वाल्मीकिस्तस्याः कामं शरीरधर्मप्रयुक्तं सूचयति। शूर्पणखायाः व्यवस्थां विना रामं प्रति लक्ष्मणं प्रति च गतागतमपि इममेवार्थं ध्वनयति। सा खलु पुरुषमेव तरुणमकाङ्क्षत, न तु नियमेन रामं लक्ष्मणं वा। अत एव लज्जां थूत्कृत्य पुनः पुनस्तयोरन्यतरमुपावर्तत। "शरीरजसमाविष्टा राक्षसी" इति वाक्ये शरीरजेति पदं प्रयुञ्जानो भगवान् वाल्मीकिरपि इममर्थं स्फुटयति। "विसृज्य रामं सहसा ततो लक्ष्मणमब्रवीत्" इत्यत्र "सहसा" इति पदप्रयोगः अस्याः क्षणिकम् अभिनिवेशं साधु प्रथयति। अत एव भोजोऽपि'क्षण समाकुल'इति जग्रन्थ। तथा च शारीरिकं तापं निरुपयन् तामतिमात्रमुपहसति वाल्मीकिः। शारीरिकः खलु कामावेशः न क्षणमात्रं सहते। अत एव भोजोऽप्याह–

"कामान्धा राक्षसी सा पतिमतिमतनोत् मैथिलीप्राणनाथे" इति।

एतदेवाभिप्रेत्य कालिदासः शूर्पणखां 'वृषस्यन्तीं' पदेन व्याजहार–

"इति रामो वृषस्यन्तीं वृषस्कन्धः शशास ताम्" इत्यत्र।
वृषं पुरुषम् आत्मार्थम् इच्छतीति हि तदर्थः।

अथ द्वितीयं हास्यपात्रं विराधः हास्यरसस्तावत् क्वचित् अङ्गविकारैः, क्वचित् वेषविकारैः, क्वचित् वचोविकारैश्च जन्यते इति

निश्प्रचम्। "विकृताङ्गवचोवेषैःहास्यकारी विदूषकः" इति सुधाकर-प्रपञ्चितं विदूषकलक्षणमप्यमुमर्थमुपष्टंभयति। तमिमं त्रिप्रकारमपि हास्यरसं निदर्शयति वाल्मीकिप्रतिमानभूषणो विराधः। प्रथमतस्तस्य अङ्गविकारमुपक्षिपति कविः–

"गम्भीराक्षं महावक्त्रं विकटं विषमोदरम्।
बीभत्सं विषमं दीर्घं विकृपं घोरदर्शनम्॥"

इत्यनेन।
अथास्य वेषं सरसं चित्रयति –

"वसानं चर्म वैयाघ्रं वसार्द्रं रुधिरोक्षितम्।
त्रासनं सर्वभूतानां व्यादितास्यमिवान्तकम्॥
त्रीन् सिंहान् चतुरो व्याघ्रान् द्वौ वृषौ पृषतान् दश।
सविषाणं वसादिग्धं गजस्य च शिरो महत्॥
अवसज्यायसे शूलेऽवनदन्तं महास्वनम्॥"

इत्यनेन। अयि! मनोरमस्य शरीरस्य लोचनहरो वेषः! यक्षानुरुपो हि बलिः शोभते। किं ब्रूमः प्रतिभानवैचित्र्यमादिकवेः? स्वयमेव तावत् बुद्धावालेख्य विराधचित्रं, विभावयन्तु रसधोरणीं सहृदयपुङ्गवाः। यदि स्फुटितोदरं न हसिष्यन्ति, तर्हि कर्णं छित्वा पणीकुर्मः। अथ विराधस्य रामलक्ष्मणाभ्यां संलापे भगवान् वाल्मीकी रसप्रवाहं तरसा प्रवाहयति। ब्रूते स तपस्वी–

"कथं तापसयोर्वां च वासः प्रमदया सह।
अधर्मचारिणौ पापौ कौ युवां मुनिदूषकौ॥" इति।

अद्धा! पुण्यप्रतिष्ठो धर्मनिरतोऽयं साधुः तापसधर्मप्रच्युतो रामलक्ष्मणयोर्धर्ममुपदिशति। अयि भो विराध! सिंहव्याघ्रपृषतावसक्तं तव शूलमेव साधु प्रथयति धर्माचार्यत्वमायुष्मतः! त्वादृशस्य धर्माचार्यस्य तादृशमायसं शूलमेव शोभनो दण्डः, न पुनः इतरेषामिव पलाशादयः। रामलक्ष्मणयोस्तापसधर्मोपदेशव्याजेन जानकीमात्मसात्चिकीर्षोः तव

धर्मोपदेशोऽस्मान् हासयति विघटितोदरबन्धम्। कुतस्त्यमायुष्मतो धर्मशास्त्रमिति तु न प्रतीमः। सर्वथा सुनिपुणो धर्माचार्योऽसि। वयन्तु उत्पश्यामः, भगवान् वाल्मीकिरपि राघवयोस्ते धर्मोपदेशगाथामुपवर्ण्य रसमयीभूतः सुचिरं जहासेति।

अथ हास्यरसविचाररङ्गे कैकेयी मन्थरा च प्रविशतः। कैकेयीं तु भगवान् आदिकविः पुनः पुनः परिहसति इति सुविदितमेव रामायणाभिज्ञानम्। एकेनोदाहरणेनैवात्र परितुष्यामः। सुमन्त्रः निष्ठुरहृदयां ताम् उपालभते शतशः। सा तु कूटस्थं ब्रह्मेव निर्विकारा तिष्ठति। कविरिममर्थं वर्णयति—

"सुमन्त्रः क्षोभयामास भूय एव कृताञ्जलिः।
नैव सा क्षुभ्यते देवी न च स्म परिदूयते॥
न चास्या मुखवर्णस्य लक्ष्यते विक्रिया तदा" इति।

पुत्रमालिङ्गन् दशरथो मूर्च्छामुपगतः। तदानीं तत्पत्नीनां रोदनमुपक्षिपन्नपि कैकेयीम् उपहासपात्रं करोति। "देव्यस्ततः संरुरुदुः समेताः तां वर्जयित्वा नरदेवपत्नीम्। रुदन् सुमन्त्रोऽपि जगाम मूर्च्छां हाहाकृतं तत्र बभूव सर्वम्॥" अत्र कैकेयीं पृथक्कृत्य भर्तुः मूर्च्छायामपि निर्विकारां तामत्रापि परिहसति। उत्तरार्धेन चास्य हास्यरसस्य परिपोषमपि प्रयच्छति। यत्र हि दृढहृदयोऽपि सुमन्त्रो मूर्च्छितः, यदा च सर्वोऽपि जनः हाहाकारं क्रोशति तदापि न कैकेयी स्वस्थानात् अणुमात्रेणापि प्रच्यवते। साध्वीमणिकैकेयि! केन वा भूतेन विधाता त्वां ससर्ज इति भृशं विषीदामः। "त्वं लोकोत्सवकालरात्रिः" इति साधु प्रोक्ता शक्तिभद्रेण। एवं मन्थरापि वाल्मीकिना हास्यरसालम्बनत्वेन परिकल्पिता। विपरीतलक्षणया कैकेयीमुखेन तस्याः शरीरशोभां प्रशंसन् वाल्मिकिर्हास्यस्रोतसि निमज्जयति सहृदयलोकम्। आह स्म कैकेयी—

"पृथिव्यामसि कुब्जानामुत्तमा बुद्धिनिश्चये ।
त्वं पद्ममिव वातेन संनता प्रियदर्शना ।।
उरस्तेऽभिनिविष्टं व यावत्स्कन्धं समुन्नतम् ।
परिपूर्णं तु जघनं सुपीनौ च पयोधरौ ।।
विमलेन्दुसमं वक्त्रमहो राजसि मन्थरे ।.....
अग्रतो मम गच्छन्ती राजहंसीव राजसे ।।"

अहो ! कोऽयं मधुरिमौद्गारः । उन्मादयति खलु सहृदयभृङ्गानयं मधुसारः । अनेनैव तन्मयत्वमापन्नो भोजो मन्थरामन्तरेण जगाद–

"यस्याश्चित्तं प्रकृतिकुटिलं गात्रमित्रं बभूव" इति ।

तदेवं पात्रगतो हास्यरसो निरूपितः । अथेदानीं दृश्यगतो हास्यरसो निरूप्यते । सन्ति बहूनि हास्यरसस्फोटकाणि दृश्यानि रामायणे । परन्तु अशोकवनिकान्यायेन कांश्चिदेवोदाहरामः । तत्र प्रथमं तावत् स्फुरति हृद्यं प्रसुप्तरावणान्तःपुरदृश्यम् । एकैकापि नारी स्वंस्वमातोद्यं वादित्रं वा प्रियमिव परिष्वज्य शेते । तां मनोरमामवस्थां यथावच्चित्रयन् आदिकविः हास्यरसमुद्भावयति–

"बाहूनुपनिधायान्याः पारिहार्य विभूषितान् ।
अंशुकानि च रम्याणि प्रमदास्तत्र शिश्यिरे ।।
अन्या वक्षसि चान्यस्याः तस्याः काचित् पुनर्भुजम् ।
अपरा त्वङ्कमन्यस्याः तस्याश्चाप्यपरा भुजौ ।।
ऊरुपार्श्वकटीपृष्ठमन्योऽन्यस्य समाश्रिताः ।.....
'अन्या कमलपत्राक्षी पूर्णेन्दुसदृशासना ।'
अन्यामालिङ्ग्य सुश्रोणीं प्रसुप्ता मदविह्वला ।।"

इत्यादिना ।

अथ सीतां परिवृत्य तिष्ठन्तीनां राक्षसीनां चित्रमपि हास्यरसमुत्फुल्लयति । तद् यथा–

"एकाक्षीमेककर्णां च कर्णप्रावरणां तथा ।
गोकर्णीं हस्तिकर्णीं च लम्बकर्णामकर्णिकाम् ।।

  

हस्तिपाद्यश्वपाद्यौ च गोपदीं पादचूलिकाम्।
अतिमात्रशिरोग्रीवामतिमात्रकुचोदरीम्॥
अतिमात्रास्यनेत्रां च दीर्घजिह्वामजिह्विकाम्।
अनासिकां सिंहमुखीं गोमुखीं सूकरीमुखीन्॥"

अहो ! सौन्दर्यसाम्राज्यवल्लभास्तरुण्यः ! चित्रे निवेश्यैव एतासां दर्शनेन आत्मा पूर्णानन्दं प्राप्स्यति। सिंहमुखी गोमुखी च न पर्याप्तेति तत्र काचन सूकरीमुखी अपि रमणीमणिः। शिव! शिव! एतासां मध्ये च सौन्दर्यदेवता साध्वी जानकी।

सत्यं परिहासप्रगल्भो भगवान् वाल्मीकिः। ध्रुवं हसिष्यन्ति अचेतना गुल्मवल्मीकादयोऽपि आकर्ण्य गाथामिमां रससिद्धस्य भगवतो वाल्मीकेः इति सोरस्ताडं ब्रूम।

अथ वानराणां स्वाभाविक चेष्टाप्रपञ्चनेऽपि रसप्रवीणो भगवान् वाल्मीकिर्दर्शयति हास्यरसचातुर्यमात्मनः। जयपताकाभूषितानां परमानन्दसीम्नि रममाणानां कपीनां मधुवनप्रवेशस्तावत् तेषु निस्तुलाश्चेष्टाः विजृम्भयति। स्वयमेव कविः कथयतु—

"गायन्ति केचित् प्रणमन्ति केचित् नृत्यन्ति केचित् प्रहसन्ति केचित्।
पतन्ति केचित् विचरन्ति केचित् प्लवन्ति केचित् प्रलपन्ति केचित्॥
परस्परं केचिदुपाश्रयन्ते परस्परं केचिदुपाक्रमन्ते।
परस्परं केचिदुपब्रुवन्ते परस्परं केचिदुपारमन्ते॥"

एवं मन्दोदरीदर्शने हर्षप्रफुल्लचेतसो हनुमतो विविधाः चेष्टाः विभावयन्तु। तत्राह कविः—

"आस्फोटयामास चुचुम्ब पुच्छं ननन्द चिक्रीड जगौ जगाम।
स्तम्भानरोहन्निपपात भूमौ निदर्शयन् स्वां प्रकृतिं कपीनाम्॥" इति

एवं हरिसैन्यस्य सेतुसन्तरणदृश्यमपि हास्यरसे प्लावयन्ति नः सर्वान्। तदेतद्रसावहं दृश्यं चित्रयति भगवानादिकविः—

"अन्ये मध्येन गच्छन्ति पार्श्वतोऽन्ये प्लवङ्गमाः।
सलिले प्रपतन्त्यन्ये मार्गमन्ये न लेभिरे॥"

एतादृशानि सन्ति सरसानि शब्दचित्राणि बहूनि युद्धचित्रेषु। तत्र सुग्रीवरावणयोर्मुष्टीमुष्टि, कुम्भकर्णप्रबोधः, रामकुम्भकर्णयोर्युद्धञ्च विशेषतः पुष्णन्ति। दिङ्मात्रमुदाह्रियते। कुम्भकर्णप्रबोधनाय राक्षसैः कृतानुपायान् सचमत्कारं प्रस्तुवन् कविर्वर्णयति–

"केशानन्ये प्रलुलुपुः कर्णानन्ये दशन्ति च।
उदकुम्भशतान्यन्ये समसिञ्चन्त कर्णयोः॥
न कुम्भकर्णः प्रस्पन्दे महानिद्रावशंगतः।" इति।

एवं त्रिजटास्वप्ने रावणः, मृतं रावणं परितो विलपन्त्यः तत्पत्न्यश्च भगवता कविना हास्यरसालम्बनतया परिकल्पिताः। तदेवं निरूपितो दृश्यगतोऽपि हास्यरसः।

अथाधुना भगवान् वाल्मीकिः स्वप्रबन्धे हास्यरसस्य परिपोषं कथं विधत्ते इति मीमांसनीयम्। अत्र आह स्म जगन्नाथपण्डितः– "कविना प्रकृतरसं परिपोष्टुकामेन तदभिव्यञ्जके काव्ये तद्विरुद्धरसाङ्गानां निबन्धनं न कार्यम्।" इति अतश्च रसपरिपोषविधाने प्राथमिकं साधनं रसविरोधवर्जनमेव। रसानां परस्परं विरोधाविरोधे च प्रपञ्चितमालङ्कारिकैः।

तदुक्तं रसगङ्गाधरे–"एतेषां परस्परं कैरपि सह अविरोधः, कैरपि विरोधः" इति। अन्ये तु उदासीना इति तत्र नागेशभट्टः। हास्यस्य पुनः शृङ्गारेण अविरोधः, इतिरैस्सह उदासीनभावः। अत एव शूर्पणखावृत्तान्ते हास्यस्य शृङ्गारेण अविरोधात् हास्याङ्गतया श्रृङ्गारस्य निबन्धनमकार्षीत् भगवान् आदिकविः। तथा च निरतिशयं पोषमपि हास्यरसस्य व्यधत्त। तथा विराधचित्रणे बीभत्सरसाङ्गत्वेन, रावणसुग्रीवादियुद्धे वीररसाङ्गत्वेन च निबन्धनेन हास्यस्य परं परिपोषमतनुत भगवान् वाल्मीकिः। अपि च रसभङ्गहेतोः अनौचित्यस्य परिहार

एव द्वितीयं साधनं रसपोषसिद्धौ। तदुक्तम्– "अनौचित्याद् ऋते नान्यद् रसभङ्गस्य कारणम्। प्रसिद्धौचित्यबन्धस्तु रसस्योपनिषत्परा" इति। "भङ्गश्च पानकादिरसादौ सिकतादिपातजनितेव अरुन्तुदता" इति जगन्नाथः। तत्र प्रतिकूलविभावयोजनम्, अकाण्डे प्रथनम्, अकाण्डे विच्छेदः इत्यादीनि अनौचित्यबीजानि वाल्मीकिप्रबन्धम् अणुमात्रेणापि नोपसर्पन्तीति कुतस्त्यो रामायणे रसभङ्गः? रसपरिपोषणे तार्तीयं तु निदानमलङ्कारः तदाह आचार्यदण्डी– "कामं सर्वोऽप्यलङ्कारो रसमर्थे निषिञ्चति।" इति। भगवान् वाल्मीकिश्च बहुत्र तैस्तैरलङ्कारैः पोषयति हास्यरसम्। शूर्पणखासर्गे "सुमुखं दुर्मुखी रामं वृत्तमध्यं महोदरी" इत्यादौ व्यङ्ग्येन विषमालङ्कारेण, विराधचित्रणे रावणान्तःपुरप्रस्तावे च स्वभावोक्त्यलङ्कारेण च हास्यरसपरिपोषं प्रतनुते। एवम् इतरत्रापि रसानुगुणैरलङ्कारैरुपचिनोति हास्यरसम्। दिङ्मात्रमुदाहरामः। युद्धसन्नद्धमतिकायं लक्ष्मणः प्रब्रूते–

"ततः शिरस्ते निशितैः पातयिष्याम्यहं शरैः।
मारुतः कालसम्पक्वं वृन्तात्तालफलं यथा॥" इति।
अनन्तरञ्च लक्ष्मणशरविद्धं राक्षसं कविश्चित्रयति–
"स ललाटे शरो मग्नस्तस्य भीमस्य रक्षसः।
ददृशे शोणितेनाक्तः पन्नगेन्द्र इवाचले॥" इति।

उभयत्रापि रसभूषणोऽलङ्कारः! अनया कालपक्वतालफलपतनोपमया, रुधिररञ्जितपन्नगेन्द्रोपमया च सहृदयचेतसि अङ्कुरितो भवति हास्यरसः। एवं मन्थरावृत्तान्ते "त्वं पद्ममिव वातेन सन्नता प्रियदर्शना" "अग्रतो मम गच्छन्ती राजहंसीव राजसे" इत्युपमाद्वयमपि हास्यरसोपचायकमेवेत्यत्र रसिकचेतांसि भवन्तु प्रमाणम्।

एवम् अलङ्कार इव क्वचित् रीतिः अपि रसमुपचिनोति, यथा युद्धकाण्डे विद्युज्जिह्वमायाप्रयोगसर्गे कपिसैन्यावस्थावर्णने। रावणः प्रथमं

रामहननं लक्ष्मणपलायनं च सीताया निवेद्य मृतानां वानरनेतॄणामवस्थां चित्रयति। तद्यथा——

"सुग्रीवो ग्रीवया शेते भग्नया प्लवगाधिपः।
निरस्तहनुकः शेते हनुमान् राक्षसैर्हतः॥
अनुतिष्ठति मेदिन्यां पनसः पनसो यथा।
नाराचैर्बहुभिश्छिन्नः शेते दर्यां दरीमुखः॥
कुमुदस्तु महातेजा निष्कूजः सायकैः कृतः
अङ्गदो बहुभिच्छिन्नः शरैरासाद्य राक्षसैः॥
परितो रुधिरोग्दारी क्षितौ निपतिताङ्गदः।"

इति। कः खलु रसिकमतल्लिका हास्यरसमिह नास्वादयति? इह तु हास्यरसः शब्दसामर्थ्योपष्टब्धेन रीतिबन्धेन परमुपचयमधिगच्छति। एवं "गायन्ति केचित् प्रणमन्ति केचित्" इत्यादौ अपि वर्ण्यमानचेष्टानुगुणेन वृत्तेन हास्यरसस्य निरतिशयः परिपोषः अपरोक्षमेवानुभूयते। अर्थालङ्कार इव शब्दालङ्कारोऽपि रसमुपचिनोत्येव। यथा रावणस्य प्रणयप्रार्थनायाम् "अयि लल ललने यथासुखं त्वं त्वयि च समेत्य ललन्तु बान्धवास्ते" इत्यत्र शब्दानुप्रासो निरतिशयं रसचमत्कारमावहति। "उन्मत्त इव ल–ल–ल–लेति प्रलपति मुग्धोऽयम्" इति प्रतीतिमुत्पाद्य झटित्यस्मान् हासयति।

एवं रसाभासोऽपि हास्यरसमनुभावयति। तदुक्तं नाट्यदर्पणे—"सर्वरसानां च आभासाः अनौचित्यप्रवृत्तत्वात् हास्यरसस्य कारणम्। रावणस्य हि अविषयप्रवृत्तत्वात् शृङ्गाराभासः सतां हास्यमुपजनयति। हास्याभासादपि हास्यो भवति।" इति। यथा च शृङ्गाराभासः रामशूर्पणखयोः हास्यरसमुपजनयति तथा पूर्वमेव व्याख्यातमिति नात्र पुनः पराक्रम्यते। सुन्दरकाण्डे सीतासक्तहृदयं दशग्रीवं राक्षसी काचन धान्यमालिनी झटित्युपसृत्य तं परिष्वज्य ब्रूते—

"मया क्रीड महाराज सीतया किं तवानया।
विवर्णया कृपणया मानुष्या राक्षसेश्वर॥" इति।

अत्रापि शृङ्गारस्य उभयनिष्ठत्वाभावेन आभासत्वात्, तादृशशृङ्गाराभासो हास्यमुपस्थापयतीत्यलं पल्लवितेन।

अत्रेदं सर्वम् असहमानाः केचित् पण्डितम्मन्याः प्रत्यवतिष्ठेरन्– 'रामायणं यदि काव्यमभविष्यत् तर्हि तस्य रसमयत्वं, तस्मिन् हास्यरस-प्रतिपादनं च नूनम् उपापत्स्यत। न त्वेतदस्ति। न खल्विदं रामायणं काव्यम्। तत्कस्य हेतोः? तत्र उपक्रमोपसंहारयोः 'एतदाख्यानमायुष्यम्' 'इतिहासं पुरातनम्,' 'पुरावृत्तम् आख्यानं,' 'संहिताम् ऋषिणा कृताम्' इत्येवम् अन्यथा व्यपदेशानां बहुलमुपलम्भात्। किञ्च अस्य श्रवणात् पठनाच्च अदृष्टं स्वर्गादिफलं, दृष्टं धनपुत्रादिफलं चोत्पद्यते इत्यसकृदा-वेदितम्।

तच्चास्य काव्यत्वे नोपपद्यते। न खलु कालिदासादिप्रणीतानां काव्यानां श्रवणेन पठनेन वा क्वचित् अदृष्टं फलं संभाव्यते। रामा-यणस्य पुनः "यः पठेद् रामचरितं सर्वपापैः प्रमुच्यते' 'पठन् द्विजो वागृषभ-त्वमीयात्....' 'आयुष्यमारोग्यकरं प्रशस्यं सौभ्रातृकं बुद्धिकरं शुभं च' 'पुत्रकामस्तु पुत्रान् वै धनकामो धनानि च' 'अश्वमेधसहस्रस्य वाजपेया-युतस्य च। लभते श्रवणादेव सर्गस्यैकस्य मानवः॥' 'शृण्वन् रामायणं भक्त्या यः पादं पद्यमेव वा। स याति ब्रह्मणः स्थानं ब्रह्मणा पूज्यते सदा' इत्येवं सहस्रधा फलप्रपञ्चः प्रपञ्चितः। किं च क्रान्तदर्शी भगवान् वाल्मीकिः अधर्मचण्डमारुतेन मुहुर्मुहुः वेपमानस्य धर्मस्थूणस्य स्थैर्यप्रदानाय वेदार्थोपबृंहणाय च रामायणं प्रणिनाय, न तु हृद्येन रस-मयेन काव्येन रसिकलोकं रञ्जयामीति। "इदं पवित्रं पापघ्नं पुण्यं वेदैश्च सम्मितं,'

**कामार्थगुणसंयुक्तं धर्मार्थगुणविस्तरम्।**
**समुद्रमिव रत्नाढ्यं सर्वश्रुतिमनोहरम्॥"**
**'वेदोपबृंहणार्थाय तमग्राहयत प्रभुः।'** इति

रामायणवाक्यान्येवामुमर्थं प्रमाणयन्ति। तथा चाहुः साम्प्रदायिकाः–

"वेदवेद्ये परे पुंसि जाते दशरथात्मजे।
वेदः प्राचेतसादासीत् साक्षाद् रामायणात्मना॥" इति।

तस्मात् अकाव्यत्वेन व्यपदेशदर्शनात्, पठनश्रवणादीनामदृष्टफलकीर्तनात्, वेदार्थोपबृंहणोद्देश्येन प्रवृत्तत्वाच्च नायं वाल्मीकिप्रबन्धः काव्यम्। किं तर्हि पुण्योऽयमितिहासो धर्माणामाकरः इति वदामः। तथा च रामायणे काव्यगन्धस्याप्यभावात् तत्र हास्यरसादीनामुपन्यासोऽयम् अकाण्डताण्डवः इति युक्तमुत्पश्यामः"—इति॥
अत्राभिधीयते—

कुतूहलात् पृच्छामि भोः, प्रथममावेद्यतां कुतस्त्यो भवान् एवं रामायणहास्यरसप्रपञ्चमखिलमवधार्य अधुना रामायणं न काव्यम् इति जल्पति? लौकिकाः खलु कथयन्ति, कश्चिद् रामायणकथामखिलामाकर्ण्य अन्ततो व्याजहार 'सीतायाः पितृव्यो रामः' इति। मन्येऽधुना भवानद्य आगतस्तस्य ज्येष्ठभ्राता। किञ्च भोः सर्वथानाघ्रात एव आयुष्मता रामायणगन्धलेशोऽपि इति ध्रुवा प्रतीतिर्नः। उपक्रमे एव खलु सहस्रशो वरीवर्ति रामायणस्य काव्यत्वव्यपदेशः। कांश्चिदेवात्रोदाहरामः। तथाहि। 'न ते वागनृता काव्ये, कृत्स्नं रामायणं काव्यमीदृशैः करवाण्यहम्' यशस्करं काव्यमुदारधीर्मुनिः 'काव्यं रामायणं कृत्स्नं सीतायाश्चरितं महत्' 'काव्यमेतदगायताम् इत्यादिभिः असकृत् स्वं प्रबन्धं काव्यत्वेन व्यपदिशति भगवान् वाल्मीकिः। एवम् उपसंहारेऽपि आदिकाव्यमिदं त्वार्षं 'श्रृणोति य इदं काव्यं' 'श्रुत्वा शुभं काव्यमिदं महार्थम्' इत्यादीनि दृश्यन्ते प्रमाणानि।

एवम् उपक्रमोपसंहारयोः रामायणस्य काव्यत्वे घोष्यमाणे कथङ्कारं ब्रूषे विस्रब्धं रामायणं न काव्यम् इति? किञ्च सांप्रदायिकाः खल्वपि 'आरुह्य कविताशाखाम् इति रामायणस्य काव्यत्वमेव प्रथयन्ति। यदि धर्म्योऽयमितिहासः स्यात् रामायणं, तर्हि आरुह्य धर्मशाखाम् इति अवक्ष्यन्। यत् तु प्रलपसि वेदार्थोपबृंहणोद्देश्येन प्रवृत्तत्वात् न रामायणं

काव्यमिति तदप्यविचारितम्। सर्वस्यापि काव्यस्य कथञ्चित् धर्मपथ-प्ररोचनोद्देश्येनैव प्रवृत्तेः। अत एव प्रभुसंमितेति वेदानां सुहृत्सम्मितेति पुराणानां, कान्तासम्मितेति काव्यानां च व्यपदेशः सङ्गच्छते। पठनश्रवणादीनामदृष्टफलप्रदत्वं च महाप्रभावेण वाल्मीकिमुनिना विरचितत्वेन उपपद्यते। वस्तुतस्तु इमे अर्थवादा एवेति नातीव तेषु अभिनिवेष्टव्यम्। तथा च रामायणस्य काव्यत्वं न केनचिदपलपितुं शक्यम्। काव्यस्य च रस एव जीवितमिति रामायणे हास्यरसोपन्यसने न किञ्चित् दुष्यति।

अथेदानीं 'शूर्पणखामुखे' हास्यरसेन तन्मयीभावं प्राप्तस्य रघुधुरन्धरस्य "रसो वै सः" इत्यादिश्रुतिभिः वस्तुतो रसरूपस्य परब्रह्मणो नतिततिभिः स्मृतिततिभिश्च उपसंहरामः। इति सर्वं शिवम्॥



भाषणमध्ये भाषक: "सभायामस्यामर्धांशजना मूर्खाः"

सदस्या: "कृपया वचनमिदं प्रतिसंहर"

भाषकः "सभायामस्यामर्धांशजनान मूर्खाः"

कस्मिंश्चित्पाकशास्त्रग्रन्थे प्रकाशितमासीत् "विद्युत्ताडितो मनुष्यश्चिकित्सार्थं होराद्वयं शीतलधाराजले स्थापनीयः। यदि रुग्णो जीवनचिह्नं न दर्शयति तर्हि जले किञ्चिल्लवणं प्रक्षिप्य पुनर्घटिकैका प्रतीक्षणीया।"

[ संस्कृतविश्वपरिषदः अष्टमाधिवेशनसमारोहे परिपठितम् ]

# संस्कृताभ्युदयगीतम्

के. एस्. भास्कर भट्ट*

एहि ! एहि ! भारत ! संस्कृतस्य वृद्धये ।
पाहि, पाहि, संस्कृतं भारतस्य सम्पदम् ॥

संस्कृतं हि जीवितं सर्वलोकभाषिणां ।
संस्कृतेश्च बोधकं भारते निवासिनाम् ॥
संस्कृतं सनातनं प्राच्यतत्वधारकं ।
संस्कृतं चिरन्तनं भक्तिमुक्तिसाधकम् ॥ ॥१॥
एहि ! एहि ! भारत !

वेदशास्त्रसुन्दरं लोकतन्त्रशिक्षकं ।
मानवीयधर्मदं कर्मयोगदर्शकम् ॥
अत्र रामसंकथा, भारतं पुराणकं ।
चागमा लसन्त्यमी दिव्यभावबोधकाः ॥ ॥२॥
एहि ! एहि ! भारत !

अमुत्र पूर्वसूरयः सहस्रशो महाकृतीः ।
प्रणीय, धर्मदेशिका वितेनिरे जगद्धितम् ॥
महर्षिवाक्सुधाप्लुतं, महात्मसूक्तिसूज्ज्वलं ।
तथा कवीश्वरप्रवृत्तकाव्यगंगयाऽकुलम् ॥ ॥३॥
एहि ! एहि ! भारत !

संस्कृतं न केवलं मानवस्य भाषितं ।
नाकलोकवासिनाप्येतदेव कांक्षितम् ॥
देश्यभाषिभिर्बुधैः मातृवत्पुरस्कृतं ।
त्वन्यदेश्यपण्डितैरादरेण सत्कृतम् ॥ ॥४॥
एहि ! एहि ! भारत !

व्यास-नाकुजात-भास-कालिदास-लालितं ।
भोज-माघ-हर्ष-बाण-भारविप्रफुल्लितम् ॥
एवमुज्ज्वलं महत्सुसंस्कृतं सदातनं ।
नैव तन्मृतं भवेद्धि यज्जनैः प्रभाष्यते ॥ ॥५॥
एहि ! एहि ! भारत !

---

* अध्यक्षः, लक्ष्मीशसंस्कृतपाठशाला, कडूरु, मैसुरुदेश ।

  

अस्मदार्यपालितं सूनृतोक्तिभाजनं।
संस्कृतं नु विस्मरेदस्मदीयभूः कथम् ? ।।
संस्कृतस्य पोषणं भारतस्य भूषणं
संस्कृतस्य दूषणं स्वात्मनाशकारणम् ।। ।।६।।
एहि ! एहि ! भारत !

हन्त ! कष्टमद्भुतं संस्कृतस्य साम्प्रतं।
दुःखमागतं शतं, देव ! वारय द्रुतम् ।।
भावुका वयं च नो सहामहेऽस्य दुर्गतिम्।
संस्कृतस्य भूतये, यतेमहि प्रमोदिताः ।। ।।७।।
एहि ! एहि ! भारत !

भारतीयसंस्कृतिप्रसूनदिव्यसौरभं।
संस्कृतस्य विश्वपर्षदुत्सवोऽष्टमो महान् ।।
लिम्पतीव, गन्धवाहसन्निभः सुखावहः।
सर्वलोकचित्तभित्तिमप्यसौ जयत्यहो ! ।। ।।८।।
एहि ! एहि ! भारत !

हन्त ! विघ्न आस्थितः संस्कृतस्य निर्गतः।
सूर्य उद्गते यथा ध्वंसते तमःकुलम् ।।
विश्वपर्षदाश्रयात्संस्कृतस्य दुन्दुभिः।
विश्वलोकसीमनि ध्वन्यतामहर्निशम् ।। ।।९।।
एहि ! एहि ! भारत !

संस्कृतं समेधतां, संस्कृतं महीयतां।
संस्कृतं दिने दिने, वर्धतां गृहे गृहे ।।
भास्करः कविः सुधीः संस्कृत-प्रचारिणीं।
गीतिमातनोत्यसौ भावुकात्मतुष्टये ।। ।।१०।।
एहि ! एहि ! भारत !

# कारुण्यमूर्तिस्तवः

बी. एस. नरसिंह अयंगारः*

१. समागच्छ महाबाहो कृपां कुरु सदा मयि।
संसारेऽस्मिन्महाघोरे पतितं पापसञ्चयात् ॥

२. त्वामहं शरणं प्राप्तः त्वदन्यो नास्ति मे गतिः।
तस्मादुद्धर मां दीनं त्वत्पादौ दर्शय प्रभो ॥

३. पापोऽहं सर्वथा भ्रान्तश्चराम्यस्मिन्महार्णवे।
अपारात्तव कारुण्यादभयं त्वं प्रयच्छ मे ॥

४. मुनिभिश्चिन्तितं त्वां तु कथं द्रक्ष्याम्यचेतनः।
साधनैर्हि विहीनोऽहं त्वामेव शरणं गतः ॥

५. त्वकारुण्यप्रभावाद्धि रक्षिता सर्वजन्तवः।
भक्ताश्चैव सदा शीघ्रं सर्वथा पालितास्तथा ॥

६. अनन्यभक्तिः त्वय्येव अनुगृह्णीष्व मे विभो।
त्वदंध्रिस्मरणादन्य उपायो न हि दृश्यते ॥

७. दयालो त्वं महापापं कृपणं मां विगर्हितम्।
समुद्धर हरे राम कृष्णनामाङ्कित प्रभो ॥

८. हरे राम हरे कृष्ण कृष्ण कृष्ण हरे हरे।
इति ते सन्ति नामानि सदा मे त्वं प्रवर्तयः ॥

९. पाहि मां त्रिजगन्नाथ शरणं त्वां गतं हरे।
सर्वजीवशरण्यात्मन् सर्वलोकाश्रयाऽच्युत ॥

१०. कारुण्यमूर्ते तव पादपद्म
सुनिश्चलां भक्तिमनन्यगामिनीम्।
दत्वापरां सर्वसुखावहां त्वं
क्षमस्व रक्षस्व हरे प्रपन्नम् ॥

*

---

* ४२९ (टी) १६, ए, मेन रोड, बंगलोर–११
संस्कृतविश्वपरिषदः अष्टमाधिवेशनसमारोहे परिपठितम्।

 

# संस्कृतभाषया सह प्रथमः परिचयः*

इ. एन्. शाफर अनु. डॉ. चंद्रभाल त्रिपाठी

भारतवर्षस्य दक्षिणापथे तिरुपति-नगरे तत्रत्य-श्रीवेङ्कटेश्वर-मन्दिरस्य दर्शनार्थिनो मे दशाब्दपूर्वं संस्कृतभाषया सह सर्वप्रथमः परिचयः अभूत् ।

तदानीं श्रीवेंकटेश्वरविश्वविद्यालये संस्कृतविश्वपरिषदः तिरुपति-सम्मेलनम् आयोजितम् आसीत् । तत्कालीनाः भारतराष्ट्रपतिमहाभागाः डॉक्टर-राजेन्द्रप्रसादमहाशया अपि तिरुपतिं समागताः, सम्मेलनस्यास्य सभापतित्वं समलङ्कृतवन्तः । तैरुक्तं यत् पाश्चात्य-पण्डितानां संस्कृतकृते सुकृतः परिश्रमो भारतवर्षेऽपि सबहुमानं स्मर्यते इति ।

संस्कृतविश्वपरिषदो निखिलभारतस्थितविभिन्नशाखाभ्यः तिरुपति-नगरे सहस्राधिकत्रिंशत--परिमिताः सभासदः उपस्थिताः । तेषां मध्ये राज्यपालचतुष्टयं, केचन राज्यप्रधानमन्त्रिणः, विश्वविद्यालयानां प्राध्यापकाः समुल्लेखनीयाः; अन्येऽपि संस्कृतभावुकाः पृथग्जनाः दर्शनपथं मे समायाताः । प्राचीनतरया देववाण्या प्रेमसूत्रनिबद्धाः सर्वे सम्मेलनमिदं समलङ्कुर्वन्ति स्म । सम्मेलनावसरे कश्चन यक्षप्रश्नो विचारगोचरताम् आपन्नः, स अद्यावधि स्पष्टीकरणमपेक्षते । कैरपि सभासद्भिः संस्कृतभाषायाः प्राचीनरूपे समर्थिते सति सुबहुलैरन्यैस्तु सरलं संस्कृतं पुरस्कृतं बालशिक्षानुकूल्याय । अनया चर्चया तत्सम्बद्धा काचिदपरा समस्यापि प्रकटीकृता—संस्कृतभाषा पुनरपि जनसामान्य-व्यवहृता भवेद्, न वा ? इति ॥

सम्मेलनकाले तु बहुभिः पण्डितवर्यैः अनायासेन संस्कृतभाषा प्रयोजिता, श्रोतृगणेन च भूरिभूरि प्रशंसिता; अविस्मरणीया खलु

---

* कोलन-नगरवाण्या: अनुग्रहात् ।

घटनेयम्। भारतप्रशासनैः नूतनसंस्कृतविद्यापीठानां निर्माणमपि करणीयमेव इति सर्वसम्मत्या समुद्घोषितम्।

सम्मेलनान्ते उद्यापनावसरे तत्कालीन-उत्तरप्रदेश–राज्यपालेन मुंशीमहोदयेन कथितं यद्-ईरान-मिस्र-ग्रीस-देशीयाः संस्कृतयः विलीना विनिष्टाश्च; भारतवर्षे तु संस्कृतभाषया संस्कृतिपरम्परा अनवच्छिन्ना, वेद-रामायण-महाभारतादिधर्मग्रन्थाः साम्प्रतमपि भारतीयजनगणमनसि श्रद्धां शक्ति च प्रेरयन्ति, भविष्यत्कालेऽपि भारतीयसंस्कृतेः प्राणभूता भविष्यन्ति। दिवङ्गत-प्रधानमन्त्रिणो जवाहरलालस्य स्वराजनीतिप्रभावः प्राचीनानुश्रुतिमूलको बभूव इत्यपि मुंशीवचनम्। माध्यमिकशालासु संस्कृतभाषा सर्वैरपि छात्रैः अवश्यं पठनीया भवेद् इति मुंशी-महोदयेन स्तोकपूर्वम् उच्चारितम्।

सम्मान्याः श्रोतृमहाभागाः! तिरुपति-सम्मेलनात् पश्चाद् वर्षदशकं व्यतीतम्, अवान्तरकाले तु भारतवर्षे संस्कृतपुनरुत्थानं द्रुततरं, शीघ्रतरं बोभवीति। श्रूयते खलु-पञ्चशदधिकाः संस्कृतपत्रिकाः प्रकाशं नीयन्ते। अत एव कोलोन-नगरस्थित-जर्मनआकाशवाणी-केन्द्रस्य दक्षिण-एशिया-विभागेन अद्य निर्धारितम् यद् हिन्दीभाषाप्रसरणान्तर्गताः संस्कृतभाषाप्रयोगा अपि प्रतिपक्षं भवच्छ्रवणगोचरीकर्तव्याः इति॥



आगन्तुक : पुरुष :–"सुप्रभातं वैद्यराज! भवतश्चिकित्सया कथमहमुपकृतोऽस्मीति वक्तुमत्रागतः।"
वैद्य : "एवम्? किन्तु भवांस्तु मया कदापि न चिकित्सितः।"
"सत्यम्। किन्तु मम श्वशुरश्चिकित्सितो यश्च ह्यः परलोकं गतः"



# कविकुलगुरुः कालिदासः

एस्. यज्ञेश्वरशास्त्री*

विदितमेवैतत्समेषां विदुषां, यदिह खलु सकलविद्याकलाकलापादिपीठे, निखिलपुण्यवज्जनपदमण्डनायमानेऽस्मिन् भारते वर्षे, निजयशःसुरभीकृतदिगन्तरालाः, एकरसामृतलाभवृथागर्वितनिर्जरेर्ष्ययेव, साहित्यपाथोनिधिमन्थनेन, नवरसपूर्णं कर्णामृतमुत्पाद्य रसिकमनांसि तोषयन्तः प्रतिभाशालिनः परःशता महाकविपदमारूढाः कवीश्वराः स्वकृतिमण्डनैर्वाग्वधूं यथायथं मण्डयन्ति स्मेति। तेषामपि कीर्तिशालिनां सुधांशुरिवोडुपुञ्जमध्यगतः 'कालिदासः' अग्र्यपदमारोहतीति, सर्वेषां प्राचीनानां पण्डितानामभ्युपगमः। गभीरार्थप्रतिपादकानां सारस्वतजलधिमन्थनेन परिस्रवत्सुधावाहिनां महाकाव्यानां निर्मातॄणां कवीनां सारस्वतसृष्टौ नूनमयं मुकुटरत्नायते।

प्रसिद्धिमतः कस्यापि काव्यकर्तुरुत्पत्तिवैदुष्यादिकमेकान्तेनावेदयितुं नाशक्यत एव तैः स्वकालोट्टङ्कनादृतेति ऐतिह्यविदः सङ्गिरन्ते। न खल्वेतन्न विदितं विदुषां यद्दुरुन्नेय एव प्रायेणावस्थितिसमयः प्राचीनानामिति। एते हि अबहुमन्यमाना इव आत्मनो गुणनिचयं नैवोल्लिखन्ति, पायः स्वीयप्रबन्धरत्नेषु तन्निर्माणावसरं विशेषतश्च काव्येषु। अत एवैतेषां तत्तत्प्रबन्धगतैर्विशेषैरेव निर्णीयते समयोऽवस्थानस्य। तन्नैतदाश्चर्यं यत्प्राचीनतमो विनीतप्रवरश्च कविपुङ्गवः कालिदासः, स्वीयप्रबन्धरत्ने आत्मनोऽवस्थितिसमयं नालेखीदिति। तथापि क्रिस्ताब्दपूर्वे वा

* विद्यार्थी, भवनीय संस्कृतमहाविद्यालये, मुंबई–७.

चतुर्थे षष्ठे वा शतके समजायतेति मतं बहुभिरैतिह्यविद्भिरभिप्रेयते। एतस्य निवासस्थानादिविषये पुनर्वङ्गकाश्मीरविदर्भादिदेशीयाः जनास्तं स्व-स्वदेशोद्भवमेव प्रतिपादयन्तीति सर्वंजनीनमाहात्म्यमेतस्य प्रथते। सोऽयं कविपुङ्गवः, रघुवंश-कुमारसम्भव-मेघदूतानि महाकाव्यानि, अभिज्ञानशाकुन्तल-विक्रमोर्वशीय-मालविकाग्निमित्राभिधानानि नाटकानि च सञ्जग्रन्थ। अद्यास्मिन् धरातले नैतादृक्कोऽपि शेमुषीमान् यः किल कविकुलतिलकायमानस्य कालिदासस्य कृतिषु श्रद्धान्न भजेते। आसेतोराहिमाचलात् अस्य काव्यमाधुरी विद्वन्मनस्स्वेव लब्धावकाशा चकास्ति। न केवलं भारते अपि तु निखिले भूमण्डलेऽस्य विजयिनी काव्यपताका दोधूयमाना दरीदृश्यते। एतेन रचिते रघुवंशकुमारसम्भवाख्ये काव्ये पञ्चसु महाकाव्येष्वन्तर्भवतः। रघुवंशमहाकाव्यं शाकुन्तलं नाम नाटकं च रचितासु कृतिषु चूडारत्नायेते।

काव्यग्रन्थेषु रसविधायिन्यौ द्वे शैल्यौ भवतः द्राक्षापाको नारिकेलपाकश्चेति। तथोक्तम् 'द्राक्षापाकः स कथितो बहिरन्तःस्फुरद्रसः। स नारिकेलपाकः स्यादन्तर्गूढरसोदयः' इति। एतेन रचितानि काव्यान्यद्वितीयश्रेण्यामन्तर्भवन्तीत्ति चेदुच्येत नैतदतिशयोक्तिकोटिमारोहेत्। तत्र स्वकाव्येष्वनेन सकलशास्त्रनदीष्णता स्वीया सर्वज्ञता, रसिकोत्तंसलौकिकव्यवहारपरिनिष्ठता च प्रादर्शीति विदितमेव सर्वेषाम् विदुषाम्। रघुवंशस्याष्टमसर्गे समुपवर्णितसङ्गतिमधिगम्य दुःखस्य सर्वेषां रसिकानां विशेषतश्च तारुण्योपहितानां चेतसि परुषतरपाषाणसदृक्षेऽपि विलक्षणा दुःखानुभूतिरुपजायत इत्यपरोक्षं प्रेक्षावताम्। तदिदमालोच्यतां सुधीभिः यदेतान् स्रगियं यदि जीवितापहेत्यारभ्य 'परिशून्यं शयनीयमद्य मे', 'हरता त्वां वद किं न मे हृतम्' इत्यादिश्लोकान् सम्यक् विमृश्य। एवमेव, कुमारसम्भवीयरतिविलापप्रसङ्गे "अथ सा पुनरेव विह्वला" "त्वदधीनजीविताम्" भृशं स्तनसम्बाधमुरोजघान च, तथा "अस्त्रै-

स्तावन् मुहुरुपचितैः" "सङ्गमं नौ कृतान्तः," इत्यादिमेघसन्देशस्थाः श्लोका अपि सविमर्शमालोच्यताम्। शाकुन्तलीयपञ्चमषष्ठाङ्कौ च समाकलयन्तः किल काव्यरसिका क्षणमुद्विग्नचित्ताः रसास्वादनसमये भूयासुरित्यत्र नास्ति स्तोकोऽपि सन्देहः। इत्थमेव महाकवेरस्य शास्त्रादिप्रावीण्यं "ऋणाभिधानात्स्वयमेव केवलं तदा पितॄणां मुमुचे स बन्धनात्" "श्रुतेरिवार्थं स्मृतिरन्वगच्छत्" "दिनान्ते निहितं तेजः" "धातोरध्ययनार्थस्य" "सहजं किल यद्विनिन्दितं तत्कर्म न खलु विवर्जनीयमिति" तानि-श्रुति-स्मृति वाक्यान्युपष्टम्भयत्सु नैकस्थलेषु प्रकाशितं दरीदृश्यते। औपम्यदाने पुनरस्य सारस्वतसृष्टिकर्तुरसाधारणी धोरणी विकासयत्येव हृदयसरोजानि सुकुमारमतीनाम्। व्यवहारज्ञता च "वनौकसोऽपि लौकिकज्ञा वयम्" "पदं हि सर्वत्र गुणैर्निधीयते" एतत्प्रभृतिभिर्वाक्यैः सुस्पष्टमवबोध्यते। किमधिकम् एतेन रचितेषु काव्येषु, नाटकेषु च, प्रतिपद्यं प्रतिपदं वा रसिकजनमनोविनोदनस्वारस्यं गौरवञ्च समुपलभ्यते। उपरिनिर्दिष्टकारणैरस्मत्पूर्वजैः 'कविकुलगुरुरिति निर्दिश्य रसभावाविष्करणपटीयसीनां महाकविकृतीनामास्वादयितारः न केवलं भारतीयाः किन्तु परम्परागतः संस्कृतवाङ्मये परिचयरहिताः पाश्चात्या अपि महता प्रयासेन गीर्वाणभाषाज्ञानं कथञ्चित्सम्पाद्य तावन्मात्रेणैव शाकुन्तलनाटकस्य रसास्वादमनुभवन्ति। श्रूयते किल 'गयटे' नाम जर्मनीदेशीय पण्डितः 'शाकुन्तलनाटकमनुवाच्य पुस्तकं शिरसि अवस्थाप्य हर्षनिर्भरं ननर्तेति कियद्वोपवर्ण्यताम् मन्दतमप्रज्ञैरस्मादृशैरमन्दमतिवैभवस्य कविकुलचूडामणेः काव्यसौभाग्यम्? कियन्तो वा नाभूवन् कालिदासात् परमद्यावधि भारतवर्षेऽस्मिन् कवयः कियन्तश्च न जायन्तो कियन्तश्च सम्पद्येरन्। किन्तु विरलतमाः एव एतेषु अंशतोऽपि विन्देयुः सादृश्यं कविप्रवरस्येति शम्।



[देशरत्न राजेन्द्र संस्कृत व्याख्यानमालायाः
चतुर्थपुष्पात्मकं भाषणम्–१३–१२–६४
दिनाङ्के सम्पन्नम्]



# संस्कृतनाटकं विशेषतः कालिदासस्य नाट्यग्रन्थाः

श्री अयोध्याप्रसाद सिंह (वसन्तकुमार)

संस्कृतनाटकं सुविशालम्; तत्सिद्धान्तविवेचनमपि भूरिश्रममवकाशं चापेक्षते। संस्कृतकविकुलकमलदिवाकरस्य कालिदासस्य नाट्यग्रन्था अपि तथैव महिमान्विताः काव्यश्रीविशालाश्च वर्तन्ते। अत एव सर्वमेतदधिकृत्य दिङ्मात्रमेवात्र दर्शयितुकामा वयम्। संस्कृतनाट्यवाङ्मयस्यात्मतत्त्वं प्रायेण अधुनातनैः साहित्यसमीक्षकैः, विशेषतः प्रतीच्यवाङ्मयगुणग्राहिभिर्विचक्षणैः, नहि सम्यग्विभावितम्; अथवा

* अध्यक्षः, संस्कृतविभागः बी. एन. कालेज, पटना–४

तदन्तरे प्रविश्यापि तैस्तस्य भ्रान्तविवृत्तिरेव विहिता। एते विद्वांसस्तु तद्गतकाव्योत्कर्षं शंसन्तितराम्, परं तन्निविष्टजीवनरूपाणि युगपदेव दूषयन्ति। एतेषां विचक्षणानां कृते भारतीयं नाट्यं मानवजीवनगत-याथार्थ्याद्वियुक्तम् आदर्शोन्मुखभावानामुच्चैरादर्शीकरणं विद्यते। नाटक-मिदं प्रशिथिलव्यापारान्वितं रूढिग्रस्तमपरिच्छेद्यसौख्यभावावसितं पौराणिकवृत्तोपजीवि च एतदेव एतेषां साहित्यसमीक्षाक्षेत्रे किञ्चिन्नूत-नमाविष्करणम्। भारतीयजीवनपद्धत्यनुकारिणः संस्कृतनाट्यतत्त्वस्य परीक्षणे कापि सर्वथा वैदेशिकी दृष्टिः दर्शनदोषव्यतिकरभ्रान्तैव भवितु-मर्हति। पौरस्त्यानां केषाञ्चित्सर्वतोभावेन मौलिकजीवनधर्माणां पाश्चा-त्यालोचनविधिना निरवशेषं संदर्शनमेव साहित्यशास्त्रस्य साम्प्रतिकं वैशिष्ट्यं प्रतीयते। यथा हि संस्कृतवाङ्मयस्य विविधप्रकारेषु कृतपरि-श्रमस्य बहुश्रुतस्य प्रतीच्यपण्डितप्रवरस्य श्री डा. ए. बी. कीथमहोदय-स्यापीत्थमेव दृष्टिदोषः कोऽपि संलक्ष्यते। संस्कृतनाट्यमूल्यावधारणे तद्-दृष्टिः विश्लेषणात्मिका भवतु नाम, परं समीक्षणप्रक्रियायां भारतीय-नाट्यतत्त्वं प्रत्यमुना प्रायशः स्वकीयमौदास्यमेव प्रकटीकृतमित्यस्ति मे दृढ़ मतिः। यथाह श्रीहेनरी डब्ल्यू. वेल्समहोदयः स्वकीये 'दि क्लासि-कल् ड्रामा ऑफ इंडिया' इत्यभिधे पुस्तके, "His (Dr. Keith's) defect is Partly owing to a Commitment to British morality but much more to a conservative view in aesthetics leading him to discover the norm for serious drama in greek tragedy and the ultimate wisdom in theatrical opinion in the theories of Aristotle." अर्थात् आङ्गलाचारदर्शनाविष्टस्य सौन्दर्यशास्त्रानुभावितदृष्टिरूढ़ेस्तत्रभवतः पण्डितकीथस्य ग्रीसदेशीयं 'ट्रेजेडी' इत्याख्यनाट्यविधां प्रति, तत्रस्थस्यैव यवनाचार्यस्य अरिस्तोतेलेस इत्यभिधस्य 'पेरि पोइतिकेस' इति संज्ञे नाट्यशास्त्रं प्रति च प्रगाढास्थाभावो वरीवृत्यते। असावरिस्तोतेलेसीय-सिद्धान्तस्थापनायामेव अभिनेयकाव्यस्य परमौत्कर्ष्यं समुच्छ्रितमादर्शं

च लभते। अत एव भारतीयनाट्यमर्यादानुषंगिनाम् ऐकान्तिकानन्दभाव-पर्य्यवसायिनां महाकविशूद्रककालिदासभवभूतिप्रभृतिप्रणीतानां दृश्यकाव्यानां समालोचने श्रीकीथादीनां पाश्चात्यविदुषां पदे पदे स्खलितानि दृश्यन्ते चेत्तत्सर्वमस्ति सर्वथैव स्वाभाविकम्।

भारते वर्षे कविकर्मरूपं काव्यं द्वितयं दृश्यं श्रव्यं चेति। तत्रापि कविकर्मरूपस्यास्य काव्यप्रकारद्वयस्य मध्ये 'नाटकान्तं कवित्वम्' इत्येवं प्रायेण संकीर्त्यमानं प्रकृष्टकाव्यगुणोपेतं विदग्धहृदयैकवल्लभं नाटकमेवेति नात्र संशयः। काव्यविभागोऽयमस्माकं देशे नाट्यस्य काव्यस्य च मध्ये यदपरिहार्यमव्यवच्छेद्यञ्चानुबन्धनं तत्स्फुटं प्रतिपादयति। अत्रैव नाटके अभिनीयमानत्वात् सङ्गीतनृत्यादिपरत्वात् गद्यपद्यमयत्वाच्चाक्षुषविषयकत्वाच्च काव्यद्वितयस्यैव एकत्र समवायोऽनुभूयते। काव्यस्य या समाकर्षणभूमिः सा तु गीतिप्रबन्धात्मककाव्यरूपेष्वपि समास्वाद्यत एव; परं सैव यदा नाट्यरूपे परिवर्तते, तर्हि श्रव्यकाव्यभूतमाधुर्याद्बहुशोऽतिरिच्यते। यतो हि काव्यस्य यन्मोहनत्वं तत्साकल्येन रङ्गभूमौ नाट्यव्यापारद्वारा मूर्तिमदिवास्माकं दर्शनपथमवतरति। शेक्सपीयरवत् कालिदासीयनाट्यस्य प्रधानं वैशिष्ट्यं तन्निविष्टकाव्यत्वमेवाभासते। गद्यैकमयाद्रीतिविशेषात् काव्यस्यार्थव्यञ्जकत्वं भावोद्भावकत्वञ्च विशिष्यतेतराम्, विविधदेशिकैर्नाटकप्रणेतृभिः सत्यमिदं सुतरामवगतं प्रयोगीकृतं च वर्तते।

भारतीयनाट्योद्भवः कदाभूदित्येतन्निर्धारणं केनाप्यनुसन्धित्सुना निश्चितं कर्तुं न पार्यते; परं तदतिमात्रपुरातनत्वं प्रति न कोऽपि भारतीयसाहित्यलब्धप्रसरो विचक्षणः शङ्कते। आचार्यभरतेन नाट्ययोनिमवलम्ब्य ऐश्वरसिद्धान्तोऽपार्थिवख्यातमुखेन प्रवर्तितः स बाह्यतस्त्वस्मद्विश्वासस्थानं न भवति, परमन्ततो भारतीयाभिनेयकाव्यस्य यानि वैशिष्ट्यानि तान्यत्र सूक्ष्मतया सन्निविष्टानि प्राप्यन्ते। भारतीयनाट्यं

'पञ्चमवेद' इति कथं समाख्यातं, तस्योपकरणचतुष्टयं केन प्रकारेण चतुर्वेदेभ्यः समाहृतं, केन विधिना च देवासुरसंग्रामात्मके आद्याभिनये आसुरीं शक्तिमुन्मूल्य प्राप्तविजया देवाः प्रदर्शिता इत्येता सर्वत्रैव नाटचस्यास्य धर्म्यत्व-कल्याणपर्य्यवसायित्वादीनि लक्षणानि निधत्ते। महाकाव्यपुराणादिग्रन्थेषु भूयो भूयोऽपि निबध्यमानस्य प्रतीकानुगुम्फित-देवासुरसंग्रामस्य सन्ति कानिचिदनश्वराणि सांस्कृतिकमूल्यानि । जीवन-क्रियायाः संसारचक्रस्य वा यानि श्रेयसोऽवरोधकानि दूषणानि तानि 'असुर' इति संज्ञया संज्ञापितानि । असुरोऽयं महासत्त्वशाली, परं तेन सममनिशमेव संघर्षरतमपि 'सद्देव' इतीत्थमाहूतमस्मदीयमात्मबलमेव जयति, असुरस्य चावश्यंभावि पतनं खलु बोभूयते। असुराणामुपरि विहितो देवानां प्रतीकात्मको यो जयलाभ आद्याभनये निर्दशितः स तु संस्कृतदृश्यकाव्योपनिबद्धजीवनस्याकुण्ठितपौरुषं विवक्ति ।

संस्कृतनाटचदर्शनस्थमूलभावेन अपरिचितैः समालोचकैरेवात्र नाटके प्रायेण गाम्भीर्यराहित्यं वितन्यते । तन्मते कस्मिन्नपि नाटके दुष्ट-पात्राणामुपस्थितिः तत्र च नियतिचक्रस्य प्राबल्यमजेयविपन्नत्वं रङ्गभू-मावेव नायकस्यान्येषां वा पात्राणां करुणमृत्युनोपबृंहितं दुःखान्तपरत्व-ञ्चैवंविधानि तत्वान्येव नाटचगाम्भीर्यस्य लक्षणानि निरूपयन्ति। पर-मेतैः खलु दृश्यानुबन्धैः पाठकानां सामाजिकानां वा नैतिकबलं क्षीयते पुरुषार्थो वातितरामपह्रियत इत्यनुध्यायद्भिः श्रेयस्कामैः 'साहित्य' भावानु-भावितैरत्रत्यैः कविभिः स्वीयनाटचंग्रन्थेषु तन्निबन्धनमपाकृतम्। 'फलागम' इत्यपरिहार्यरूपेणादधानस्य आनन्दैकपर्य्यवसानलब्ध-लक्षस्य कल्याणभावानुवृत्तस्य भारतीयदृश्यकाव्यस्य कृते दुरन्तानि पौरु-षाणि समन्ततोऽसंभाव्यानि अचिन्तनीयानि च कल्प्यन्ते । प्रारब्धहेतु-भूतानि साम्प्रतिकस्खलितप्रसवानि वास्माकमुत्पीडनानि सद्गुणसार्थैः प्रतिकार्य्याणि शमनीयानि च भवितुमर्हन्ति। अतस्तैः कथमप्यस्माकं

पुरुषकारोच्छेदकैर्न भवितव्यम्। पुरुषाणां पार्थिवजीवनमिदं दिव्य-जीवितस्यैवांशभूतं सार्थक्यमादधानं केषाञ्चिदप्यैकान्तिकव्याघाताना-मुपर्य्युपरि विलसति। इदमेवास्ति आनन्दभावावसायिनां संस्कृत-नाटकानां मूलं जीवनदर्शनम्। अथापि नाट्यमिदं जीवनस्य समाजस्य वा सर्वेषां शुभाशुभवृत्तानामुपजीवकं नहि वर्तते। यानि वस्तूनि कल्याण-प्रदानि जीवनकलुषभञ्जकानि स्फूर्तिविधायकानि च तान्येव भारतीय-महाकविभिः स्वस्वनाट्यकृतिषु निबद्धानि प्रातिभसंस्कारेण समुल्लासितानि च। अस्मादेव हेतोः मैकबेथ-लेडी मैकबेथ-हेमलेट-जुलियससीजरसदृशाः पुरुषाः भारतीयनाट्ये कल्पयितुं नैव शक्यन्ते। मानवप्रकृतिसिद्धस्या-सुरस्याप्यपरिहार्योपस्थितिः नाट्येऽस्मिन् निरूप्यत एव, यतो हि फला-गमात्पूर्वं नायकनायिकयोः मार्गे विविधासुरविघ्नाः समुपजायन्ते। एतेषां वैक्लव्यमातन्वनां विघ्नानां नाट्यभावेष्वनुगुम्फनं नूनं खलु सिध्यते तदनुप्राणितदैविकवृत्तिप्रेरकत्वात्। तमो विना दीप्तिस्फुरणं कुतः, असुरं विना सुरकृत्यं कुतः? शकुन्तलया दुष्यन्तस्य, उर्वशीपुरूरवसो वा सम्मिलनमार्गे या विपत्तिरूपस्थिता तयैव तद्धृदयस्थवासनात्वं प्रक्षाल्य तेषां प्रणयभावो निर्मलीक्रियते समागमसुखानि चातिभूमिमापाद्यन्ते। अतो धर्मालोकपूते भारते वर्षे 'पञ्चमवेद' इत्याहूतस्य संस्कृतनाट्यस्या-विर्भूतिः सर्वप्रकारेण धर्मभावानुरूपैव सञ्जाता। नाट्यशास्त्रस्य तृतीया-ध्याये रङ्गदैवतमुद्दिश्य यो वाग्विस्तरः समुपलभ्यते नाटकस्यावसाने वा यया रीत्या भरतवाक्यस्य योजनावतारिता तत्सर्वं खल्वेतस्य नाट्यस्य माङ्गलिकतां श्रेयोविधायकताञ्च विवृणुते।

संस्कृतनाट्यस्थवस्तुदारिद्र्यमधिकृत्यापि बहुभिर्विद्वद्भिरालपितं किल। पण्डितदासगुप्तमहाभागाः स्वकीये संस्कृतसाहित्येतिहासस्योपो-द्घाते इदमेवावलम्ब्य निबध्नन्ति यद्भारतीयकवीनामभिनवविषयग्राहि-क्षमत्वं कुण्ठितं रूढिग्रस्तं चाजायत; अमी कवयस्त्वैकान्ततः स्वीयानां नाटकानां कृते प्रधानतो रामायणमहाभारतादिप्रबन्धानेवोपजीव्यत्वेन

  

स्वीचक्रुः। तन्मते तत्कालप्रभविष्णुभिः स्मृतिधर्मशास्त्रादिभिरुत्थापितं भारतीयं जीवनं प्रति यदनुबन्धनं तदेव लोकजीवनमनादृत्य पौराणिक-वृत्तोपजीवनम् अत्रस्थकवीनामन्येषां शिल्पकर्तृणां वा सर्जनसामर्थ्यं कुण्ठीचकार। एतस्मादेव कारणाद्भारतीयकविमौलिभूतेन कालिदासेनापि स्वकीयेषु त्रिषु नाटचग्रन्थेषु किञ्चिन्नूतनं विषयतत्वं नैवोद्भावितम्। परमस्त्यत्र श्रीदासगुप्तोत्थापितप्रतिज्ञयास्माकं विप्रतिपत्तिः। धर्मशास्त्रेण लोकवृत्तस्य सामान्य-प्रवाहे कृतावरोधनं नास्त्यस्माकमसंमतम्। परं पुरातनकालादेवारभ्य अद्यावधि यावत् रामायणमहाभारतादिप्रबन्धा भारतीयजनानां कृते न केवलं महाकाव्यानि, अपितु सर्वेषामार्यसंस्कृतिनिष्ठजीवनाचाराणां संभारा एव वर्तन्ते। अतो ह्यत्र भूयांसि नाटकानि केवलं रामायणानुबद्धां मर्यादापुरुषोत्तमस्य भगवतः श्रीरामचन्द्रस्य लोकातिगां चर्चामवलम्ब्य कृतानि चेन्नास्त्यत्र किमप्यसंभाव्यम्। अत्र विषये धर्मशास्त्राणां कोऽपि प्रतिबन्धो नास्ति कारणम्; वस्तुतस्तु रामसदृशपात्राणां जीवितं तदक्षीयमाणरसपेशलत्वं च भारतीयजनतायाः कृते शाश्वतिकं मूल्यमातनोति।

संस्कृतनाटचस्य कानिचित्तत्वानि विविच्येदानीं महाकविकालिदासप्रणीतदृश्यकाव्यस्य वैशिष्टचानि समासतः प्रकाशयितुमुपक्रम्यन्ते। कालिदासकृतानि काव्यानि नाटकानि च भारतीयसंस्कृतेः या मांसला भौतिकी रूपश्रीः तदादर्शभूतानीति। तदानीं–तु नूनं खलु भारतीयेतिहासस्य कोऽपि स्वर्णयुग आसीत्; तस्मिन्नेव काले कालिदासः संस्कृतवाङ्मयस्य अक्षरवर्णादीनि स्वीयानि रत्नीभूतकाव्यानि प्रणिनाय। तस्य नाटकत्रयाणामेव वस्तुजातं प्रख्यातं वर्तते। ऐतिह्यसम्मतस्य अग्निमित्रनामधेयस्य शुङ्गवंशीयराजस्य मालविकाग्निमित्राभिधानस्य कवेः प्रथमनाटचकृतेश्चोपजीव्योपजीवकभावो वर्तते। तस्य द्वितीयं रूपकं विक्रमोर्वशीयमिति त्रोटकं यत्र ऋग्वेदादीनामाख्यातं प्रमाणीकृत्य पुरूरवस

उर्वश्याश्चालौकिकप्रणयप्रसङ्गो रूपितो वर्तते। तत्प्रणीतं पश्चिमं विश्व-विश्रुतं च नाटकमभिज्ञानशाकुन्तलं नाम यस्य मनोज्ञवृत्तं महाभारतस्य शकुन्तलोपाख्यानात् परिगृहीतं पल्लवितं च। अत एतेषां सर्वेषामेव नाट्यवस्तूनां पुराणेतिहासपरत्वाद्बाह्यतो नव्यभावोद्भावकता मनागेव प्रतिभाति। परं कालिदासस्य कारयितृप्रतिभया पुराणवृत्तसञ्चयेऽपि नव्यातिनव्यकान्तयोऽन्विष्यन्ते, ताश्च स्वापूर्वप्रज्ञागभस्तिभिः नितरा-मुद्भास्यन्ते। तस्याश्चर्यभूतनिर्माणक्षमताया इदमस्ति प्रथमं वैशिष्ट्यं वैलक्षण्यञ्च।

कालिदासीयनाट्यसृष्टिः समकालीनराजसंस्कृत्यनुमोदितजीवन-प्रणाल्याः प्रशस्ततमं प्रतिबिम्बनं प्रस्तौति। तस्य त्रिष्वेव नाटकेषु राजा 'राजर्षि'रित्येवमाख्यातः तद्गुणगणमहिमानश्चातिभूमिमापादिताः। तथाहि शकुन्तलानाटके दुष्यन्तनामधेयो राजनायकोऽनुवेलं प्रशस्यमानः ऋषिकुमारद्वयेनापि यथाकालमित्थं संकीर्त्यते–"....अथवा उपपन्नमेतद-स्मिन् ऋषिभ्यो नातिभिन्ने राजनि। कुतः

**अध्याक्रान्ता वसतिरमुनाप्याश्रमे सर्वभोग्ये**
**रक्षायोगादयमपि तपः प्रत्यहं सञ्चिनोति।**
**अस्यापि द्यां स्पृशति वशिनश्चारणद्वन्द्वगीतः**
**पुण्यः शब्दो मुनिरिति मुहुः केवलं राजपूर्वः"॥**

—अभिज्ञा० : २ : १४

अनया रीत्या बहुशो गीयमानस्य ऋषिपदं प्रापितस्य मुग्धायां कण्वदुहितरि निह्नवेन छलेन च प्रवृत्तिशीलस्य कामान्धस्य दुष्यन्तस्य सौजन्यं प्रति कापि विचिकित्सा न प्राप्यते। अत्र विषये कालिदासस्य न किमपि हीनमतित्वं व्यज्यते। तदानीन्तने भारतवर्षे आश्रमपदं राजपदं चोभयमेव बहुमानोपेतं पूजार्हञ्चासीत्। पदद्वयस्यास्य मिथः प्रभूतसापेक्षत्वमपि गम्यते स्म इति विषयमवलम्ब्य 'इन्फ्लुएन्स ऑफ

  

कोर्टकल्चर अपॉन संस्कृत ड्रामा' (संस्कृतनाटचोस्योपरि राजसंस्कृति-प्रभावः) इत्यभिधे निबन्धे पृथगेवास्मदीयं मतं प्रकाशितं वर्तते। अत एव सन्दर्भेऽस्मिन् कालिदासेन स्वीयनाटकेषु स्वयुगजीवनस्य तदानींतन-संस्कृतेश्च कलात्मकं प्रतिनिधित्वं विहितम् ।

पुरातनानि वस्तून्यधिकृत्यापि महाकविनामुना स्वनाटचशरीरेषु 'क्षणे क्षणे यन्नवतामुपैति तदेवरूपं रमणीयतायाः' इति स्वकीयन्याय-वृत्त्या सर्वदैव नव्यातिनव्यरूपमाविष्कुर्वाणं रामणीयकं चक्रे। शकुन्त-लोर्वशीप्रभृतिनायिका दुष्यन्तपुरुरवादिनायकाश्च पुराणादिग्रन्थेषु निबद्धा एव, परं तान्येव पुराणपात्राणि कालिदासस्य नवनवोन्मेषशा-लिन्या नाटचशैल्या प्रत्यग्ररूपश्रिया सार्वभौमभावमूर्त्या च सुष्ठु परिण-मन्ते । महाकवेरस्य मालविकाग्निमित्रमितिनाटकादुपक्रम्य शकुन्तला-नाटकं यावत् यन्नाटचदर्शनं तद्विविधासु दशासु मानुषाणां प्रीतियोगमेव विषयीकृत्य तद्गतभावसौकुमार्यमभिव्यनक्ति । मालविकायामग्नि-मित्रः उर्वश्यां पुरुरवा शकुन्तलायाञ्च दुष्यन्तः साभिलाषाः कामार्त्ताश्च कल्प्यन्ते; तेषां सर्वे व्यापाराः तदभिलाषपूर्तय एव व्यापृताः सन्ति। अतः 'कार्यं त्रिवर्गस्तच्छुद्धमेकानेकानुबन्धि च' (दश०: १ : १६) इति दशरूपककारेणोपक्षिप्ते धर्मार्थकामरूपे पुरुषार्थत्रितये नाटचकार्ये कालि-दासेन कामस्योत्थापनं तु विहितमेव, परं कामोऽयं कुत्रापि धर्मं विसंव-दन्नैवोपलक्ष्यते । अर्थात् तदीयं कामाभिव्यञ्जननैपुण्यं सर्वदैव विवे-कित्वं धर्मदृष्टिञ्चापेक्षते । शकुन्तलायां भूयिष्ठं कामानुबद्धचित्तोऽपि दैववशात् प्रकृतित्वमारोपितो दुष्यन्तः नाटकस्य पञ्चमाङ्के धर्मस्याग्रे रूपलावण्यमतितरां तिरस्करोति । विस्मृतभार्येण दुष्यन्तेन स्वराजस-भायां कान्तिमतीं सुरूपां शकुन्तलां विलोक्य तद्रूपाकर्षणेन नैवाभिभूयत इति न; 'नातिपरिस्फुटशरीरलावण्या,' 'किसलयमिव पाण्डुपत्राणाम्' (अभिज्ञा०:५:१३) 'रूपमक्लिष्टकान्ति' (अभिज्ञा० :५:१७) इत्येवंविधैः

स्वकीयभावोद्गारैः स्फुटमेव तेन शकुन्तलायाः मोहनसौन्दर्यं प्रति स्वीयं समाकर्षणं प्रकटीक्रियते। शकुन्तलारूपावर्जितस्य राज्ञः मनसि स्वधर्मप्रेम-भावयोः मध्ये यो द्वन्द्वक्लेशः समुपजायते स इत्थं प्रकाश्यते—

इदमुपनतमेवं रूपमक्लिष्टकान्ति
प्रथमपरिगृहीतं स्यान्नवेत्यव्यवस्यन्।
भ्रमर इव विभाते कुन्दमन्तस्तुषारं
न खलु सपदि भोक्तुं नापि शक्नोमि मोक्तुम्॥

—अभिज्ञा. : ५ : १७

अयमेव दुष्यन्तः कण्वाश्रमं प्रति निभृतं गत्वा तत्र चाज्ञातकुल-शीलां तापसकन्यां शकुन्तलामवेक्ष्य 'न खलु सपदि भोक्तुं नापि शक्नोमि मोक्तुम्' ईदृक्षं द्वन्द्वं कुत्रापि नोपगतः। तस्य यद् 'आर्य्यं मनः' शकुन्तलायामभिलाषि वर्तते, तस्मात् हेतोरेव येन प्रकारेण सा 'असंशयं क्षत्रपरिग्रहक्षमा' (अभिज्ञा०: १ : १५) इति वितर्क्यते, तत्सर्वं नाम तस्यानार्य्यमनसः छाद्मिकस्य मनःचौरस्य वा लक्षणमेव प्रकटयति, नात्र कोऽपि द्वन्द्वः। तत्र तु शकुन्तलापरिग्रहणाय पर्य्याकुलचित्तो राजा 'वयं तत्त्वान्वेषान्मधुकर हतास्त्वं खलु कृती' (अभिज्ञा०: १ : २०) इत्येवं तद्रूपमनघमनुध्यायन् सा केन विधिना तेनाशु भोग्या वेत्यस्मिन्नेव विषये विहिताभियोगो लक्ष्यते अन्यत्र सैव दुष्यन्तः स्वराजसभायां तामेव रूपसम्पदं वीक्ष्य कयाप्यपूर्वकर्मचेतनयावहितो जायते। मानवप्रकृति-रियमुच्चावचैर्भावानुबन्धैरद्भुतमुपपन्नेति जीवनस्य विविधप्रसङ्गेषु मानवहृदयस्य कुशलचित्रकेण महाकविना कालिदासेन भूयिष्ठम-भिव्यक्तम्। तन्निबद्धप्रीतियोगोऽनुदिनमैन्द्रियाद्भावात् स्थाने खलु धर्मात्मभावमुपनीयते। कण्वाश्रमसदृशं दुष्यन्तस्येन्द्रियलोलुपत्वं पञ्च-माङ्के प्रभूतं विपरिणामं लभते। 'कुमुदान्येव शशाङ्कः सविता बोधयति पङ्कजान्येव। **वशिनां** हि परपरिग्रहसंश्लेषपराङ्मुखी वृत्तिः'॥ (अभिज्ञा० ५

५: २७) इत्येवं तपस्विजनमभिलक्ष्य दुष्यन्तस्य संबुद्धवाचिकस्येव इन्द्रियलुब्धस्य हृदयस्य प्राप्तकालं वशित्वमाख्यायते । रागबद्धचित्तविक्षेपाणां क्रमशो धर्मभावाधिरोहणं कालिदासस्य रूपकेषु अन्यत्राप्यनुसन्धेयम्। अतो भौतिकरूपश्रीसमुदितायां समकालीनजीवनसमृद्धयामवतीर्णेनापि कालिदासेन स्वकीयनाट्यरचनासु धर्मविसंवादिनी ऐन्द्रियतृष्णा न कदापि समिध्यते । एतादृशा एव कालिदासस्य नाटचकलायाः चित्तहारिणः सुगभीराश्च नानाविधपक्षाः सन्ति, परमत्र समयाभावादलं तन्निदर्शनेनेति।



"अहं पत्नीतो विवाहविच्छेदं प्राप्नोमि। सा मां मूर्ख इत्यवोचत् ।"

"तन्न समुचितं कारणं विच्छेदस्य ।"

"भवतु। कथयामि ते परमार्थम्। ह्यो यदाहं गृहमगच्छं तदा तां पुरुषान्तरबाहुबन्धनेऽपश्यम्। अपृच्छञ्च 'किमेतत्' इति। सावदत् 'किं न पश्यसि, मूर्ख ?' इति।"



कार्यव्यग्रोऽधिकारी स्वमन्त्रिणमपृच्छत् "कुत्रास्ति मे लेखनी ?"

"भवत्कर्णे स्वामिन् ।"

"भवतु, भवतु। शीघ्रं वद-कतरस्मिन् कर्णे ?"







# यदा ध्येयमार्गो न्यमन्त्रयत

भगवानशरणं भारद्वाजः 'प्रदीपः'*

हिन्दुजातिरक्षणैकव्रतो गुरुर्गोविन्दसिंहोऽरण्ये एकस्यां शिलाया-मुपविष्टोऽस्ति। दलनायको महासिंह आगत्य तं सम्बोधयति– 'गुरुदेव! गुरुर्निर्निमेषलोचनाभ्यां नीलाकाशं पश्यन्नस्ति। महासिंहः पुनः ससम्मानमाह्वयति–गुरुदेव!' गुरोर्ध्यानं विलुम्पति वक्ति च सः–'एहि भोः महासिंह! एहि।'

'गुरुवर!' महासिंहः किञ्चिद् वक्तुमिच्छति। किन्तु सङ्कोचा-दात्मकग्लानेश्च तज्जिह्वाजाड्यं ययौ।

'कथय महासिंह! कथं जिह्रेषि?' गुरोः शान्तोऽपि स्वरो वेदना-मावेदयन्नस्ति। प्रतिभातीदं यन्महासिंहो यद् विवदिषति तद् गुरुदेवः पूर्वत एवावगच्छति। नतमस्तको महासिंहो यद् मौनमालम्बते। गुरु-श्शनैश्शनैः कथयितुमारभते-'महासिंह! आस्माकीना इमे दुःखमयाः दिवसाः। किन्तु दुःखमिदमस्माभिरेवामन्त्रितमस्ति। अपि विपत्तिरस्मा-न्ध्येयाद्विमुखीकरिष्यति?'

'भगवन्! अस्माकं सङ्ख्या लघीयसी। अस्मांस्त्यक्त्वा सर्वे गताः। वयङ्किमपि कर्तुं न प्रभवामः। कारणेनानेनैव विचिन्तयाम्यहं यच्छत्रुणा सह सन्धिः कथं न क्रियेत? समागतेषु शुभदिवसेषु वयं

---

* एम्. ए., साहित्यविशारदः, गीतारत्नम्, संस्कृतिसंस्थानम्, ख्वाजाकुतुब बरेलि (उ. प्र.) 

पुनरपि योत्स्यामः' इति महासिंह उवाच। तस्य नवत्रिंशत् सहचराणामप्ययमेव विचारोऽस्ति।

'महासिंह! किमिदन्तव कथनम्? विपद्भ्यो बिभेषि किमु? श्वः संसारेऽस्माकं विषये कxकx कुवादो न प्रचारमाप्स्यति? सुखकाम्यया बलिदानस्य मार्गोऽस्माभिर्न गृहीतः। येऽस्मान् विहाय गतास्तान् मा पश्यः। परमपावनात् श्रीरामकृष्णवन्दितपादारविन्दात्, हिन्दुराष्ट्रान्म्लेच्छाक्रामकानां बहिर्निस्सारणमन्तरा वयं ससुखं न स्थास्यामः। अस्माकं ध्येयन्तु शुक्रग्रहवत् प्रकाशमानमस्ति।'

'भगवन्नवशिष्टाः वयञ्चत्वारिंशज्जनाः शत्रोः किमप्यनिष्टमाचरितुन्नेशाः स्मः। सन्धिसरणिरेव श्रेयसी। सर्वैश्चाहमित्थमेवान्त्यं निश्चयङ्कृत्वा प्रेषितोऽस्मि।'

'मम नवत्रिंशच्छिष्यैस्तावत्किमवोचि?'

'तैरुक्तमस्ति यदहं श्रीमतां सेवायां निवेदयेयं यत् भवान् रिपुणा सह सन्धिमाचरतु येन वयं भविष्यत्काले शक्ति सम्पाद्य शत्रुं नाशयेम।'

'महासिंह! पुनः सङ्घटनन्तु प्रवञ्चनम्। दैन्यं पलायनं वा मह्यं न रोचते। अस्माकमेकोऽपि शिष्यः सपादलक्षशत्रुभ्योऽलम्।'

'गुरुदेव! तेषामुपरि मम कथनस्य कोऽपि प्रभावो न भवितुमर्हति। क्षम्यतां यदहमपीदृश्यां स्थित्यां युद्धाचरणं युक्तरूपं न मन्ये।' महासिंहो भुवं पश्यन्नवादीत्। गुरुदेवो गाम्भीर्य्यमावलम्बे। क्षणानन्तरं प्रोवाच- 'महासिंह! किमेष एव तवान्त्यो निश्चयः?'

'बाढम् भगवन्! गत्यन्तराभावाद् वयं मार्गमेनमनुसरामः।'

'गन्तुं शक्नोषि। किन्तु भवद्भिस्सर्वैरिदं लिखितव्यं भविष्यति यद्वयमनुशासनमुल्लङ्घ्य सपत्नेन सह सन्धये सरामः। अद्य प्रभृति च वयन्तव शिष्याः न स्मः' इति।

× × ×

मकरसङ्क्रान्तिस्सन्ध्याकालः। अनवरतपरिभ्रमणक्लान्तवपुः भानुमृगेन्द्रः सुषुप्सयाऽस्तगिरिगुहायां प्रविशति। खन्दरानाख्याचलशिलाचयासीनो गुरुरेकाकी एव शत्रूणामुपरि शिलीमुखासारङ्कुर्वन्नस्ति। एकतः स एकाकी एवापरतश्च सन्त्यरीणां सहस्राणि। मुद्गलानां शराः पर्वतवक्षसि विफलायन्ते। आशङ्केयं स्पष्टाऽस्ति यद् किञ्चिच्चक्षणानन्तरं शत्रुर्गुरुं निग्रहीष्यति।

अकस्मान्मा*लाभिमुखमागच्छतोऽरिसैन्यस्योपरि किमप्यन्यद्दलमाक्राम्यति। शूरा इमे प्राणापायमविगणय्य दग्गलदलं युध्यति। एकैकः सैनिकोऽनेकान् म्लेच्छान् यमनिकेतनातिथीकुर्वन्स्वयमपि बलिपथमनुसरति।

विस्मयाविष्टचेताः गुरुस्सरस्तटमासादयति, उच्छिन्नान् मस्तकान् वारिणा प्रक्षाल्य दर्शं-दर्शं साश्चर्यं दुःखमिश्रमानन्दमनुभवति प्रत्येकमुखं चुम्बति, आलिङ्गति च।

'आः इयन्तु भगवती माताऽस्ति। धन्यमिदं राष्ट्रं यत्र नार्योऽपि राष्ट्रगौरवरक्षायै प्राणोत्सर्गं कुर्वन्ति' शवमेकं परिचिन्वन्नाह गुरुः।

'गु....रु....दे....व!' एकःक्षीणः स्वरः श्रूयते। गुरुस्तां दिशं धावति।

'ओः, अयन्तु दलनायको महासिंहः! अयं श्वसिति।' गुरुरतीव प्रेम्णा तमालिङ्गति। सरोवरजले कटिबन्धमार्द्रयित्वा तन्मुखे जलसीकराणि पातयति। गुरुस्तस्य शिरसि हस्तमान्दोलयति।

'गुरुदेव! दलत्यागदलं छिन्धि। ममायमेव पश्चिमोऽभिलाषः।' नेत्रयोरश्रूणि वर्तन्ते।

(गुरोचक्षुर्भ्यां प्रेमपूरः प्रवहति। सोऽङ्गरक्षात् पत्रकं निःसार्य विपाटयति। तान् पत्रकलवानालोक्य महासिंहोऽमन्दानन्दसन्दोहसुखमनुभवन् वीरगतिमुररीकरोति।)

---

* मालमुन्नतभूतलमित्युत्पलमालायाम्।

 

# संस्कृतभाषाया अन्ताराष्ट्रियं महत्त्वम्

—नारायणशास्त्री काङ्करः*

सौवर्णी सौपवर्णीयं वाणी विजयतेतराम् ।
प्राणन्ति यत्प्रसादेन संसारे सकला गिरः ।।

## उपक्रमः

नास्त्यत्र स्वल्पतमोऽपि संशयलेशावकाशो यदियं गैर्वाणी वाणी समस्मिन्नपि विश्वे भाष्यमाणासु भाषासु प्रथित-प्रशस्त-प्रभावतया ग्रहेलिमगुणगणगरिमा, प्रसाद-सौकुमार्यमाधुर्येणाधरीकृतमाध्वीक-मधु-मृद्वीका परमपूता, निखिल वाङ्मयमूलभूता, सुव्यक्त-स्वरवर्ण-संस्कृतिसमुपेता, सर्वविधदोषजातनिरपेक्षा, प्रचुरपर्यायशब्द-संवलिता, ललितललिता, विश्वजनीना जननीव विश्वभाषा-जननी वरीवर्त्ति। इयं हि निलिम्प-वाणी न केवलं भारतमेव, अपि त्वखण्डं क्षोणी-खण्डं स्ववाङ्मय-सुधारस-सागर-समद्भूत-प्रभूत-प्रवाह-पतितैः पुनाति प्रतिपदमिति पाश्चात्त्य-विपश्चितोऽपि 'भवन्ति भव्येषु हि पक्षपाताः" सूक्तिमेतामनुसरन्तो निःसङ्कोचमस्याः स्वरूपोद्-घाटनविषयमभ्युपयन्ति गौरवाय च स्पृहयन्ति। किमन्यत् ? अद्यापि तेऽविरतमस्या गायन्ति गुणनिचयगुरुताम्, मानयन्ति महामहनीय-महिम-महत्ताम्, भावयन्ति निर्भीति-भावभरित-गम्भीर-भावताम्, विश्लेषयन्ति विषयविशेष-निर्विशेषताम्, संस्तुवन्ति सर्वरस-सार-समुदारताम्, विचारयन्ति च चारु-रचना-प्रचुरताम् इति।

## विषयप्रवेशः

अन्ताराष्ट्रियमहत्त्वशिखिशिखरमारोढुं सैव भाषा शक्नोति, या किल सर्व-विद्यार्थिजनप्रार्थनासार्थकीकरणे चिन्तामणिताम्, अज्ञानाकूपार-प्रवहत्-प्रभूतप्रवाह-पतित-प्राणिजातोद्धरणे तरणिताम्, देश-काल-समाज-संस्कृतीनां रक्षणे क्षमताम्, वर्तमानकालिक-निखिल-रीति-शिल्प-नौनिर्माण-मूर्त्तिविधान-मल्लविद्या-धनुर्विद्या-स्फोटास्त्रादि-युद्धोपकरण-चयन-चिकित्सा प्रभृत्यशेषविद्या नामक्षयकोषताम् अविकल-लोकानां च श्रद्धातिरेकतां विबिभृयात्। सदैव लोकस्य कोणे कोणे यस्या

*एम.ए., विद्यालङ्कारः, संस्कृतसाहित्यविवेचकः, राज. आयुर्वेदिक कालेजः, जयपुरम्।

विज्ञातारः प्रवक्तारो निर्म्मातारश्च स्युः।

अमरगिरः कामधुक्त्वात्, बहुभिर्बहुशः प्रदर्शितत्वाच्च लघुकायेऽत्र शब्द-निकाये नात्यद्विषयेस्वीषदपि भाषणीयम्। केवलं नव्यशिक्षा-दीक्षा-चकित-चेतसां सचेतसाञ्चेतः सुजागरूकतामुपगतां विविदिषां वीक्ष्यास्या भाषाया भारताद्बहिः प्रदेशेषु प्रचुरप्रचारता विपुलश्रद्धातिरेकता चौवोपस्थाप्यते। एतस्या विज्ञानाविष्कारोपकरणादि-ज्ञान-जिज्ञासुभिस्त्वस्मत्पितृपादानां गुरुचरणैः सुरगुरुनिर्विशेषैः पुरन्दर पुरातिथ्यमाकलयद्भिः श्रीमधुसूदनविद्वद्भिर्विरचिता इन्द्रविजयादिग्रन्था विलोकनीयाः। तत्र तैर्दिविषद्गवि विलसिताः पश्चात्त्यैश्च स्वाख्यातैः प्रख्यापिताः सर्वेऽपि विविधविधा विषयाविष्कारा वेद-वेदाङ्ग-पुराण-दर्शन-प्रमाणप्रदर्शनपुरःसरं पूर्णं प्रतिपादिताः।

## भारते संस्कृतमहत्त्वम्

भारतवर्षमप्युद्दिश्यास्माभिः संस्कृतसम्मान-सम्बन्धे न किञ्चिदपि वाच्यम्। इदन्त्विदानीं हृदयेन सर्वैरेवमनुभूयते, सम्प्रति भारते संस्कृतभारती राष्ट्रभाषाऽऽसनमारोक्ष्येच्चेन्न तर्हि भाषा-कलहो जनुरग्रहीष्यत्! यतोऽत्र प्रतिप्रान्तं संस्कृतज्ञातारो विराजन्ते। एतदतिरिक्तं तामिल-तेलगू-मलयाली-कन्नडी-वाङ्गी-पञ्जाबी-मराठी-हिन्दी-गुजरातीप्रभृतयः सर्वा एव भाषाः संस्कृतानुप्राणिताः। किम्बहुना? नीतिकुशलाः शासकविशेषाः संस्कृतवाचमत्र राष्ट्रभाषारूपेणास्वीकृत्यापि विदेशेषु स्वात्मसम्मानरक्षायै यथावसरमेतमेव राष्ट्रभाषासिंहासनासीनां मिथ्या कथयन्तीत्यपि न तिरोहितं संस्कृतवृत्तानुशीलन-व्यसनिनां सुकृतिनाम्। 'अन्यच्च भौतिक-विज्ञानाद्याविष्कारपरिणामेनाविरतमगण्य–जन्य–जनितोपद्रवोद्वेजितानीदानीमेकान्ततः शान्तिमभिलषन्ति जगन्ति। सा च संस्कृतभाषाविलसिताभिरध्यात्मविद्याभिरेव सुलभा। अस्माकं भारतश्चाध्यात्मविद्या-प्राधान्येनैव देशान्तराण्यतिशेते, तेनैव च स्वर्गीयो भारतमन्त्री श्रीनेहरूमहोदयः शान्तेः स्तूपो जेगीयते स्म। अतो विश्वशान्त्येऽपि भारते संस्कृतमहत्त्वं बृहद्वैशिष्ट्यमाश्लिष्यतीति किमधिकं कथ्यते?

## भारताद् बहिर्देशेषु संस्कृतप्रसारः

यद्यपि सम्प्रति साम्प्रतिका नीतिकोविदा इङ्ग्लेण्डीयां वाचमन्ताराष्ट्रियां मन्यन्ते, किन्तु ये सूरिशिरोमणयः सावधानं नित्यं देशविदेशप्रवृत्तिपत्राणि परिशीलयन्ति, न तैस्तिरोहितं यद् इङ्ग्लेण्डोत्तरामेरिकाप्रदेशयोः कांश्चिद्देशान् विसृज्य न सर्वत्र

समुपलभ्यते 'अंग्रेजी'विदां समवायः। परमस्माकं संस्कृतवेत्तारस्तु प्रायः सर्वत्रैव प्राप्यन्ते। नैतावन्मात्रं संस्कृतवाचो विभिन्नशाखानां गवेषणादिकर्म्मापि परितः कार्यरूपतां वहतीति।

## रूसे

अत्र प्रथमं रूसदेश एव दृष्टिपातो विधेयः। अमुष्मिन् देशे संकृताधीतिर्मातृभाषाज्ञानानन्तरमेवारभ्यते, या हि भाषान्तरेभ्यो वैशिष्टयमाटीकते। मास्को-लेनिनग्राद-तिविलसी प्रभृतिविश्वविद्यालयेषु संस्कृतं सोत्साहमध्याप्यते। तत्र समाप्तपाठचक्रमाः स्नातकाः 'भारतीय भाषाभूमिका'ख्याते विशिष्टे पाठचक्रमे संस्कृतस्य गवेषणाकार्यमातन्वते। इदानीं रूसीया विद्वांसः संस्कृतप्रसाराय रूसभाषा-शब्दार्थसंवलितं सप्तविंशतिभागेषु संस्कृतकोशमपि सम्पादयन्ति। तत्र हि मि. 'औल्डेनबुनओबेर मिलरौ, पण्डितपुरन्दरौ कौटिल्यार्थशास्त्रस्यानुवादमलेखिष्टाम्। एकेन च रूसीयविज्ञेनास्य संस्कृतटीकापि परिटीकिता। कश्चन विद्वांस्तत्र रूसीयान्तेसदाङ्कृते संस्कृतभाषाया नवीनं व्याकरणं प्रारम्भिकपुस्तककदम्बकञ्चालेखीत्। निश्चयं हि तत्र संस्कृताध्ययनमिदानीं सरभसं बोभवीति। किमन्यत्? संस्कृतवन्दारुका भावुकास्तत्र नगरद्वयस्य 'ब्रह्म-माया' इत्यमिधां विधाय संस्कृतव्यापकत्वं प्रदर्शितवन्तः। रूसदेशः संस्कृतस्य सर्वत्र प्रथमं प्रचारं दिदृक्षते। अतएव गतसमेऽत्र रूसात् संस्कृतप्रचारवाञ्छयाऽऽयातेन डा. लूईरेणु महाशयेन मध्येसभमुक्तम्- 'संसारस्य सर्वा एव भाषाः संस्कृतप्रभाविता...........एशियाया अनेकदेशानां भाषाः संस्कृतशब्दान् वहन्ति" (वङ्ग पत्रम्)। अयमेव भारताद् गमनानेहसि सखेदमभाषत – "अहमेकमेव दुःखमादाय भारतात् स्वदेशं गच्छामि यद्वयं योरोपीयास्तु यां भाषाममरभाषां मत्वा समनुशीलयामः, तामेव भारतीया 'मृताम्' आचक्षते। भारतीयानामिदं दौर्भाग्यं यत्तेषां शिक्षासचिवोऽपि संस्कृतं न जानाति" इति। उद्धरणेनानेन स्वयमेव चिन्तनीयं सचेतोभिर्यद्, रूसे कियन् महत्त्वं संस्कृतभाषायाः? इति।

## अमेरिकायाम्

अमेरिका-देशस्यापि संस्कृताभिरुचिः शोभनीया। पूर्णं प्रभावितोऽसौ संस्कृतभाषया। अत एव गवेषणायै स समये समये संस्कृतविपश्चितः प्रहिणोति सर्वत्र, विशेषतश्च भारते.। गतवर्षेषु 'फुलब्राइट'- च्छात्रवृत्तिमाप्य डा. कर्टएफलीडेकरोऽत्र सम्प्राप्तः। एवमेव तत्रत्यः प्रसिद्धः प्रवक्ता महात्मनो गान्धिनश्च चरितकारो मि.

विनेष्टशीयानः संस्कृतं प्रचारयितुमिहागतः। ख्रिस्ताब्दस्य पञ्चाशदधिके नवदशतमेऽपि वर्षे डा. मीनार्डः संस्कृतप्रचाराय अमेरिकातः सर्वत्र भ्रमन् भारतमभ्यागतः।

अस्मिन् काले 'अमेरिका कांग्रेस पुस्तकालये' सप्तशताधिकषट्सहस्रसंख्याका हस्तलिखितप्राचीन-संस्कृतग्रन्थास्तत्र भारत-गौरवं वर्धयन्ति। सर्वत्र जगति प्रकाशितानां संस्कृतपुस्तकानां सूचीपत्रमपि तत्रैव लभ्यते– इत्यपि शोश्रूयते।

अमेरिकाया 'पीरू' प्रदेशस्य 'कूइचूंआ' नाम्नी भाषाऽद्यापि सहस्रशः संस्कृतशब्दानाश्रयते। अत एव संस्कृतस्यान्तरराष्ट्रियं महत्त्वं ध्यायं ध्यायं तत्रत्या हार्वर्डयेल-कोलम्बिया-कौर्नेल-शिकागो-वाशिंगटन-प्रभृतिविश्वविद्यालयाः सुरगिरं प्राधान्येनाध्यापयन्ति। अमेरिकाया भाषाचार्याश्चिरगवेषणोत्तरमिदं निश्चितवन्तो यत् "न केवलमेशियाया एव, प्रत्युत समग्रस्यापि योरोपस्य भाषा-जिज्ञासुकानां संस्कृतवाचोऽनुशीलनमावश्यकम्। यतः संस्कृतेन सह सर्वासां निकटतमः सम्पर्कः" इति (अमेरिकन रिपोर्टर)।

नाधिकः समयो यातोऽमेरिकातो भारतराजधान्यां 'हायर लर्निङ्ग इन ओरियन्टल ह्यूमीनिटी' संस्थायाः संस्थापको डा. 'फैलिक्स-बालर्ड' महाशयो भारतातिथितामाप्तवान्। स हि संस्कृतं सेवमानः समवदत्–"संस्कृतं सर्वासामिण्डोयूरोपियन्-भाषाणां जननी। पश्चिमदेशानां भाषासु य आनन्द आप्यते, स ताभिः संस्कृतादेवाधिगत्य वितीर्यते" इति। अतः स्पष्टं वक्तुं शक्यते यदमेरिका-देशेऽपि संस्कृतवाचः समधिकं महत्त्वं विद्योतते।

## जर्मनदेशे

जर्मन-प्रदेशीयानां संस्कृताभिरुचावपि किमु व्याहरामि? श्रावं श्रावं तेषां संस्कृतभाषाप्रसारोद्घोषं परमं सन्तोषं समञ्चति चित्तम्। बर्वरबलवर-रूडाल्फराथ प्रभृतयोऽनल्पा विद्वन्मणयो जार्मनीमेवावनिं जनुषाऽशूशोभन्त। प्रसिद्धतमेन मैक्समुलरेणापि स्वजीवनस्याधिकः समयोऽत्रैव यापितः। अखण्डेऽपि क्षोणीखण्डे दुर्दर्शनं रावणकृतवेदभाष्यं जर्मनदेश एवोपलभ्यते–इत्यभियुक्ता आचक्षते। वेदानामन्यत्रासुलभान्यन्यान्यपि भाष्याणि, तन्त्राणि, मन्त्रशास्त्राणि, दर्शनानि, काव्यादीनि च तत्रैव वेविद्यन्ते।

भारतेऽत्र स्वराज्यप्रसारोत्तरं जर्मनदेशतः समायातेन तत्रत्यस्य कस्यचन विश्वविद्यालयस्य महामहाध्यापकेन श्री आल्ड्डोर्फ-महोदयेन नागपुरे मध्यप्रदेशीय-प्रधान-

मन्त्रिणः साभापत्ये 'जर्मन्यां संस्कृताध्ययनम्' विषयमिममधिकृत्य यद्भाषितं तस्यायं संक्षेपः प्रदीयते–"तत्र जर्मनीयैः सश्रद्धं संस्कृतं समधीयते, अनेकशस्तत्र संस्कृतशास्त्राणां निर्म्मातारश्च सन्ति। तत्र हि वृन्दारकवाचो भावमाधुर्यादिभिर्मोहमुपगतो यदि कश्चन 'अभिज्ञानशाकुन्तलं शिरसि निधाय नित्यं निर्नर्त्तिषति र्तार्हि कश्चिदविरतं कादम्बरीमेव चिचिन्तिषति। यदैको मनुस्मृतिं जिगासति तदान्यस्तूपनिषद्भ्यः शान्तिं विवाञ्छिषति। एवमेव यदि कश्चन वैदिकविज्ञानानुसन्धानेन यशोऽर्जिजिषति तर्ह्यपरो योगसाधनानुष्ठानादिभिर्दीर्घायुष्ट्वं तितांसति।" एवं सवत्रैव तत्र सर्वे संस्कृतं वावाञ्छयन्ते। यद्यपि जार्मन्यामवन्यां नार्थिको लाभः संस्कृतभाषायाः साक्षात् सम्बन्धेन सुलभस्तथापि तत्र प्रतिदिनं संस्कृत पठन-पाठन-परम्परा समुपचीयमाना दरीदृश्यते। एवमलङ्कर्मीणानां जर्मनीयानां संस्कृतानुशीलनं मनसि निधाय को वा पक्षशून्यो विज्ञधन्योऽमरगिरोऽन्ताराष्ट्रियत्त्वे शङ्किष्यते?

## अफगानिस्ताने

अफगानस्तानीयोऽपि संस्कृतप्रसारः सर्वथा मुक्तकण्ठमुद्घोषणीयः। 'तत्रत्या ह्यात्मनः आर्यत्वं सम्पादयन्तः ससम्मानं संस्कृतमनिवार्यरूपेण पापठचन्ते'– इति स्मृतिसरणिमारूढा वासन्तिकीव विभा वार्त्ता समुल्लासयति नो मनांसि। ऊनपञ्चाशदधिकैकोनविंशतिशततमे ख्रिष्टवत्सरेऽफगानिस्तानभारतयोः सांस्कृतिकसम्बन्धं द्रढयितुं ततः सादरमामन्त्रितेन 'श्रीमुहम्मद-आशिम' महाशयेन मुम्बापुर्य्यां भाषमाणेनैवमगद्यत– द्वयोरनयोर्देशयोः प्रधाना भाषा संस्कृतवाक्, अफगानिस्तान भाषायाः समधिकाः शब्दाः सांस्कृता एव। अत एव तत्र सर्वत्र महाविद्यालयेषु संस्कृतमावश्यकरूपेणध्याप्यते" इति।

अवस्ताभाषा 'जेन्दा' एव। जेन्दशब्दश्च 'छन्दः' (वेद)– शब्दविकृतिः वस्तुतोऽवस्ताया न केवलं पद्यान्येव, अपितु तच्छाब्दी सञ्चितिरपि छन्दोग्रन्थाननुकरोति। एवमर्थद्योतनेऽप्यवस्ताशब्दाश्छन्दोभाषामनुधावन्ति। जलानिलादीनां प्रभावेण सांस्कृताः 'भ घ छ स' प्रभृतयो वर्णाः प्रायो जेन्दावस्तायां 'फ ज ह ज' स्वरूपं कलयन्ति।

भाषाशास्त्रजुषां विदुषां गवेषणाराद्धान्तोऽयं यत् संस्कृत-जेन्दावस्तयोराधिक्यं सारल्यं सङ्कोचञ्चादाय 'अरबी' वागजनिष्ट। तिसृणामासां संयोगाच्च 'फारसी' जनिमलभत। किञ्चिदत्रैतच्छब्द[illegible] समस्तः—

| संस्कृते | अवस्तायाम् | संस्कृते | अवस्तायाम् |
|---|---|---|---|
| शुण्डः | शुण्ड | सेवा | हेवा |
| अष्टम् | अजम् | असुरः | अहुर |
| अस्मि | अह्मि | अहिः | अजि |
| आहुतिः | आजुति | सप्ताहः | हप्ताह |
| होता | जोता | कुशलं | कशुलं |
| मन्त्रः | मन्थ्र | प्रहारः | परहार |
| सोमः | होम | अश्वः | अस्व |
| छन्दः | जन्द | विश्वः | विस्य |
| जिह्वा | हिव्या | फुप्फुसः | पपुस |

एवमेवारव्यां भाषायां व्यवहारमापन्नाः 'तंबोल (ताम्बूल)– काफूर (कर्पूर)– हैल (एला) –लेम्बु (निम्बु) प्रभृतयः शब्दा अपि तत्र संस्कृतप्राचुर्यं पोषयन्ति। एतद्देशीयानां संस्कृतस्य सोऽयं शब्दसञ्चयोऽध्ययनक्रमश्चास्याः सुखाचस्तत्र कियद् व्यापकत्वमुद्योतयति इति नेत्रैर्निभालनीयं पाश्चात्यचरणचुम्बिभिः।

## एस्किमोप्रदेशे

अपि नाम भूमण्डलोत्तरीय-गोलार्धस्य शीतकटि-प्रबन्धे विलसितः 'एस्किमो' प्रदेशोऽपि न केन भूपण्डितेनाकर्णितः ? तद्देशीया भाषा 'ग्रीनलैण्ड-लब्रेडो-मेकेन्जी-अलस्का-एशियायिएस्कमो'– इति पञ्चधात्वमापन्ना। इमाः सर्वा अपि हिन्दी–वागिव दिविषद्वाचमाश्रित्यैव प्राणन्तीति दूरतरप्रदेशेऽपि कियन्महत्त्वं विभ्राजते संस्कृतवाण्याः ?

विदुषां गवेषणापरिणामोऽयं यत् 'एस्किमो' भाषाणां मूलं संस्कृतमेव। यद्यपि चिरदूरतया शब्दसम्पत्तावपभ्रष्टताऽवश्यं दृश्यते तथापि विशेषतस्तु शब्दाः सांस्कृतं शौद्धं स्वरूपमेव विभ्राजयन्तीति स्तोकं तेऽपि द्रष्टव्याः। संस्कृतस्य 'कर्कटकं तत्र' 'कङ्कोक' नाम्ना कथ्यते, रक्षणात्मकोऽवधातुः 'अवग' इत्युच्यते, 'अग्नि'श्च 'इग्नेकं' इत्यभिदीयते। इत्थमेव संस्कृतस्य 'सिकता' शब्दः 'सिरसक' स्वरूपे परिणतस्तत्रोदीर्यते। एवं तत्रत्यः पर्याप्तो भाषाशब्द-समवायः संस्कृतमुपयन् तस्यान्ताराराष्ट्रियमहत्त्वप्रदर्शनेऽभिनन्दनीयं सहयोगं यच्छति।

## थाईलैण्डे

साम्प्रतं श्यामदेशः 'थाईलैण्ड' नाम्नाऽभिधीयते। तत्र तु स्त्रियोऽप्यहमहमिकया संस्कृतं शिक्षन्ते इति का कथा पुरुषाणाम्? विगतवर्षेषु 'भारत' पत्रस्यैं कस्मिन्नङ्के सुप्रसिद्धभारतीयभाषाशास्त्रि डा. रघुवीरमहोदयेन पर्याप्तैः प्रमाणैः श्यामदेशीय-भाषायाः संस्कृत स्वरूपता पूर्णं प्राकाशि। येन विज्ञातं भवति यत्तत्र 'कतिपय–कथाशेष-कदाहार–कनिष्ठ-भगिनी-कपट-लेख-कर्मशाला-कर्मकारिणी-कर्मगोचर-कर्मसार्थी एक-चक्षुः–उपचक्षुः-उपराजः –इत्यादयोऽनेके सुरभारतीशव्दाः दैनन्दिनव्यवहारमुपगताः संस्कृतस्य विश्वमहत्त्वायोच्चैं रोरुच्यन्ते। कथन्नैतत् पाठंपाठमपि सोरस्ताडङ्कोणे स्थीयते संस्कृतविद्वेषिभिः?

## सीलोने

सिंहलद्वीपापरपर्यायस्य 'सीलोन' देशस्यापि लोकव्यवहारे नक्तन्दिवं संस्कृत-शव्दा एव गृह्यन्ते। मोहात्त (महूर्त्तं) देवस्थानय (देवस्थान) रथ-चक्र-प्रणनपत्र (विल) दूरशव्दयन्त्र-ज्योतिष-कथोपकथनय-महामारी-रोग-विभागयेत्यादिकाः संस्कृतस्वरूपाः शव्दास्तत्र संस्कृतभाषाया महत्त्वं प्रवलताञ्च प्रमाणयन्ति।

## हॉलेण्डदेशे

'हॉलेण्ड' देशोऽपि संस्कृतस्य विश्वप्रसारमालोक्य प्रारम्भत एव संस्कृतं कामय-मानो दरीदृश्यते। अत एव तत्र पञ्चानां विश्वविद्यालयानां चत्वारः प्रचुरेण प्रकारेण संस्कृतं परिप्रथयन्ति। अपवादस्वरूपस्तु तत्रैक एव विश्वविद्यालयो भौतिकं विज्ञानं शिक्षयंस्तत् परिपिप्रयिषते।

अमुष्मिन् देशे बहूनां संस्कृत-ग्रन्थानां डच्भाषा-माध्यमेन कृता अनुवादाः सश्रद्धं समधीयन्ते लोकैः। किमन्यत्, संस्कृत-प्रसृतिप्रभावितास्तत्रत्या जनाः कविकुलगुरोः कालिदासस्य 'अभिज्ञानशाकुन्तलं' शूद्रककवेश्च 'मृच्छकटिकं' नाटकं शुद्धेन संस्कृते-नाभिनीतवन्तः– इत्यपि पठितचरमेव स्याद् वृत्तपत्रेषु विज्ञैः। किमन्यल्लयेख्यमस्य देशस्य संस्कृतभाषाप्रसारसम्बन्धे?

## इटलीप्रदेशे

प्राचीनो रोमदेशः साम्प्रतिकैः सर्वं एवासौ 'इटली' इत्याख्यया विख्याप्यते। रोम-भारतयोश्च सांस्कृतिके सम्बन्धे नास्ति कस्यचनतिवादानुसन्धान-सन्धायकस्य

विदुषो विसंवादः। रोमदेशे प्रचलितासु गाथासु भारतीयगाथानामिव प्राणाः स्पन्दन्ते। न केवलमेतावदेव, इटलीभाषायमनल्पाः संस्कृतशब्दाः अप्यपभ्रंशरूपेण प्रचलिता व्यवह्रियन्ते। यथा सर्पस्थाने 'सपः', सप्तपर्याये 'सेप्ते', नवशब्दस्य प्रातिनिध्ये च 'नाव' इति प्रयुज्यते—इत्यलमतिपल्लवितेन।

## मिश्रदेशे

मिश्रदेशेऽपि गैर्वाण्या वाण्या विपुलः प्रसारः समालोचयते। प्रारम्भे तु तत्र भारतवर्षवत् संस्कृतमेव लोकभाषाऽऽसीत्—इति प्रसिद्धतमस्य भाषाशास्त्रिणः श्री प्राणनाथस्य गवेषणापरिणामेन सर्वैः स्वीकृतम्। तत्र तु संस्कृत-संस्कृतिप्रभाविता लोकाः स्वदेवतानामान्यपि सांस्कृतानि संरक्ष्य स्वदेशस्य संस्कृतमयत्वं निश्चेचीयन्ते। निश्चितं हि मिश्रीयाः स्वकीयमादिमं मानवं 'मन' नामकं मन्यन्ते। अयं मनश्च संस्कृतस्य 'मनुः' एव नान्यः। मिश्रभाषाया अन्येऽपि संस्कृतमयाः शब्दाः सुरभारत्या विश्वप्रसारप्रामाण्यायाधस्तादुपस्थाप्यन्ते। यथा—

| संस्कृते | मिश्रभाषायाम् | संस्कृते | मिश्रभाषायाम् |
|---|---|---|---|
| ओम् | आमन् | शिवः | सेव |
| हरः | हर | ईशः | ईशिस् |
| मनुः | मन | दिनेशः | दायनोशिस् |

एवंविधायाः संस्कृतबहुलभाषायास्तत्र सत्त्वेऽपि को वा प्रमादी संस्कृतभाषाया अन्ताराष्ट्रियमहत्त्वाय दुर्घ्रोक्ष्यतीति।

## आस्ट्रियायाम्

'आष्ट्रिया' देशेऽपि संस्कृतस्य ज्ञातारो वक्तारो निर्म्मातारो बहुसंख्यायामेतावन्तो मिलन्ति। तत्र तु विशेषावसरेषु संस्कृतनाटकान्यभिनीयन्ते। विगतवासरेषु पठितमेव स्याद् विद्वद्भिर्वैदेशिकवृत्तेषु, यद् 'आस्ट्रियादेशराजपुर्यां तत्रत्यैः कविवरैर्भवभूतेः 'मालतीमाधवस्य' सफलोऽभिनयः सम्पादितः सर्वसमक्षं यमवलोकयितुं तत्रस्थितो भारतीयराजदूतः श्री डा. श्री. वे देसाई महोदयोऽपि समुपस्थितोऽभूत्। दर्शं दर्शं च स तत्रत्यानां संस्कृतस्नेहं भाषाभिनय-नैपुण्यञ्च परमं प्रासीदत्। हं हो! सर्वतोऽभिसारि संस्कृतमाहात्म्यम्?

## हिन्देशियाप्रान्ते

एवमेव 'हिन्देशिया' प्रदेशेऽपि संस्कृतवाचोऽनतिलघीयान् प्रचारश्चेतश्चन्दयति। तत्रासीत् पूर्वस्मिन्ननेहसि त्वबाधप्रसारः संस्कृतस्य। किन्तु शोचनीयतमेऽप्यस्मिन् समये तत्र वाल्मीकिरामायणमहाभारतादिकथाः प्राधान्येन सुश्रूयन्तेऽभिनीयन्ते च। अनल्पाश्च संस्कृतग्रन्थास्तत्र ग्रन्थालयान् शोभयन्ति रञ्जयन्ति च जनमनांसि। किमधिकम्, तत्रत्यानां नामान्यपि संस्कृतमयान्येव दृष्टिपथमायान्ति समाचारपत्रेषु।

## इंग्लैण्डे

'इंग्लैण्ड' विषयविषये त्वधिकं न खलु कथयित्वा। देशस्यामुष्य निदानं भाषायाः संस्कृतवागेव। यद्यपि 'लेटिन' भाषाऽऽख्यायते 'इंग्लैण्डीयानां' प्राचीन भारती। परं सापि विश्वभाषाजनन्या दैव्यावाण्या प्रभाविताऽनुभूयते। प्रचलितेऽस्मिन्ननभीष्टे दिष्टे 'अंग्रेजी' भाषायां बहवः शब्दा भौगोलिकपरिस्थित्या ईषद्विकृत्या व्यवह्रियन्ते, बहवश्च संस्कृतसमाना एव प्रयुज्यन्ते– इत्यपि कर्णकुहरे करणीयं संस्कृत सुकृतिभिः सकौतुकम्। अत्रेदानीं 'संस्कृतशब्दानां लैटिन्याम् अंग्रेज्याञ्च भाषायां क्रमिको विवर्त्तो विलोकनीय :–

| संस्कृते | लैटिन्याम् | अंग्रेज्याम् |
|---|---|---|
| मातृ (मातरः) | माटर | मदर |
| पितृ (पितरः) | पिटर | फादर |
| दुहितृ (दुहितरः) | दुहितर | डाटर |
| भ्रातृ (भ्रातरः) | भाटर | ब्रदर |

अधुना ये संस्कृतशब्दाः अंग्रेज्यां केवलं मनाग् भेदमुपगता भण्यन्ते, तेऽपि दर्शनीयाः-

| संस्कृते | अंग्रेज्याम् | संस्कृते | अंग्रेज्याम् |
|---|---|---|---|
| पथ | पाथ | ते | दे |
| इतर | अदर | यूयम् | यू |
| त्रि | थ्रि | सर्प | सर्पेन्ट |
| नव | नाइन | तथ्य | ट्रूथ |
| नो | नो | सन्तः | सैंट्स |
| युवन् | यंग | वाञ्छ | वांट |
| वयम् | वी | हला | हलों |

सम्प्रति 'इंग्लैण्डीयाः'' स्वव्यवहारे यान् [illegible] शब्दान् प्रयुञ्जते, ये सांस्कृता एव मूलरूपे। परमस्माकं संस्कृतज्ञा भ्रातरो गुरवश्च कान्दिशीकास्तत्प्रयोगेभ्यो बेभीयन्ते। अथ नव्यैर्व्यवहृतेषु तेषु ते तासां सङ्कोचयन्ति भृकुटिञ्च दर्शयन्ति। उदाहरणार्थं तादृग्विधा अपि पञ्चषाः शब्दाः स्थाप्यन्ते–

सायकील–अयः कीलैः सहितः सायः कीलशब्दो वाहनविशेषे (साइकीले) रूढः।
रेल– राये धने लातीति रैलः। (रेल)
मोटर–मरुतं तरति, मरुद्वा तरति–इति मरुत्तरः। (मोटर)
क्लार्क–कलाम् अर्कयति स्तौतीति कलार्कः (लेखकः क्लार्क)
क्लाक–कलाः कायति (कै शब्दे) इति कलाकः (क्लाक)
फ्लावर–फलम् अवरं यस्माद् इति फलावरः। (पुष्पम्)
कुली–कौ भूमौ लीयते, अथवा कु-ईषल्लीयते-इति कुली।
बैरिष्टर–वैरिणाम् इष्टं राति—ददाति इति बैरीष्टरः।

एवंविधा ये हि अनल्पाः शब्दाः संस्कृतभाषातः किञ्चिदेवोच्चारणवशात् परिवर्त्तनमायातास्तेऽप्यस्माभिरन्वषणीयाः। परमिह स्थानसङ्कोचभयाद् नास्ति तेषां विशेषप्रदर्शनावसरः।

अनेन शब्दोपन्यासेनेदन्तु दृढीभूतमेव यत्संस्कृतस्यान्ताराष्ट्रियमहत्त्वे नास्त्यस्माकं मिथ्याभिमानः। किमतीव वेगवती वात्येव सेयं संस्कृतभारती प्रसृतिर्नोतोत्स्यति सञ्चालयिष्यति वा दिविषद्भाषाया आ अङ्गुलिपरिसङ्ख्येयसङ्ख्यावदवलम्बनतां प्रजल्पताञ्चेतांसि सम्यक् ?

## फिनलैण्डे

'फिनलैण्ड' देशीयानामपि मानवानां सुरसरस्वतीसेवनं हृदयतः समभिनन्दनीयम्। तत्र लोकानां संस्कृतभाषाभिरुचिं वीक्ष्य केनचिद् एकेन विदुषा मानवधर्मशास्त्रं पुराणानि चोपजीव्य संस्कृतसाहित्यपरिचायकः कश्चन प्रबन्धराजः प्रकाशितः चीनतुर्किस्तानादिदेशीयहस्तलिखितग्रन्थानां गवेषणमपि फिनलैण्डीयानां कृतिनां वैशिष्ट्यम्। पुरा भारतराजधान्यां देहलीनगर्यां विराजमानः 'फिनलैण्ड' राजदूतः हिउगोवाल्सान्न महोदयः संस्कृतशास्त्रेषु परमपारगामितामितोर्वर्तिष्टेति श्रवणसुखावहानि स्वर्णवर्णानि कस्य वाऽधन्यस्य कर्णगोचरतां न गतानि स्युः। अमुना महानुभावेन स्वकीये देशे वृन्दारकवाचः प्रचुरप्रचारमत्र भारते च विरलप्रसारं विलो-

क्यात्यन्तमव्यार्थीति कथं मन्यन्तः स्वयमेव निश्चिन्वन्तु सन्तः संस्कृतभाषायाः सर्वत्र महत्त्वम् ।



## इराके

'ईरान-ईराकयोर्मध्यवर्त्तिनि' पार्वत्यप्रदेशे पुरातत्त्वविपश्चिभिरेकोऽद्भुतः शिलालेखः प्राप्तः। तेन ते निरचैषुर्यत् "स्मो वयमार्यकुलसन्तति-सन्ततयः, अस्माकं लोकभाषा च पूर्वं देववागेवावर्त्ततेति"। अत एवेदानीम् 'ईराक' देश आत्मनो भाषायाः संस्कृतसरस्वतीनिदानतां निश्चित्य संस्कृतभाषायाश्च सर्वत्र प्रभूतप्रभावतामालोक्य स्वकीये विश्वविद्यालये वृन्दारकवाचं पाठयितुं भारतात् सुप्रसिद्धं प्राच्यार्वाच्योभय-विधविद्यापारगामिनं पण्डितराजं श्री कुन्हनराजं ससम्मानं समाहूय तदाध्यक्ष्ये सर्वत्र संस्कृतं प्रासारयदिति कियतीममन्दां मुदं विन्दामहे वयमस्य महत्त्वेन।

## शिकागोदेशे

'शिकागो' देशे संस्कृतवाचि विलसिताः साहित्य-व्याकरणादिविषयाः, एवं सोपपत्तिका; साङ्गा वेदा अप्यध्याप्यन्ते। तत्रैव शिकागो–विश्वविद्यालयस्य भाषा-विज्ञानस्नातकः श्री डा. कुईलेडेकरः केलिफोर्नियाविश्वविद्यालये वेदविभागे प्राधान्यम् भजत-इत्यपि संस्कृतभाषाया अन्ताराष्ट्रियमहत्त्वे प्रमाणत्वेनोपस्थातुं शक्यते।

## असीरियायाम्

'असीरिया' प्रदेशेऽपि पुरातत्वपण्डितैरष्टादशतमे शतके 'उपनील' नद्युद्गमे 'रोजेटा' नाम्ना विख्याते स्थले कश्चन प्रस्तरविशेषः समलाभि। तस्मिन्नुट्टङ्कितासु तिसृषु भाषास्वासीदेका संस्कृतभाषा। अतो नूनं विलोकनीयं विपश्चिदपश्चिमैः संस्कृतभाषायाः सर्वस्मिन् संसारे प्रसरणशीलत्वम्।

## कम्बोडियादि

एवं कम्बोडियायां पुरा संस्कृतमेव राज्यभाषाऽऽसीत्। ख्रिस्तस्य त्रयोदशशतकं यावत् तत्र देववाक् प्रायुज्यत। 'बाली' द्वीपेऽपि ख्रिस्तस्य दशमशतकं यावत् संस्कृत-मेव प्रधानभाषासनमलञ्चकार। अद्यत्वेऽपि तत्र संस्कृतभाषायां 'सारसमुच्चयनामा' ग्रन्थः सर्वसाधारणेषु पाठ्यते। ग्रन्थोऽयं महाभारतस्य पञ्चशतश्लोकानां संग्रहः। सोऽयं भारतेऽत्र डा. श्री रघुवीरमहोदयेन सम्पादितः।

### चीनदेशे

चीनदेशमतिरिच्य सम्प्रति न कश्चन देशो महादेशो वा आत्मनो भाषायां लक्षशब्दान् विभर्ति । परन्तु चीनभाषाया लक्षशब्देषु पञ्चविंशतिसहस्रशब्दाः संस्कृत-भाषायाः समुदीर्यन्ते-इत्यस्त्यद्भुतं महत्त्वमस्माकं संस्कृतभारत्याः ।

इदानीमिह काँस्कान् देशानुपस्थापयामः ? जावासुमात्रा-बोर्नियो-तिब्बत-जापान-फीलीपाइन-प्रभृतिनां सर्वेषामेव देशानां भाषासु संस्कृतशब्दोपलब्धिरवगम्यते। येन न संस्कृतस्यान्ताराष्ट्रियमहत्त्वे ईषदपि संशीतिरवशिष्यते। देववाचो व्यापकत्वं ध्यायं ध्यायं सङ्कुचितचित्तानां नासा-भ्रू-सङ्कोचनं सर्वथा साम्प्रतमसाम्प्रतमेव ।

## भारताद् बहिर्देशेषु संस्कृतसंस्कृतेः प्रचारः

संस्कृत-संस्कृत्योरभेदं सम्बन्धं स्वीकुर्वन्ति कृतिनः। आस्माकीना संस्कृतिश्च भारताद् बहिरपि सर्वत्रैव वेविद्यते इत्यपि निरचैषुः सूरितल्लजाः। यथा 'बोर्नियो' द्वीपे मन्त्रैर्गणेशादिदेवाः पूज्यन्ते, 'बाली' द्वीपे शव-नयन-समये संस्कृतगाथा उच्चार्यन्ते, 'इटली' प्रदेशेऽस्माकं शास्त्रेषु प्रतिपादिता बलिप्रथा समाकर्ण्यते, मृतपूजाप्रकारोऽपि तत्र भण्यते, नामान्तरैरस्माकं देवाश्चापि तत्र समर्च्यन्ते, मक्कायां मक्केश्वरो महेश्वरो विराजते इत्यादि साश्चर्यं पठ्यते 'संस्कृत'पत्रे। अमेरिकायां कोलम्बसाद् अनेक-शताब्दिपूर्वाणि मैक्सिक्को-ग्वाटमाल-पीरू-बोल्विया-प्रभृतिदेशेषु हिन्दूनां बौद्धानाञ्च मन्दिर-विहारादीनि 'संस्कृतसंस्कृतिं' प्रकाशयन्ति। एवमेव 'ईराक' देशेऽस्माकं वेदान्तदर्शनस्यैकेश्वरवादः शान्तिकामुकैरुपास्यते—इति कियत्कालं वर्णग्रामो विषय-मिमम्? सर्वा एवैताः संस्कृतयः संस्कृताश्रिताः। अतः संस्कृतभाषा अन्ताराष्ट्रिय-महत्वप्रकाशने संस्कृतीनामपि वर्त्तते प्रधानं स्थानम् ।

## भारताद् बहिर्देशेषु संस्कृतग्रन्थानां प्रकाशनादिकम्

संस्कृतभाषाया अन्ताराष्ट्रियमहत्त्वद्योतने बहिर्देशेषु संस्कृतग्रन्थानामनुवदन-प्रणयन-प्रकाशन-सम्पादन प्रभृतिकर्माण्यपि सुवर्णे सुगन्धं योजयन्ति। अस्माकं 'संस्कृत-रत्नाकर' पाठकानां नयनातिथित्वमुपयातैव स्यादसौ तदङ्कद्वयी, यस्यां श्रीवीरेन्द्र-शास्त्रिणा 'पाश्चात्त्यविदुषां वैदिकवाङ्मय सेवा' शीर्षके लेखे तादृक्षाः पञ्चषष्टिसंख्याकाः पाश्चात्त्यविद्वांसः समुल्लेखिताः, यैर्भारताद् बहिः संस्कृतग्रन्थप्रणयन-प्रकाशनादिकं कार्यंजातं सम्पाद्य सर्वत्र संस्कृतगौरवातिनितान्तता प्रदर्शिता। एतदतिरिक्तं यथा-

स्थानं पूर्वमस्माभिरपि तद्विषयकाः सङ्केता अपि कृता एव । किमन्यत्, दक्षिणैशियायां जावात आरभ्य पश्चिमोत्तरयूरोपस्य 'आईलेण्ड' पर्यन्तं प्रचलितासु प्रायः सर्वास्वेव भाषासु द्विशताधिकाः पञ्चतन्त्रपुस्तकानुवादाः प्रकाशमुपगताः संस्कृतभाषाया विश्वप्रसृतं महत्त्वं समर्थयन्ते । संस्कृतप्रसारातिशयेनैव 'बईबिल' ग्रन्थस्याप्यनुवादोऽकारि कृतिभिर्विदेशेषु—इत्यलं पल्लवितेन ।

## उपसंहारः

श्री दिविषद्भाषाया महनीयमहत्त्वनिदर्शकाः सन्त्यनेके एतादृक्षा विषया अपरेऽपि परं नात्र लघुतमे निबन्धे ते नामतोऽपि प्रदर्शयितुं शक्याः । इह सम्प्रति प्रदर्शितेष्वप्येतेष्वेकैको विषयः स्वतंत्रं बृहद्व्याख्यानमपेक्षते । तथापि यथामति समुपन्यस्तेनानेनापि प्रकरणेन संस्कृतभाषाया अन्ताराष्ट्रियं महत्त्वं सपटहध्वानं ध्वनयितुं भृशं शक्यते ।



**वीमा-एजण्ट** :—"भवदीयमोटरयानस्य वीमाशुल्कं वयं गृह्णीमः । किन्तु यदि तद् यानं दुर्दैववशात् विभङ्क्ष्यति तर्हि न वयं तस्य मूल्यं धनरूपेण दास्यामः ।"

**श्रेष्ठी** —"किं तर्हि ?"

**वीमा-एजण्ट** :—"तस्य स्थाने अपरमेव नवीनं मोटरयानं भवते समर्पयिष्यामः ।"

**श्रेष्ठी** —"बाढमेवम् । यानस्य स्थाने यानप्राप्तौ नास्ति मम कोऽपि विरोधः । किन्तु यदि सर्वत्र युष्माकमयमेव नियमः स्यात्, तर्हि मम पत्न्याः वीमा-शुल्कं शीघ्रमेव मह्यं प्रतिप्रयच्छध्वम् ।"

# सह वीर्यं करवावहै

डॉ. अरुणोदय न. जानी*

[वटपत्तनस्थ संस्कृतविद्वत्सभायाः पञ्चदशे वार्षिकोत्सवे स्वागताध्यक्षस्य नटवरलालात्मज-स्यारुणोदयस्य जानीत्युपाह्वस्य स्वागतप्रवचनम्। ]

ॐकारावर्तरम्या यजुरमलजला सामगम्भीरघोषा
ऋग्वेदाथर्वकूला क्रमपदपुलिना न्यायशास्त्रोत्तरङ्गा।
अङ्गग्राहावनद्धा शतपथगमना ब्रह्मविद्यार्णवान्ता
ब्राह्मी वाग्जाह्नवीयं क्षपयतु दुरितं सर्वदा शर्मदा नः॥

परमसम्भावनीयाः श्रीमन्तोऽध्यक्षमहोदयाः, श्रीमन्तोऽतिथिविशेषाः, गुरुजनाः, सुरभारतीचरणचञ्चरीका विद्वांसः, सज्जनाः, सन्नार्यश्च।

अद्यास्माकं संस्कृतविद्वत्सभायाः पञ्चदशे वार्षिकोत्सवेऽस्माकमामन्त्रणं सम्मान्य महत्यां संख्यायां संख्यावन्तो भवन्तः समुपागताः, अस्माकं चोत्साहं द्विगुणीकृत्यास्माननुगृहीतवन्तश्च, तदर्थं भवतां समेषामादावुपकारभारान् स्मरामि। भवतां हृदयेन वचसा च स्वागतं व्याहरामि।

संस्कृतं हि नाम सुपर्ववाक्–दैवीवाक्। पश्चात्कालीनतत्तद्विद्याशाखोद्गमानां बीजभूताः विश्वस्मिन्नपि विश्वसाहित्ये प्राचीनतमाः, भगवतो महापुरुषस्य निःश्वास-रूपा वेदाः, कल्पमूलानि ब्राह्मणानि, वैराग्यपराण्यारण्यकानि, उपासनपरा उपनिषदः, धर्मगृह्यसूत्रात्मकं कल्पशास्त्रम्, व्याकरणादीनि वेदाङ्गानि, रामायणमहाभारताख्या राष्ट्रियमहाकाव्यद्वयी, अष्टादश पुराणानि, भगवतः श्रीकृष्णस्य मुखपद्माद्विनिर्गता गीता, कालिदासभारवि-माघश्रीहर्षविरचितानि महाकाव्यानि, भासकालिदास-भवभूत्यादिरचितानि नाटकानि, सुबन्धुबाणभट्टादिनिबद्धाः कथाख्यायिकाः, भरत-भामह-दण्ड्यानन्दवर्धनमम्मट-विश्वनाथजगन्नाथादिप्रणीतानि नाट्य-काव्यशास्त्राणि कपिलपतञ्जलिगौतमकणादजैमिनिबादरायणादिसन्दृब्धानि मोक्ष-रूपपुमर्थदर्शकानि दर्शनानि, भास्करवराहमिहिरादिभिरुपनिबद्धानि गणितज्यौ-तिषादिशास्त्राणि, चरकसुश्रुतवाग्भटोद्भावितान्यायुर्वेदशास्त्राणि, पालकाप्यादि-

*अध्यक्षः संस्कृतविभागस्य, म. स. विश्वविद्यालयस्य, बरोडा।

प्रणीतानि हस्त्यायुर्वेदादिशास्त्राणि चान्यैव सुरगिरा सम्भावितानि जाग्रत्यस्मिन् जगतीतले वर्षसहस्रेभ्यः आरभ्याद्यावधि।

तस्या अस्याः सुरसरस्वत्या अध्यापनसंशोधनादिद्वारा समुपासने वटपत्तने, म. स. विश्वविद्यालयान्तर्गताः, संस्कृतविभागः प्राच्यविद्यामंदिरं, संस्कृतमहाविद्यालयश्च इति तिस्रः संस्था यथा बद्धपरिकराः सन्ति तथेयं वटपत्तनस्थसंस्कृतविद्वत्सभाप्यस्याः प्रचारणे संवर्धने च सदैव तत्परा वर्तते। पञ्चदशवर्षपर्यन्तं सभयाऽनया गीर्वाणवाण्याः प्रचारणे ये ये उपायाः प्रयुक्तास्ते भवतां विदितचरा एवेति तत्र पुनरुक्तिं कृत्वा भवताममूल्यं समयं नैव व्यत्यापयिष्यामि।

विदितमेव सर्वेषां नः यत्संस्कृतभाषाया अध्ययनमध्यापनं च प्रकारद्वयेन क्रियते। आङ्ग्लशालासु विद्यालयेषु आङ्ग्लपद्धत्या, संस्कृतपाठशाला-महाशालासु च प्राच्यप्रणाल्या। एवं भिन्नभिन्नमार्गेण उभौ प्रोफेसरपण्डितौ सुरसरस्वतीं समुपासते। तथापि इदं खेदास्पदं यत् केचन पण्डिताः 'वयं प्यॉरपण्डिताः' 'एते पाटलूनवन्तः ते किमपि न जानन्ति' इत्येवंरीत्या प्रोफेसरानुपहसन्ति। केचन प्रोफेसराश्च 'एते पघडीवन्तः किमपि न जानन्ति' इति पण्डितान् गर्हयन्ति। वस्तुतस्तूभयमपि खेदास्पदं लज्जास्पदमशोभावहं च। वस्तुतस्तु प्राच्यपण्डितानां पङ्क्तिज्ञानं, प्रतीच्यप्रणाल्या शिक्षितानां प्रोफेसराणां च संशोधनपूर्णविवेचनोपस्कृतं Critical पदवाच्य ज्ञानम्, इत्येतदुभयमप्युपकारकं सुरभारतीसमुपासकानां नः। यत्तु कालिदासेन मालविकाग्निमित्रे उक्तं तन्न विस्मर्तव्यमस्माभिः।

पुराणमित्येव न साधु सर्वं
न चापि किञ्चिन्नवमित्यवद्यम्।
सन्तः परीक्ष्यान्यतरद्भजन्ते
मूढः परप्रत्ययनेयबुद्धिः॥ इति।

वस्तुतस्तु पण्डितानां प्रोफेसराणां च परस्परं सहयोगेनैव वयमस्याः सुरभारत्या—अधीतिबोधाचरणप्रचारणादिकार्ये सफला भविष्यामः। परस्परं सुमानसमस्माकं सहकारसुमनः एवं तां सुरभारतीं प्रसन्नवदनां स्थापयिष्यति। तदर्थमाद्यशक्तेर्बलं प्रार्थये।

ब्रह्मापि यां नौति नुतः सुरौघैः।
यामर्चितोऽप्यर्चति चन्द्रमौलिः।
यां ध्यायति ध्यानगतोऽपि विष्णुः
सा शक्तिराद्या तनुताद् बलं नः॥

पुनरपि सुरभारतीसपर्यायै बद्धपरिकराणां भवतां स्वागतं व्याहृत्य विरमामि।

* पाठपरिवर्तनमस्माकम्।

अमृतसरो नगरे समायोजितस्य सप्तमस्य



अखिल–भारतीय–वेदसर्वशाखा–सम्मेलनस्य

# अध्यक्षीय - भाषणम्

जगद्गुरुशङ्कराचार्य–द्वारिकाशाखापीठाधीश्वरः
श्रीमदभिनवसच्चिदानन्दतीर्थमहाराजः

अयि नितान्त-शान्त-दान्ताविद्वन्मौलिमुकुटमणयोऽन्ये च सनातनधर्मानुरागिणो वेदानुवर्तननिहतनिखिलखेदा जनाः !

वेदा हि नाम सर्वस्वं भारतस्येति सुविदितमिदं समेषामपि शेमुषीजुषाम्। वेदमेवाऽऽधारीकृत्य सनातनी प्रवर्तमाना भारतीया जीवनपद्धतिः। 'विद्' ज्ञाने इत्यस्माद्धातोः सकाशात् करणे घञा निष्पन्नो वेदशब्दो "वेद्यतेऽनेनेति व्युत्पत्त्या निखिलमेव ज्ञानमूलमुपस्थापयति। ततस्तदाश्रिता एव समस्ता विद्या-श्रेयः- प्रेयः-समवाप्तिपद्धतयश्चेति स्थाने एव भारतीयानां सर्वोच्चे स्थाने तदीयोऽभिषेकः। "वेदशब्देभ्य एवादौ पृथक् संस्थाश्च निर्ममे" इत्याद्यामन्वानेन भगवता मनुना तु न ज्ञानराशेरेव, परं कृत्स्नस्य जगतोऽपि तु सृष्टिर्वेदप्रभवैवेति प्रतिपादितम्। स्वयं च वेदेभ्योऽप्यस्यार्थस्य भवति समर्थनम्––"स भूरिति व्याहरत्, स भूमिमसृजत" इत्यादिना। स्मृति-पुराणोपपुराणेतिहासाद्युपबृंहितस्य महतोऽपि वाङ्मयस्य न केवलं मौलिस्थानीयम्, मूलस्थानीयमपि तु वेदमातिष्ठन्ते सुधियः। ते चेमे वेदाः अपौरुषेयाः, पौरुषेयाणि तादृशत्वेन प्रसिद्धानि च शास्त्रान्तराणि। अपौरुषेयञ्च संभवति मूलं पौरुषेयस्य।

यद्यपि पौरुषेयाऽपौरुषेयत्वे विषयीकृत्य चिराय प्रावर्तन्त पूर्वं प्रावादुकानां वादाः, तथापि वेदप्रामाण्यविषये उभयेषामपि तेषामविसंवादादुभयोरपि पर्यवसानं त्ववैषम्य-मेव। नहि प्राच्यैः पौरुषेयत्ववादिभिर्नैयायिकैरपि "परमेश्वरातिरिक्तः पुरुष इष्यतेऽदः-कर्तृत्वेन। पुरुषेणेश्वरेण अन्येन वा उच्चरितत्वस्य संभवेऽपि प्रमाणान्तरेणार्थमुपलभ्य रचितत्वरूपस्य पौरुषेयत्वस्य तत्रासभवादपौरुषेयत्वं त्वभिमतं पूर्वोत्तरमीमांसकानाम्। 'यत्नतः प्रतिषेध्या नः पुरुषाणां स्वतन्त्रते'ति भट्टपादाः। पुरुषास्वातन्त्र्यमेवाऽ-पौरुषेयत्वमिति तु हृदयम्। "अरेऽस्य महतो भूतस्य निःश्वसितमेतद् यद् ऋग्वेदो यजुर्वेदः सामवेदोऽथर्व" इत्यादिश्रुतिनिचयप्रामाण्यात्तु उत्तर एव पक्षः समूलोऽवतिष्ठते। तदेव "निःश्वसितमस्य वेदाः" इति स्तौति वाचस्पतिः।

नव्यैस्तु वेद-व्याख्यातृताधूर्वहैस्तथाऽपौरुषेयत्वमुपन्यस्यते वेदानां यथा प्रामाण्यस्य कथैव दूरमुपयाति। नव्येषु विद्वत्सु सर्वसम्मतप्रायं मतं मोक्षमूलरस्य तदुपज्ञस्य

आल्ब्रेट-वेबरमहोदयस्य च। स प्रायशः द्विसहस्राब्दात् प्रायः पूर्वकृतान् व्यवस्थापयद्वेदान्।


मतमिदं सुचिराय सर्वैः नव्यैः समादृतम्। अनन्तरं लोकमान्येन वालगंगाधर तिलकेन तु महताऽध्यवसायेन षट्सहस्राब्दपूर्वं कृता वेदा इति "ओरायन" इति स्वलिखिते ग्रन्थे निर्धारितम्। पाश्चात्यविदुषां कल्पनास्तेन निहता ननु। अविनाशचन्द्रदे-महोदयेन तु 'ऋग्वेदिक इंडिया' इत्यत्र प्रायशः पञ्चविंशतिसहस्राब्दपूर्वं निर्मितास्ते इति भूगर्भप्रमाणान्यनुसरता प्रसाधितम्।

विस्तरस्यात्र नाऽस्ति लेशतोऽप्यवकाशः। परन्तु किं निश्चितं विदुषामेतेन स्वयमिदं न स्फुटीभवति, यदद्याप्यनुपस्थापितपरिपुष्टप्रमाणाः कल्पना इमाः सुन्दोपसुन्दन्यायेन स्वयमेव भवन्ति पराहता इति। तत एव मोक्षमूलरेण स्वीये जिफ्फोर्ड-व्याख्यानेऽङ्गीकृतमभूद् यत् पृथिव्यां नास्ति कापि तादृशी शक्तिर्या वेदानां निर्मितितिथिं निर्धारयितुं पारयेदिति। स्वल्पकालात्पूर्वमेव विण्टरनिट्ज्-महोदयेनाऽप्यनन्तरं मतमिदमूरीकृतमेव। ततश्च स एव वेदाऽपौरुषेयत्ववादोऽनिच्छतामपि गले समापतित इति निभालितमिदं स्याद्विदांवरैः। अन्यैरप्यैतिहासिकैर्विद्वद्भिर्ऋग्वेदो नाम विश्वपुस्तकालये प्रत्नतमो ग्रन्थ इति सर्वसम्मत्या स्वीकृतम्। ततश्च निरस्तसमस्तपुंसंभवभ्रमप्रमाद-विप्रलिप्सा-करणाऽपाटवादिदोषाशङ्कस्य वेदस्य प्रामाण्यमपि निराकुलमवतिष्ठत इति।

ईदृशस्याऽस्य भगवतस्तत्रभवतो वेदस्य किं नाम स्वरूपमित्यत्रापि साम्प्रतं काश्चन समुत्थिता अवलोक्यन्ते विप्रतिपत्तयः। परन्तु वेदा नाऽद्यतनाः सनातनास्तु सनातनादेव च स्वरूपमपि तेषां निर्णीतम्। तथा चाऽऽह भगवानापस्तम्बः "मन्त्रब्राह्मणयोर्वेदनामधेयम्" इति। कात्यायनादिभिरन्यैरपि पूर्वैं ऋषिभिः समानमादृतोऽयमेव मार्गः। भगवान् जैमिनिः—"तच्चोदकेषु मन्त्राख्या, शेष ब्राह्मणशब्दः" इति समुल्लिखन्नर्थमेनमेव व्यवस्थापयाम्बभूव। तेन ब्राह्मणांशस्याऽवैदिकत्वाऽऽरोपप्ररोहः सुतरामेवाऽपास्तमूलो वेदनीयः। समग्रेषु च दर्शनेषु श्रुतिपदेन, वेदशब्देन च ब्राह्मणांश एव प्रायशो गृह्यत इति सुस्थमेतन्मन्त्रब्राह्मणात्मकोऽनाद्यविच्छिन्नः 'अग्निमीडे पुरोहितमि'त्यादिरूपनियतानुपूर्वीकः शब्दसमूह एव वेद इति।

यत्तु वैज्ञानिकानर्थान् प्रदर्शयद्भिः कैश्चन विदांवरैः "यदेतन्मण्डलं तपति ता ऋचः" इत्यादिवचननिचयपर्यालोचनया अर्कादिमण्डलमेव वेदतया व्यवस्थापितम्।

न तत्साम्प्रतम्; 'गौणत्वात्तादृशव्यपदेशानाम्। 'गुणादन्यत्र लक्ष्यमाणगुणयोगात् प्रवर्तमान इति यत्र प्रयोक्तृप्रतिपत्त्रोः संप्रतिपत्तिः, स गौणः, स च भेदप्रत्ययपुरस्सरः' इत्यादिना विशदयन्ति चैतच्छास्त्रकाराः। नहि कल्पिताऽग्निभावे माणवके लक्ष्यमाण-गुणयोगात् प्रवर्तमानोऽग्निशब्दः भवति मुख्यः।

मुख्यत्वे त्वादित्यादीनां 'वेदत्व' व्यपदेशस्य, "स्वाध्यायोऽध्येतव्यः" इत्यादि-विधीनां का नामोपपत्तिः संभवेत्? कथञ्च विधिनिषेधप्रत्यायकत्वं निखिलाभ्यु-पगतं वेदानां सङ्गच्छेत? न च वैज्ञानिकत्वेन सहाऽऽदित्यादिरूपताया वैदिक्याः, व्याप्यता वा, व्यापकता वा कथमपि प्रामाणिकपथमवतरपि। अपि च—'स ऋचां लोकः, साम्नां लोकः स यजुषां लोकः' इत्यादिना उक्तब्राह्मण एव ऋगादेर्लोकानां च षष्ठ्या व्यपदेशो लभ्यते। ततश्च "देवदत्तस्य गृह"—मित्यादाविव नाऽत्र कथमपि अभेदाऽध्यवसायः शक्य उपगन्तुम्।

तत्त्वतस्तु वेदानां वैज्ञानिकाऽर्थप्रतिपादनपरत्वं न सङ्गच्छते, धर्मब्रह्मप्रति-पादनं हि मुख्यो विषयो वेदानाम्। तथा च "अथातो धर्मजिज्ञासा, अथातो ब्रह्म-जिज्ञासा" इति सूत्रयन्तीभ्यां पूर्वोत्तरमीमांसाभ्यामनाकुलमयमर्थः प्रतिपाद्यते। "धर्मं जिज्ञासमानानां प्रमाणं परमं श्रुतिरि"ति तत्रभवान् भगवान् मनुः। "वेदैश्च सर्वैरहमेव वेद्यः" इति च गीतं भागवतीषु गीतासु। अत्रत्य एवकारस्त्विममर्थमतिस्पष्ट-यति। अतः सिद्धं यद् धर्मब्रह्मैकपरत्वं वेदराशेर्न विज्ञानादिपरतेति।

अलौकिकस्याऽर्थस्य वेदनसाधनत्वादेव हि वेदत्वं वेदानाम्। तथा च यथा करणान्तरानधिगतरूपोपदर्शकत्वेन सम्भवति चक्षुषश्चक्षुष्ट्वम्, करणान्तरानधिगत-गन्धाधिगतिसाधनत्वाच्च घ्राणस्य घ्राणत्वम्, एवमिन्द्रियान्तराणामपि। तथैव प्रमाणान्तरानधिगतधर्मब्रह्मावबोधसाधनत्वेन वेदस्य वेदत्वम्, अन्यथा तु स्वरूपहान-मेवापद्येतेति। तथा च भट्टपादाः—

"प्रत्यक्षेणाऽनुमित्या वा यस्तूपायो न बुद्ध्यते।
एनं विदन्ति वेदेन तस्माद्वेदस्य वेदता॥" इति।

एतेनाऽतिसमस्तेनाऽपि समस्तेन विचारेण वेदानामसामान्यो महिमा स्वयं स्फुटीभवति।

प्रेयांसो विद्वांसः श्रोतारश्च!

परमपुंनिःश्वसितभूतस्य निवृत्तसमस्तपुंसंभवदोषाशङ्कस्य अस्य वेदभगवतो-ऽनुवर्तनस्यैवेदं फलितमभूत् यदस्मदीयेन देशेन 'भारत'मित्यलम्भि यथार्थमभिधानम्। सर्वसुखसम्पत्सनाथं देवानाञ्चाऽपि स्पृहणीयतां भजमानमतिष्ठदिदमिति न केवलं

पुराणेतिहासैः, नवीनैरपि चेतिहासैर्भूयसा परिपोष्यतेतराम्। मुख्यतया वेदानध्ययने मृत्युर्हर्ति दर्शयता भगवता मनुना वेदाध्ययनशीलतायाममृतत्वमुपदर्शितं भवति। तथा हि——

"अनध्यायेन वेदानामाचारस्य च वर्जनात्।
आलस्यादन्नदोषाच्च मृत्युर्विप्राञ्जिघांसति॥"

अद्यतन्याः विषमायाः विषसमायाश्चास्माकीनाया दुरवस्थाया मूलमेतेन स्वयमेव समुपलब्धं भवति। अद्य या याः खलु न केवलमस्मदीयं देशं विश्वं विश्वमपि तु प्रतिक्षणमाकुलयन्त्यः समस्याः प्रतिपदमनुभूयन्ते, तासां सर्वासां निरस्तनिखिलदोषः समाधिरपौरुषेयत्वेन निरस्तनिखिलदोषाद्वेदभगवत एव सुलभः। यत एवाऽऽह मनुः——

"सैनापत्यञ्च राज्यञ्च दण्डनेतृत्वमेव च।
सर्वलोकाधिपत्यं च वेदशास्त्रविदर्हति॥" इति।

तथा च 'चित्रया यजेत पशुकामः, कारीर्या यजेत वृष्टिकामः, वाजपेयेन यजेत स्वाराज्यकामः' इत्यादयः सर्वसौख्यसंपत्समृद्धयवाप्तये ईतिभीतिनिरासाय वा, 'श्येनेनाऽभिचरन् यजेते'त्यादयश्च निखिलारातिनिवर्हणायाऽपि चोपलभ्यन्ते वैदिकाः पन्थानः।

महदिदं मोदास्पदं यद् भारतसारभूते पञ्चनदराज्ये तत्राऽपि सारभूते धर्मपूततयाऽन्वर्थनामधेये अमृतसरसि पुरे, अद्य दिग्दर्शितनिःसीममहिम्नो वेदभगवतः विचारप्रचारप्रयोजनं सङ्घटमानमिदं संमेलनम्। सनातनानां वेदानामर्थापनप्रक्रियाऽपि चिरन्तनी। 'त्रिधा बद्धो वृषभो रोरवीति' इति स्वयमाह वेदपुरुषः। त्रिधा इति मन्त्रब्राह्मणकल्पैरित्यर्थः। ततश्च ब्राह्मणकल्पसूत्राद्यनुगतः स्मृतीतिहासपुराणाद्यविरुद्धो वेदार्थ एव वास्तवो वेदार्थः। तस्यैवानुष्ठानेन च संभवति श्रेयः, विपरीतमेव च वैपरीत्येन।

चिरपरम्पराप्राप्तं व्यवस्थापयतु वेदार्थम्, कस्माच्चन कालात् प्रसृतं निराकरोतु कुहकम्। सुप्तप्रायां पुनः प्रबोधयन्तु वेदार्थविचारचातुरीम्। सोऽयं पन्थाः प्रदर्शितः भगवत्पूज्यपादैराद्यशङ्कराचार्यवर्यैश्चतुर्भिः पीठैश्चतुर्दिक्षु चतुराम्नायरूपेण स्थापितैः। अतोऽत्र सर्वैरस्माभिस्तदनुयायिभिः स एव पन्था आदरणीयः। अन्ततश्च तात्त्विकवेदार्थस्य व्यवस्थापनेन पुनर्भारतस्य, समग्रस्य जगतश्च श्रेयःपरम्परां प्रवर्तयतु सम्मेलनमिदमिति चन्द्रमौलीश्वरं भगवन्तं, शारदाञ्च भगवतीं निभृतं समनुग्रहीतुं प्रार्थयामहे। इति शिवम्।





# कुमारसंभवचम्पूः

—गणेश उमाकांत थिटे*

अर्वाचीनसंस्कृतसाहित्येतिहासे (१) सम्यगालोच्यमाने त्विदं प्रतीयते यत् सर्वथा नावीन्यस्य वैविध्यस्य च अभावः। रामायणमहाभारतादिषु प्रसिद्धान्येव कथानकानि स्वीकृत्य प्रसिद्धानां च कवीनामनुकरणं कृत्वा काव्यविस्तरः संजातः। एतादृशेषु अर्वाचीनसंस्कृतकाव्येषु कुमारसंभवचम्पूः इति काव्यस्योपरि अत्र लघुटिप्पणी लिख्यते। कुमारसंभवमिति कालिदासस्य महाकाव्यं रसिकैः विद्वद्भिश्चादृतम् अस्ति लोकप्रियं च वर्तते। तस्मिन् वर्णिताः एव प्रसङ्गाः कुमारसंभवचम्प्वां कथिताः। एकोनविंशतितमस्य क्रिस्तशतकस्य प्रारम्भिकेषु वर्षेषु अस्य रचना संजाता।

तञ्जापुरस्थमहाराजः "श्रीसर्फोजीराजः" (काव्यार्थं सः स्वनाम "शरभोजी" इति परिवर्तयति।) अस्य काव्यस्य रचनां कृतवान्। सर्फोजीमहाराजः तञ्जापुरे ख्रिस्ताब्दात् १८०० तः १८३२ पर्यन्तं शशास। अयं राजा संस्कृतसाहित्येतिहासे प्रसिद्धाः श्रीहर्षभोजदेवादिनृपाः इव राजकार्ये संस्कृतविद्यादिषु च बद्धप्रेमा आसीत्। कुमारसंभवचम्प्वाः प्रस्तावनायां कविः आत्मविषयवर्णनं ददाति। भोसले वंशे (भोसले इति भाषायाम्) तस्य जन्म अभवत्। तस्य च नगरी तञ्जापुरी (तञ्जावूर)

* प्रगतसंस्कृताभ्यासकेन्द्रम्, पुण्यविश्वविद्यालयः, पुण्यपत्तनम्।

इति अमरावती इव (२) आसीत्। तस्यां मालोजीराजस्य (३) वंशे 'तुलजासुतः' सरफोजीराजः कुमारसंभवचम्पू रचयामास।

इदं च काव्यं यथा भोजेन रामायणचम्पूकाव्यं रचितं तथा सरफोजीराजेन रचितम् इति तुलनापि कृतास्ति। अत्र बहवः अलंकाराः वर्तन्ते। संदर्भतः इदं काव्यं शुद्धम् (४) इति कविः कथयति।

सरफोजीमहाराजः आत्मविषये यत्कथयति तत्सत्यमेव। तस्य संस्कृतप्रेम तेन आयोजितेन "सरस्वतीमहल" इति नाम्ना प्रसिद्धेन ग्रन्थालयेन सिद्धं भवति। काशीयात्रासमये तेन यानि यानि हस्तलिखितानि तत्र उपलब्धुं शक्यानि तानि तानि क्रीतानि (५)। तेन तञ्जावरस्थः ग्रन्थालयः विविधप्राचीनग्रन्थैः समृद्धोऽस्ति। सरफोजीराजेन बह्व्यः विद्वत्परिषदः कारिताः। बहूनां पण्डितानाम् आश्रयश्च दत्तः।

सरफोजीमहाराजस्य कृतिचतुष्टयमुलभ्यते। स्मृतिसारसमुच्चयः स्मृतिसंग्रहः मुद्राराक्षसच्छाया, कुमारसंभवचम्पूः च। तत्र च कुमारसंभवचम्पूः विशिष्यते। "गद्यपद्यात्मकं काव्यं चम्पूरित्यभिधीयते"। इत्युक्त्यनुसारं कुमारसंभवचम्प्वां कुमारसंभवस्य सर्वोऽप्यंशः महता संक्षेपेण विविधवृत्तबद्धश्लोकैः गद्यांशेन च समावेशितः। चम्पूरूपे कः हेतुः इत्यस्य उत्तरं कविनैव दत्तं यत् केवल पद्यं हृदये स्थानं न लभते। गद्यं च केवलं मानसस्य रुचिं न पुष्णाति।

---

(१) अर्वाचीनसंस्कृतसाहित्यस्य मुख्य-वैशिष्टचार्थं, मूल्यमापनार्थं च मम लेखः द्रष्टव्यः (नवभारत ऑक्टोबर १९६५)

(२) राज्ञां भोसलवंशवारिधिसुधाधाम्नां यशोजन्मभूः
देवानाममरावतीव नगरी तञ्जापुरी विश्रुता॥
लक्ष्मीनित्यनिवासमन्दिरमहापद्माकृतिर्देवता
ब्रह्माद्यालयपूरितोत्सवसमाजोल्लासका शोभते॥ कु.सं.च. १.१

(३) तत्र श्रीपरमेश्वरार्चनकलाधौरंधरीशोभिनो
मालोजिक्षितिपालमौलिरमणः वंशेऽभवत्पावने।
इक्ष्वाकोरिव सन्ततौ दशरथः षड्दर्शनीसारवित्
प्रख्यातः तुलजेन्द्रभूवलरिपुः साहित्यविद्यानिधिः। कु.सं.च. १.२

(४) तत्पुत्रः शरभोजिवर्मनृपतिः साहित्यसाम्राज्यभूः
भोजो रामकथासुधामचरितं चम्पूप्रबन्धं यथा।

परं तयोः मिश्रणं तु सुधामाध्वीकयोः संयोगवत् संतोषाय (७)। कुमार-संभवे यदुक्तं तदेवात्र चम्प्वां निवद्यते। उदाहरणार्थं दृश्यताम्—



समागते पिनाकिना तव द्वयं वृथा भवेत्
कला च चान्द्रमस्यथ त्वमेप्यशेषकौमुदी।
वपुर्विरुपनेत्रकं न दृश्यते च जन्मभूः
धनं दिगम्बरत्वकृत् सुदुर्लभो वरो ह्यसौ॥ कु.सं.च. ३.२४.

अयं श्लोकः कुमारसंभवस्य द्वयोः श्लोकयोः आधारितः—

(१) द्वयं गतं संप्रति शोचनीयतां समागमप्रार्थनया पिनाकिनः।
कला च सा कान्तिमती कलावतः त्वमस्य लोकस्य च नेत्रकौमुदी॥

(२) वपुर्विरुपाक्षमलक्ष्यजन्मता दिगम्बरत्वेन निवेदितं वसु।
वरेषु यद्बालमृगाक्षि मृग्यते तदस्ति किं व्यस्तमपि त्रिलोचने॥ सं. ५.
कु. ७१–७२

अथवा चम्प्वाम्–

आलोक्यैनं गिरीशं हिमगिरीतनया वेपमानाङ्गयष्टिः।
पादं सोत्क्षेप्तुकामा पथि गिरिरचितस्वोपरोधा नदीव।
नो तस्थौ नो ययौ वा तदनुभवता सोदिता ते तपोभिः
क्रीतो दासोऽहमस्मीत्यथ नियममसावुत्ससर्जाप्तकामा॥ कु.सं.च. ३.२१

अयं श्लोकोऽपि कुमारसंभवस्य द्वयोः श्लोकयोः आधारितः अस्ति।

(१) तं वीक्ष्य वेपथुमती सरसाङ्गयष्टिः
निक्षेपणाय पदमुद्धृतमुद्वहन्ती।

---

सालङ्कारचमत्क्रियारसपदं शुद्धं च संदर्भतः–
संग्रथ्नाति कुमारसंभवमहाचम्पूप्रबन्धोत्तमम्॥ कु.सं.च. १.३

(५) पश्यत—सुब्रह्मण्यशास्त्रिणः कुमारसंभवचम्प्वाः प्रस्तावनाम्।

(६) पश्यत—तत्रैव बालसुब्रह्मण्यस्य प्रस्तावनाम्।

(७) पद्यं हृद्यमपीह गद्यरहितं धत्ते न हृद्यास्पदं
गद्यं पद्यविवर्जितं च भजते नास्वाद्यतां मानसे।
साहित्यं हि तयोर्द्वयोरपि सुधामाध्वीकयोर्योगवत्
सन्तोषं हृदयाम्बुजे वितनुते साहित्यविद्याविदाम्॥ कु.सं.च. १.६

मार्गाचलव्यतिकराकुलितेव सिन्धुः
शैलाधिराजतनया न ययौ न तस्थौ ॥

(२) अद्यप्रभृत्यवनताङ्गि तवास्मि दासः
क्रीतस्तपोभिरिति वादिनि चन्द्रमौलौ।
अह्नाय सा नियमजं क्लममुत्ससर्ज
क्लेशः फलेन हि पुनर्नवतां विधत्ते। कु. सं. च. ५.८५,८६.

यद्यपि चम्पूकाव्ये सामान्यतः गद्यं पद्यं च मिश्रम् अपेक्ष्यते तथाप्यस्मिन् चम्पूकाव्ये पद्यप्राधान्यं, गद्यं त्वल्पम्। गद्ये च बाणस्य शैलीं यथा अन्ये बहवः अनुकुर्वन्ति तथा अत्रापि कविः बाणानुकरणं करोति इति प्रतीयते। उदाहरणार्थमवलोकनीयम्—हिमद्वर्णनम्—

"यत्र च महादेव इव हिमखण्डपाण्डरे....सुरलोक इव सुपर्ववंशाधिष्ठिते... काव्यप्रबन्ध इव नानावर्णधातुविचित्रे.....धृतक्षमेऽपि दुरासदे गङ्गाप्रभवेऽप्यभीष्मे........."

कुमारसंभवचम्प्वां संक्षेपचातुर्यं प्रतीयते। कुमारसंभवे यः कथाभागः सप्तदशसु सर्गेषु कथितः स एव अत्र चम्पूकाव्ये चतुर्भिः लघुभिः आश्वासैः कथितः। मूलकाव्ये यानि प्रदीर्घाणि वर्णनानि, विस्तृताः संवादाः तेषां संक्षेपः अत्र कृतः यथा हिमद्वर्णनम् पार्वत्याः सौन्दर्यवर्णनम्, दैवैः कृता ब्रह्मस्तुतिः, रतिविलापः, पार्वत्याः तपश्चर्या शिवपार्वत्योः विवाहविधिः, बटुना सह संवादः, शिवपार्वत्योः संभोगः, तारकासुरेण सह देवानां युद्धम्, इत्येतेषां वर्णनानि मूलकाव्ये विस्तृतानि वर्तन्ते, अत्र च संक्षिप्तानि।

कुमारसंभवचम्वाः स्वरूपं स्वतन्त्रा कृतिरिति नास्ति इति स्पष्टमेव। कुमारसंभवस्य इदं रूपान्तरमात्रम्। तेन काव्यस्य तस्य किमपि विशिष्टं मूलमापन्नं न क्रियते तथापि कवेः विविधवृत्तप्रभुत्वं, संस्कृतभाषाभिरुचिः काव्यकरणे च उत्साहः इत्याद्यत्र उल्लेखनीयम्। तद्दृष्टया च अवलोकनार्हा कृतिरियम्।





# दिवंगतेभ्यः लालबहादूर-शास्त्रिभ्यः श्रद्धांजलिः

विश्वनाथ केशव छत्रे

(मंदाक्रांता)

१. वज्राघातः खलु निपतितो दारुणो भारते यत्
कृच्छ्रेऽकस्मात् पटुरपहृतो मंत्रिमुख्योऽन्तकेन ।
हा ! निर्यातो जनहितकरो लालबाहादूरशास्त्री
मूर्त्या नूनं लघुरपि गुरुर्योऽवशिष्टः सुकीर्त्या ॥

२. याते स्वर्गं प्रमुखसचिवे त्वादिमेऽर्हद्वृतोऽसौ
स्वं पात्रत्वं प्रकटमकरोत् तत्पदार्थं सुशीघ्रम् ।
यावन्नाब्दद्वयमपि विभो ! शासतोऽस्य व्यतीतं
तावद् हन्त ! स्वपदमनयः, किं नु ते गूढहेतुः ॥

३. देशोन्नत्यै श्रमभविरतं कुर्वतासर्वशक्त्या
स्वल्पे कालेऽप्यलघु विहितं शास्त्रिवर्येण कार्यम् ।
लोकाह्लादो वरमकलुषो दीप्यमानो मुहूर्तं
लोकोद्वेगो न खलु सुचिरं जातु धूमायमानः ॥

४. अंतः पुष्पादपि सुमृदुलो लोकदुःखेन शोचन्
आसीद्देशाक्रमकरिपुहृच्छेदनेऽसौ कठोरः ।
एतल्लोकोत्तरगुणविभामंतरा कोऽपि शास्ता
नैवोद्भायादितरसुगुणैरन्यथा मंडितोऽपि ॥

५. देशे बाह्येऽपि च परिदधद् देश्यवस्त्राणि नित्यं
चिंतां गेहस्य न निशि दिवा जन्मभूमेस्तु कुर्वन् ।
लक्ष्म्याः संगे न च खलु रतिं धारयंस्तु प्रजाया
लभ्यः शास्त्री न पुनरपि भूशांतये यत्नशीलः ॥

६. "शुश्रूषार्थं भवतु निकटं कोऽपि नाप्तोऽन्तकाले
निर्याते मय्यपि न रुदनं कोऽपि शोकात्करोतु" ।
गुंजन्नित्याशयपरमसौ सार्थकाव्यं सदैव
दूरं देशाज् झटिति मरणं प्राप दिष्ट्या यथेष्टम् ॥

७. दारिद्र्यादुन्नततमपदं स श्रमेणाधिरोहन्
सेवावृत्त्या निरलसतया सुष्ठु जानंस्तदार्तिम् ।
दूरीकर्तुं व्रतमविरतं स्वं तदेवानुतिष्ठन्
ईशेच्छायाः स्ववपुरजहात् कर्मयोगीव शांतः ॥

८. खण्डप्रायो जनबहुमताच्छासितो भारतोऽयं
नव्यादर्शो भवितुमवनौ शांतिनीत्योद्यतश्च ।
राष्ट्रद्वंद्वप्रशमनकृते संधिमात्रोऽस्त्युपायः
श्रद्धाया इत्यसकृदमुनाऽवार्यतोग्रं च युद्धम् ॥

९. ताश्कंद्-संधिः प्रथयत इमां भारतोदारनीतिं
देशो रक्षेदयमवतु तं जिह्मपाकोऽपि नूनम् ।
तस्मिंस्तेन स्खलित उदितो भारतोऽयं समर्थो
यूनां प्राणार्पणमसफलं नैव कुर्यात् स नव्यम् ।

१०. (मालिनी) जयतु जयतु शास्त्री नित्यसौजन्यशीलः
जयतु जयतु शास्त्री हिंदुभूपाल'लालः ।'
जयतु जयतु शास्त्री देववाणीप्रपालः
जयतु जयतु शास्त्री शुद्धकीर्त्या चिराय ॥

११. (अनुष्टुप्) छत्रेवंशभवेनायं देववाक् कुसुमांजलिः
श्रद्धया विश्वनाथेन शास्त्रिस्मृत्यै समर्पितः
ग्रामांतरप्रयाणेन कवेः काव्यं विलंबितम् ।

नवख्रिस्ताब्दप्रारंभ एवं शोचनीया भारतपुत्रोत्तम–
निधनपरंपरा ।

अभद्रं ख्रिस्ताब्दं भरतभुव एतत् खलु नवं
महामंत्री शास्त्री हि, तदुदय एव व्यसुरभूत् ।
गतोऽन्येद्युः 'काका' तदनु जनिभूसेवकवरो
द्रुतं नष्टो 'भाभा' ग्रहह ! अणुविज्ञाननिपुणः ॥



★



# भारतीयविद्याविजयः।

रामकृष्ण तुलजाराम व्यास*

ईशावास्योपनिषदि क्रान्तदर्शी कविरुद्घोषयतिः—

अन्धं तमः प्रविशन्ति येऽसंभूतिमुपासते ।
ततो भूय इव ते तमः य उ संभूत्यां रताः ॥ ई. उप. १२

अयमस्याभिप्रायः। ये खल्वाध्यात्मिकविकास एव मानवजीवनस्य चरमं लक्ष्यमिति मन्यमानाः अविदग्धाः अव्यक्तमेवोपासते ते अन्धं तमः प्रविशन्ति । ये च भौतिकविकास एव मानव-जीवनस्य, मानव-प्रवृत्तेश्चान्तिमं लक्ष्यमिति मन्यमानाः मूढाः व्यक्तमेवोपासते ते ततोऽप्यधिकतरं तमः प्रविशन्तीति। दयालुरयं ऋषिः स्वेनाऽऽर्षेण चक्षुषा मानवदृष्टिप्रतिघातं पश्यन्निव, महतोऽस्य परिणामभयान्मानवतामुद्दिधीर्षुरिवैकान्तव्यक्ताव्यक्तोपासनां प्रतिविधत्ते। नव्येतिहासकोविदा अपि राजनीतितत्त्वज्ञाः सर्वथाऽऽर्षमिदं दर्शनमवितथमिति संवदिष्यन्ति। यो मनुष्यः यो वा समाजः चतुर्वर्गसाधनभूतस्य, ब्रह्मनगरभूतस्य देहस्याहाराच्छादनाश्रयरूपायाः न्यूनतमावश्यकतायाः व्यवस्थामपि कर्तुं न प्रभवति न स स्वकीयं गौरवं रक्षितुं पारयति। नाऽप्येतादृशः समाजः राष्ट्ररूपेण स्वकीयाञ्जातीयादर्शान्, स्वकीयाः संस्कारपरम्पराः स्वकीयान्पावनाञ्जीवन-सिद्धान्तान्मूल्यानिच, तांश्च व्यवहारे स्थापयन्तीः संस्थाः, सर्वैरेभिश्च संभूय निष्पादितां, विकासितां च विशिष्टां जीवन-प्रणालीं रक्षितुं प्रभवति न च विश्वरङ्गभूमौ परमेश्वरप्रेरितेऽस्मिन्महानाटके स्वकीयमनन्यथासिद्धं विशिष्ट-

* एम. ए., व्याकरणाचार्य। 

ञ्चाभिनयं साफल्येन सामर्थ्येण च निर्वोढुं वा नार्हति। तदेतदुक्तं ये केवलमसंभूतिमव्यक्तमेवोपासते तेऽन्धं तमः प्रविशन्तीति। येऽपि व्यक्तस्यास्य प्रपञ्चस्याधिष्ठानभूतमव्यक्तमव्ययं कूटस्थं नित्यमचिन्त्यञ्चिद्रूपं, जगन्नियामकत्वेनावस्थितमदृष्टं किमपि वस्तु नास्ति; न वाऽस्मत्स्वरूपभूतत्वात्तत्प्रापणयत्ने कृतादरैरस्माभिर्भाव्यम्, दृष्टवस्तुनः सत्यानुभवस्य च सार्वलौकिकत्वाद्विषयेन्द्रियसम्पर्कजनित प्रत्यक्षसुखस्योपबृंहणकृतादरैः भूत्वा सर्वविधयत्नैः निःसीमतया तस्यैव प्राप्तिर्विधेया, तदप्राप्तौ च युद्धादिकमपि कृत्वाऽन्येभ्य आच्छिद्याऽपि स्वकीयमनसश्छन्दाः पूरणीया एव, तत्रैव बुद्धिसाफल्यमित्यादिमूढग्राहप्रवृत्ताः मनुष्यरूपेण विचरन्तो मृगास्ते ततोऽप्यधिकतरं तमः प्रविशन्तीति सुस्पष्टमुच्चैरुद्घोषयति सदसत्पारदृश्वा ऋषिः। तमेवार्थमनुवदति भगवान् कौटिल्यः चाणक्यनीतिदर्पणे :—

**मांसभक्षैः सुरापानैर्मूर्खैश्चाक्षरवर्जितैः**
**पशुभिः पुरुषाकारैः भाराक्रान्ताऽस्ति मेदिनी ॥** (चा. नी. द. ८,२२)

एतादृशैर्दर्शनशक्तिशून्यैरन्धैरिवेतरे मानवा अपि स्वयमन्धा एव सन्तः नीयमाना अन्धपरम्परान्यायेन सर्वविनाशमहागर्तं प्रत्यवशा इव रभसाऽऽकृष्यन्ते, प्रेक्षावन्त इवाकस्मात्कोऽपि पुरुषोत्तमावतारः भविष्यति, सर्वांश्च मानवान् स एवोद्धरिष्यतीति-वन्ध्यां श्रद्धां बिभ्रति, एवमेव च कर्तव्यविमुखाः भवन्ति। एतादृशे विलक्षणे काले मानवेतिहासस्यादृष्टपूर्वेऽस्मिन्संक्रमणे उपस्थिते, को नाम पन्थाः सर्वेषां मानवानामभ्युदयनिः श्रेयसे इति प्रश्नः हठादाविर्भवति सहृदयानां महतां चेतसि। तस्योत्तरमपि स एवाप्रतिहतचक्षुः ऋषिर्ददातिः—

**संभूतिं च विनाशं च यस्तद्वेदोभयं सह।**
**विनाशेन मृत्युं तीर्त्वा संभूत्याऽमृतमश्नुते ॥**

यः खलु देहात्मसहयोगं यथार्थतो वेत्ति स एव तत्वदर्शी सदसत्पारदृश्वा, स एव च पथभ्रष्टं जगत् सन्मंगलपथे योजयितुं प्रभविष्यति। यथा मानवः द्वाभ्यामेव पद्भ्यां प्रचलति, नैकेन पदा दूरं गन्तुं प्रभवति, तथैव मानवजातिश्चाध्यात्मिकाधिभौतिकविकासन्तुलनेन वास्तविकीं प्रगतिं कर्तुं पारयिष्यतीति सैषा सर्वमानवकल्याण दिग्दर्शिता कविना।

जगत्यद्यत्वे भौतिकवादोऽतिमात्रं प्रवृद्धः सन् शाश्वतान् ऋतसत्यनियमान् समाजधारकान्सनातनान्धर्मनियमान् शिष्टानुशासनान् कुलमर्यादाश्चाविचार्यैव भेत्तुं प्रवृत्तः। सोऽयं भौतिकवादो मानवान्कुत्र नेष्यतीति भयममुं सर्वे सचेतसः जागरूकाः

राजनेतारः हृदि निधाय विश्वशान्त्यर्थं प्रयतन्ते इति नापह्नुतं प्रेक्षावताम्। मानव-महारोगस्यास्य च सिद्धमौषधं ह्यात्मविद्याप्रसार एव। औपनिषदस्य तत्त्वविज्ञानस्य च नवीनविश्वधर्मरूपेणावतारः वैज्ञानिकविचारसंशोधिते मानवचेतसि अनिवार्यं इव प्रतिभाति। औपनिषदमेव तत्वविज्ञानं खलु वैज्ञानिक-विचार-निकष-निघर्षण-सहने समर्थमिति तु पूर्वमेव ब्लावट्स्की, एनी बिसेन्ट, इमर्सन, ह्यूम प्रभृतिभिर्यूरोपीय प्रधानचिन्तकैरपि प्रस्थापितमास्ते। को नु खलु देशोऽस्य सत्यधर्मस्य प्रसारणे क्षमः? इति विचिकित्सायाः समाधानं भगवता मनुना दत्तपूर्वमस्ति। तथा हि –

**एतद्देशप्रसूतस्य सकाशादग्रजन्मनः।**
**स्वं स्वं चरित्रं शिक्षरेन् पृथिव्यां सर्वमानवाः॥**

पृथिव्यां सर्वेऽपि मानवाः स्वं स्वं चरित्रं, स्वं स्वमाचारं, स्वं स्वं धर्मं च एतद्देशप्रसूतस्य सकाशादेव शिक्षिष्यन्त—इत्यपि क्रान्तमेव दर्शनं कालत्रयेऽपि सत्यत्वेन प्रथितमित्यपि धर्मेतिहासविशारदानां नाविज्ञातम्। जगत्यखिले प्रथित-यशोभिः विवेकानन्दैः अमेरिकादेशे प्रोक्तम् "भौतिक-क्षेत्रेषु-गवेषणादिकं, भौतिक-विकास सरणिश्च पश्चिमेभ्यो देशेभ्यः उद्भविष्यति, किन्तु आत्म-विद्या-विजयाभियानं पूर्वेभ्यो देशेभ्यस्तत्राऽपि प्राधान्येन भारतादेव प्राप्स्यते" इति। सुस्पष्टञ्चेदं विधानं न केवलं भविष्यत्कालानुबन्धी, ऋग्वेदसमयादारभ्य सदाचार, सद्धर्मचक्रप्रवर्तनमस्मादेव देशात् संजातमितीश्वरकृतोऽयं समयः। न च संकुचितसंप्रदायप्रचारः धर्मचक्रप्रवर्तनस्यैतादृशस्य लक्ष्यम्। यतोहि "कृण्वन्तो विश्वमार्यम्" इत्येतावानेव ऋषिभिर्दत्तो मन्त्रः। विश्वस्मिन्सर्वेऽपि मानवाः आर्याः भवन्तु, सदाचारनिरताः, सुशिक्षिताः सभ्याः श्रद्धालवश्च भवन्तु, शान्तिप्रियाः तपःस्वाध्यायेश्वरप्रणिहितमनसश्च भवन्विति च मन्त्रार्थः। तदर्थं च सन्निष्ठाः दैवीसम्पदमाश्रिताः धीराः कुशलाश्च-प्रचारकाः अपेक्ष्यन्त एव। चे च भव्यस्य भवितव्यस्य विश्वधर्मस्याभिभावकाः भविष्यन्ति, नवीनस्य वैज्ञानिकस्य मानवधर्मस्य प्रचारकाः भविष्यन्तीति मनसि निधाय, तादृशानामुदारचेतसां प्रभवः भारतीयमिदं विद्याभवनं भवेदिति च भावयित्वा, भागवतमिदं कर्मास्मदभ्यर्हितेन कुलपतिना प्रक्रान्तं सप्तविंशतिवर्षेभ्यः पूर्वमद्यत्वे विश्वस्य सर्वेषु प्रमुखनगरेषु प्राणवत्तत्संस्कारकेन्द्राणि निर्वोढुं प्रभवतीति निश्चितो भारतीयविद्याविजयः इत्योम्।*

---

* डाकोरसन्निकृष्ट भवन्स कॉलेज इत्यत्र समागतानां कुलपतीनां स्वागतावसरे दत्तं प्रवचनम्।



# भगवतः प्रकाशस्य मुहूर्तम्

**श्री अरविन्द**

सन्तीह तावत्क्षणा येषु परमात्मा मनुष्येषु संचरति, ईशस्योच्छ्वासश्चास्माकं सत्तायाः सलिलेषु परिगच्छति। अन्येषु च क्षणेषु स निवर्तते। मनुष्याश्च स्वकीयाहंकारस्य प्राबल्य–दौर्बल्यान्यतरवशात् प्रवर्तन्ते। आद्येषु क्षणेषु स्वल्पोऽप्यायासो महतः परिणामस्य जनको दैवस्य च परिवर्तको भवति, अपरेषु तु महताऽयासेनाऽपि स्वल्पमेव फलं प्राप्यते। किन्त्वेतदपि सत्यं यदपरे क्षणाः पूर्वेषां क्षणानां परिकल्पकाः, परमात्मनो वैपुल्यवृष्टिमवतारयितुं स्वर्गं प्रति प्रस्थितः स्वल्पमात्रो यज्ञधूमश्च।

ईदृशे दिव्ये मुहूर्ते संप्राप्ते यो मानवो राष्ट्रं च निद्रां गते वर्तेते, अथवा तत्स्वागतार्थं दीपोऽप्रज्वालितः सन् श्रोत्रं चादेशं प्रति पिहितं सत् अनुद्यते स्तः, ते दुर्भगे खलु। किन्तु त्रिधा धिक् तान् ये सशक्ता उद्यताश्च सन्तोऽपि शक्तेरपव्ययं कुर्वन्ति मुहूर्तं च दुरुपयुञ्जन्ति। तेषां हि अनपनया हानिर्महती विनष्टिर्वा।

भगवतो मुहूर्ते संप्राप्ते तवान्तरात्मानं निखिलस्ववञ्चना–दम्भ–व्यर्थात्मश्लाघापरित्यागेन विशोधयस्व, येन त्वं स्वात्मनो दर्शनं प्राप्नुयास्तस्यादेशं च श्रृणुयाः। प्रकृतिगता सकलाप्यसत्यनिष्ठा, या एकदा परमात्मनो दृष्टेः संमुखं तव त्राणमासीत्, साऽधुना तव कवचे बृहच्छिद्रा भूत्वा शस्त्रप्रहारमुपनिमन्त्रयति। यद्यपि त्वं तत्क्षणं विजयी भविष्यसि, तथापि प्रहारस्त्वनुपदमेष्यत्येव, त्वां च तव विजयक्षणे एव अधः पातयिष्यति। अतो विशुद्धो भूत्वा सकलं भयं निष्कासय। इदं हि मुहूर्तं प्रायोऽतिभीषणं दावानल-चक्रवात–झंझासदृशं, परमात्मप्रकोपस्य आसवपीडनयन्त्ररूपं च। यस्तु तस्मिन् मुहूर्ते स्वकीयलक्ष्यस्य सत्यरूपे स्थिरं स्थास्यति स एव स्थास्यति। स यदि क्वचित्पतिष्यति पुनरप्युत्थितो भविष्यति। स यदि पवनस्य पक्षयोरारूढो विसर्पमानो द्रक्ष्यति प्रतिनिवर्त्स्यति। अपि च, मा ते कर्णे लौकिकी बुद्धिरतितरान्तिकतः प्रलपतु; इदं हि अनपेक्षितस्य खलु मुहूर्तम्।

अनुवादक :– श्री रजनीकांत मोदी

# 'हे भारत!'

कवीशः रामकैलाशः पाण्डेयः*

स्मर हे भारत! दिनं स्वं गतम्।
जघान दशवदनं ते रामः। ततान भुवि तव कीर्ति श्यामः॥
सफलो बभूव तेऽखिलकामः। नासीत् त्वद्भाग्यस्य विरामः॥
अपि रिपुराष्ट्रं त्वद्गुणे रतम्। स्मर हे भारत! ०॥१॥
अत्राभवत्स भगवान् बुद्धः। यस्माल्लोकोऽभवत्प्रबुद्धः॥
तव धर्मो ववृधे भूत्वेद्धः। त्वञ्चासीरैश्वर्ये वृद्धः॥
सकलं तेऽरिमण्डलं विहतम्। स्मर हे भारत! ०॥२॥
चन्द्रगुप्तबलिना पराजिताः। यवनाः स्वं देशं पलायिताः॥
नैके हूणाः शका आगताः। जिता बभूवुस्तेऽपि समाप्ताः॥
केनापीह न यशस्ते हृतम्। स्मर हे भारत! ०॥३॥
महानशोको मौर्यमहीन्द्रः। असौ कालिदासश्च कवीन्द्रः॥
रम्यो हिमालयोऽपि गिरीन्द्रः। विश्वविश्वकविवरो रवीन्द्रः॥
शंसन्त्येते दिनं तेऽद्भुतम्। स्मर हे भारत! ०॥४॥
बह्व्यो विपदस्ते भुवि पतिताः। नैके भटा महौजसो मृताः॥
जनिं लेभिरे शमदयान्विताः। बहवो वीरा मुदमुपागताः॥
हस! भूयादरिशिरस्ते नतम्। स्मर हे भारत! दिनं स्वं गतम्॥५॥

---

* एम. ए., शास्त्री (भारतशतकप्रणेता) रिसर्चस्कालर प्रयागविश्वविद्यालयः, प्रयागः।

सी. राजगोपालाचारी



# संघटकेऽत्र विश्वभवने

हे भगवन् ! क्षमस्व कृपयास्माकं दुरितानि
संघटकेऽत्र विश्वभवने भयमपि च वैरं
त्यक्तुमुभे परस्य हृदयं प्रथममवगन्तुं
संघटकेऽत्र विश्वभवने नय जनपदानि —संघटकेऽत्र विश्वभवने

युद्धभयानि ते जगृहिरे रणमरणमैच्छन्
संघटकेऽत्र विश्वभवने वरमपि सुदुर्गे
शान्तिपथे वहाम विपदो वयमिह सधैर्यम्
संघटकेऽत्र विश्वभवने विरमतु हि युद्धम् —संघटकेऽत्र विश्वभवने

हृन्निहितं शुभं प्रतिनरं ह्यणुरमितशक्तिः
तं प्रतिचेतयाम सुगतं परमचिरशान्त्यै
भो भगवन् क्षमस्व कृपया शमय दुरितानि
प्रेरय नोऽत्र विश्वभवने भुवि परमशान्त्यै —संघटकेऽत्र विश्वभवने

—अनु. ल. वि. देशपांडे





# अम्बापाली

वि. सुब्रह्मण्यम्*

नाट्यनाटकमिदं पूर्णं अंबापाल्याः
सद्मनि अलंकृतचैत्ये नाट्यते।

(सायंकालः)

युवा :—वसन्तारंभदिने अस्मिन् कामदेवपूजां कर्तुमुद्यताः
सर्वे वयमिच्छामः नाट्यं तव द्रष्टुम्।

अम्बा :—साधु साधु। मदनदेवमुद्दिश्यैव गीतिमेकां गायन्त्यभिनयिष्यामि।

(मलयमारुतो आदितालः)

पल्लवी :—भज मन्मथं मानस, सततं
अनुपल्लवी :—निजरूपरहितं निरवधिसुखदं
चरण :—जितकालकालं श्रृंगारलोलं
धृतपुष्पमालं देवं कृपालुं।

(अलारिप्पु निखल्)

युवा :—नाटयंत्यास्तव नयने इतस्ततः भ्रममाणे कं मृगयतः
अम्बा :—न पश्याम्यस्मिन् संघे मदनमत्तावतंसं देवसेनम्।

---

*प्राध्यापक: नेशनल एकेडमि ऑफ एडमीनिस्ट्रेशन्, मसूरी।

युवा :–(हसन्) क्षम्यतां मे सत्यभाषणं।


गतो देवसेनो नगरान्तस्थं।

वेणुवनं बुद्धदेवस्य धम्मप्रवचनं श्रोतुम्।

अम्बा :–धम्मप्रवचनं श्रोतुं। अहह ! कुत आयाता देवसेनस्येषा धम्मश्रवणेच्छा। अथ किं भिक्षुजीवनमप्याचरिष्यति। (नाटयति)

(नादनामक्रिया। आदितालः)

भिक्षापात्रधरो नतदेही,
भिक्षुर्याचति भिक्षां देहि
भिक्षापूरितकुक्षिं स्पृशति
अक्ष्यामीलनमनिशं कुरुते

(रागः माण्ड)

त्यक्त्वा यौवनसुखमतिमूढः
त्यक्तुमशक्तो कामविरागं,
मुक्तोऽसौ हि मनोभवनाम्नो,
मुक्तो न हि तदकुण्ठितधाम्ना

(रागः कापि)

गत्वा शरणं बुद्धं मूढं
बध्वा गच्छति नयनं गाढं
मत्वा शून्यमिहाण्डसमस्तं
श्रित्वा जीवनमन्धस्येदं।

युवा :–अलं निन्दया। सुलोचनं सुधासमानभाषणं बुद्धदेवं पश्यसि। सति जानसि त्वं कथं देवसेनसमं युवशतं तन्मार्गमाचरतीति।

अम्बा :–साधुभाषितं। गच्छाम्यधुनैव। अधुनैव गच्छामि।

(रात्रौ प्रथमो यामः)

(बुद्धदेवं संवादे जित्वा अम्बा च तस्याः सखी च चैत्यमाविशतः।
सखी विजयहर्षेण उन्मत्ता नाटयति।
अम्बा तु चिंताकुलैव मंचे उपविशन्ती तूष्णीं भवति।)

सखी :– (रागनालिका जम्पतालः)

पल्लवी :–(कुंतलवराली)

जितस्त्वया तथागतो जितस्त्वया जितापरो

अम्बा :–(मेगड) जितेन्दुवक्त्रचारुता जिता कृशानुतेजसा

स्मितोक्ततर्कवचसा जिता न सा जिता न सा ।

चरण :–(हंसध्वनिः)

याति यौवनं धनं याति यातः सत्वरं

यानपूर्वमेव तावनुभोक्तुमुद्यता

सखी :–कथममरैः परिपालिता त्वं जिता भवेः। स्मराम्यहं साधु कथं नगराभरणाभूरिति।

(वृत्तरागमालिका) (नाटयति)

ममांबेति ममांबेति तर्जयन्तः पुनः पुनः

महाक्रोधसमाकृष्टाः मारयन्तः परस्परं,

मोहेनान्धीकृताः सर्वे युवानो नगरे इमे।

अंबलावण्यमत्तास्तु पुरः शान्तिनिभेदकाः।

तस्मान्नागरिकास्सर्वे संगता नगरालये

तथ्यं वैशालिपुर्या हि अन्वेषणपराः सदा-

निंदयन्पितरं तस्याः शोकसंतप्तमानसाः

नेतव्या इह सांबेति शासयन्ति स्म साकुलं।

यदा त्वमाविशो नगरालयं

अमानुष्यमिदं रूपं अमरेष्वपि दुर्लभं

भाषमाणाः पुरानीकाः विस्मयोत्फुल्ललोचनाः

सदैकमानसा भूत्वा शासयन्ति स्म निश्चितं।

शान्तिर्येन भवेदत्र तन्मार्गाचरणं भवेत्

अपराजितलावण्या अमरैः परिपालिता

न कस्यापि भवेत् भार्या न कस्यापि कदाचन

नगराभरणा भूयाद् नन्दितानन्ददायिका।

नागराणां च सर्वेषां हृदि पीठनिवासिनी।

हृत्पीठनिवासिन्येव त्वं (इति भाषमाणा बहिर्गच्छति)

(अम्बापाली वार्तामिकामपि अवदन्ती चिन्ताकृष्टा पर्यङ्कशय्यायां विनिद्रं

अवदन्ती [illegible] अस्मिन् ग्रामे, "याति——सत्वरं" इति पुनः पुनः नेपथ्ये गायति।)



अम्बा :–साधुभाषितं बुद्धभगवता दग्धैवाहं तद्दिदृक्षया, एहि विभो।

(बौली, आदितालः)

पल्लवी :–सत्वरमेहि विभो शान्तिनिधान विभो

अम्बा :–तत्वविचारणधीर विभो।
तथ्यसुभाषणधाम विभो।

चरण :–सत्वगणाधिक देव विभो
शत्रुजनादृतमैत्र्य विभो
सिद्धसर्वार्थं निरर्थं विभो
शीघ्रमेहि विभो। विभो। विभो।
(प्रातःकाले अम्बा बुद्धदेवाय स्वागतं ब्रुवन्ती नाटयति)

अम्बा :–(षण्मुखप्रिया, रूपकतालः)

पल्लवी :–तथागतं इहागतं दयानिधिं तमाश्रये

अम्बा :–सुधासमानभाषणं सुरेन्द्रसन्नतं सदा
शुद्धोदनसुतं बुद्धेति भाषि।

चरण :–शाक्यसिंहनामकं संघधर्मसंस्थापकं
भाग्यहीनमन्दिरपावनकरपदयुगलं
पतितावनधीरं पर्वतगंभीरं
शिथिलीकृतभारं सिद्धार्थमुदारम्।

बुद्धो :–संघमाविश्य संघावतंसा भव
(कल्याणी। आदि)

अम्बा :–बुद्धं शरणं गच्छामि
संघं शरणं गच्छामि
धर्मं शरणं गच्छामि

बुद्धो :–(परसु आदितालः)

पल्लवी :–संघावतंसा भव।

अम्बा :–तुंगस्तनभरानमिते
शृंगारशोभां त्यज।

पल्लवी :—रंगावतंसे [illegible]


श्रृंगस्थदीपप्रभे अभंगधम्मेन प्रज्वालिते।

अम्बा :—(हम्मीरकल्याणी आदि)

पल्लवी :—पूजयामि बुद्धभगवन्तम्।

अम्बा :—पूजनीयप्रपूजितं बुधजनमनोविहरन्तम्।

चरण :—कूजन्तं धम्मकथां भानुशताधिकस्वतेजसं
शासन्तं श्रोतृमनः काशयन्तं शीलकथां
वाचयन्तं मारतमोनाशकरीं वाचं ताम् (पू)

(नेपथ्ये, सुरठी)

देवो बुद्धो महाभागो
देवमानुषशान्तिदः
देवकन्यामिमामंबां
ददौ संघाय सादरम्।



श्री गंगाधरगुरुः

हे वैज्ञानिक यन्त्रदानवपते स्पर्धा विशाला हि ते
गत्वा विष्णुपदं शशांकसदनं जेतुं त्वमाकांक्षसे
नानाकौशलयुक्तयन्त्रनिकरैः सन् शक्तिमान् लीलया
पातालं वनभूधरं जलनिधिं भेत्तुं क्षमो राजसि ॥१॥
सृष्टिध्वंसिमहाभयंकरगुणैरस्त्रैश्चशस्त्रैः सदा
संत्रासं जनमानसे हि जनयन् दुर्द्धर्षणीयो भवन्।
त्वं दुष्टेन्द्रियदानवैः परिवृतो दुर्भावनायन्त्रितो
दर्पाद् रावणवत् परात्मविषये चिन्तां प्रपन्नोऽसि नो ॥२॥
स्वार्थान्धो मदमत्तमानसजनोऽन्येषामनिष्टेच्छुको
भोक्तुं नार्हति शान्तिसौख्यममलं घृण्यं हि तज्जीवनम्।
मैत्रीभावसमुल्लसत् सुहृदयो भूत्वा तु यस्तिष्ठति
पृथ्व्यां मानववत् सुकर्मकुशलो वंद्यः प्रशस्यो हि सः ॥३॥
हिंसाद्वेषमदान्धतां परिहरन् वृण्वन्नहिंसाश्रयं
मैत्री-साम्यसमन्वयं च घटयन् धर्मे मतिं स्थापयन्
नित्यानन्दसुखामृतं सुविमलं भोक्तुञ्च लिप्सां वहन्
सन्मार्गेण गतिं कुरु प्रतिदिनं शान्त्याकरं लप्स्यसे ॥४॥
वाय्वाकाशजलप्रभाकरकलानिध्यादिभिर्भूरियं
संसृष्टा विधिना दयापरतया दत्ता हि मूल्यं विना।
अस्याः कोऽपि पतिर्न हीत्यनुभवन् प्रत्यक्षसत्यं सखे
त्यक्त्वानर्थकरं प्रभुत्वनिकरं शान्तिं भज प्रत्यहम् ॥५॥
भित्वाऽज्ञानमहान्धकाररजनीं मोहाद्, विमुक्तो भवन्
पश्यात्मामृतसागरं सुविमलं सत्यार्कभाभास्वरम्
आत्मैकश्च विराजते त्वयि मयि ह्यन्येषु जीवेष्विह
सर्वत्रैव निरन्तरं भव सखे तस्मादहिंसापरः ॥६॥

* पद्मपुरं, राजबोडासंवरं, संवलनपुरं (उत्कलप्रदेशः)।

# भारवेरर्थगौरवम्

ए. एस्. वेङ्कटनाथन्*

ध्यात्वा साम्बशिवं भक्तया विविनक्ति यथामति।
सुधीर्वेङ्कटनाथोऽत्र भारवेरर्थगौरवम् ॥१॥

इह हि जगतीतले विपश्चिदपश्चिमानां नैतत्तिरोहितं यद्रवेरिव सा भारवेरपि भा विष्वग्व्याप्ता नित्या चेति। स्वनामत एवायं प्रथतेऽन्वर्थं इति तत्काव्याध्ययन-संस्कारसंस्कृतान्तःकारणानां नाव्यक्तम्। अयं खलु प्रथितयशाः सुगृहीतनामा कतमां भूमिं स्वजन्मनालञ्चकारेति निश्चप्रचं वक्तुं न पारयामः। यतस्तदीयजन्मस्थान-सम्बद्धतया न किमपि स्पष्टं प्रमाणमधिगतमद्य यावत्। तत्काव्योपलब्धसामग्र्या-धारतया परमयं दाक्षिणात्यः दक्षिणदेश एव जन्मालभतेति चानुमिमीमहे। परन्तु काव्यीयसामग्र्याधारेणैवायमेतद्देशीय इति कथनं न कथमपि प्रमाणकोटिमाटीकते। स्थूलतः परमिदं सङ्गच्छेत वा। यतस्तत्काव्यस्य बहुकालपर्यन्तं सम्बन्धो दाक्षिणा-त्येष्वेव विपश्चित्स्वासीदिति। अयं च क्रैस्तीयषष्ठशताब्दप्रारम्भ आसीदिति विम-र्शकानां सिद्धान्तः।

अस्य च कवेर्विषये नैका उदन्तकथा उपलभ्यन्ते। एतासु कियदवधिकं सत्यं प्रति-ष्ठितं मिथ्या वेति न शक्यवेद्यम्। एकस्याः कथाया अनुसारेणायं महाभागः सुशीलाश्री-धरयोस्तनयो रसिकायाः पतिरिति विज्ञायते। अयञ्च बाल्य एव स्वमेधाशक्त्या निजजनकमप्यतिशेते स्म। सकलशास्त्रज्ञोऽनुत्तमः कविरित्यप्रथत। समवलोक्य समुदीय-मानां स्थितिं स्वात्मजस्य श्रीधरः "न पुत्रं पण्डितमग्रे कृत्वा स्तुवीत" इति न्यायेनैनं कटु भाषमाण आसीत्। परन्तु पितृहार्दभावनामजानन्नयं भारविस्तं मारयितुं निरचेचीयतै-कस्यां रात्रौ। अशृणोच्च तदात्वे पितृशयनागारतो वार्तालापम्। तन्माता तत्पितरं-कुतो वा भवन्तोऽनुत्तमं पण्डितं भारविं न सुप्रीतमनसा भाषन्ते। न च खल्वनुमोदन्ते। सोऽ-तीवैतदर्थं निर्विण्णः—इत्युवाच। स च द्रुतमेनां प्रत्यभाषत—देवि! न जानासि मदीय-वास्तविकतुष्टिम्। तद्विषये मेऽनन्यसाधारणावभिमानानन्दौ स्तः। को वा तातः समेध-

---

* पण्डितः, संस्कृतविभागः, मैसूर्विश्वविद्यालयः, मैसूर्।

मानं तनयमुद्वीक्ष्य [illegible] ? "[illegible]मित्याभाणकः क्षमायां प्रथते ननु! तत्पुरस्तात्सन्तोषप्रकटनेनाहंकाराविष्टचेताः सः स्वात्मानं महान्तं विज्ञाय कत्थते। समुपस्थितायामस्यां दशायां क्व तदभिवर्धनम् ? अत एवाऽत्मसिद्धमपि तोषम्-प्रकाश्य परोक्षत एव मनोवाक्कायकर्मभिस्तदुन्नतिं कामयमानो वर्त इति।

अथाऽत्मविषये पितुरव्याजासाधारणप्रीतिं विद्यमानामवगत्य पश्चाददतातप्यत। उत्थाय च प्रातरागत्य जनकान्तिकमित्थमप्राक्षीत्। तात! पितृहत्यां भावयतः कीदृशं प्रायश्चित्तं विहितम्? इति। स तु पण्डितस्य स्वान्ते पश्चात्ताप एव महत्प्रायश्चित्तम्। न तस्मादृते किञ्चित्तदर्थमास्ते। मूर्खस्य तु तथाभूतस्य षण्मासावधिकः श्वशुरगृह-निवासः प्रायश्चित्तरूपेण निश्चित इति तमवादीत्। ततो भारविः स्वमेव तद्वृत्तं न्यवेदयत्, प्रतिजज्ञे च षण्मासानतिवाहयितुं श्वशुरगृहे। तत्रचास्य पञ्चषदिनानि वैभवेनैव समतिक्रान्तानि। उपरिष्टाच्चैनं पशुचारणकर्मणि न्ययोजयन्। स तु विपिन एव तांश्चारयन्नेकस्य वृक्षस्याधस्तादुपविश्य श्लोकान् विरचयितुमारेभे। एव-मन्वहमुपनिबध्यमाना एव श्लोकाः महाकाव्यरूपेण पर्यवर्तन्त। तदेव किरातार्जुनीय-मिति प्रसिद्धं काव्यम्।

एकदाऽस्य सहधर्मिणी स्वनाथसमीपमागत्यैषीदर्थम्। तदात्वे स कञ्चन श्लोकं संदाय न्यासरूपेण निधायैनं यथेच्छं धनमवाप्नुहीत्यादिशत्। सा तु वर्धमाननामकस्य वणिक्श्रेष्ठिनो गृहमगात्। तत्र तस्य स्त्रियः सविधे एनमवस्थाप्य धनमगृह्णात्। तदा वर्धमानस्तु वाणिज्यार्थं देशान्तरं गत आसीत्। तद्गमनसमये तत्स्त्री दौहृदलक्षणा-ऽवर्तत। व्यतीतेषु षोडशवर्षेषु स स्वनगरं प्रत्यार्तत। ततो निजवसतिमासाद्यैकस्मि-न्नेव शयनीये स्वपत्न्या सह शयानं कञ्चन पुमांसमुद्वीक्ष्य चोकुप्यमानः करवालमावर-णादाकृष्योभौ यावता निहन्तुमुदयुङ्क्त तावदैव मञ्चकोणस्थिते लोहमये कण्टके नियोजितं श्लोकपत्रं कृपाणस्पर्शादधस्तादपतत्। तस्य च वर्धमानस्य दृष्टिस्तदुपरिष्टा-त्पपात। आदाय चोदजीघटत्तत्। अद्राक्षीच्च तत्रत्यं श्लोकम्। स खलुः—

"सहसा विदधीत न क्रियामविवेकः परमापदां पदम्।
वृणुते हि विमृश्यकारिणं गुणलुब्धाः स्वयमेव सम्पदः" ॥

——इत्यासीत्। ततस्तदीयस्सर्वोऽपि मन्युः स्वयमेवोपसंजहार। ततश्च स्वस्थः सह निद्रान्तीं स्वपत्नीमजागरयत्। सातु प्रजागर्य पुरस्तात् तिष्ठन्तं पुरुषं स्वपतिरिति व्यज्ञासीत्। अथ चात्मजं स्वपन्तं [illegible]त्। अथ तं पुत्र! निजजनकमभिवन्द-

त्वेति अवोचत्। ततो वर्धमानो मोहं भ्रान्तिञ्च विहाय वास्तविकीं स्थितिमलब्ध। ततः स्वपत्नीतः श्लोकप्राप्त्युदन्तमवबुध्य तस्मै भारविकवये यथाकामं धनं प्राददात् इति।

परन्तु नास्माकमेतस्यामप्रामाण्यपरिकल्पने वा प्रामाण्यपरिकल्पने वाऽऽग्रहाभिनिवेशौ। वयं हि प्रावर्तामहि भारवेरर्थगौरवपदार्थनिरूपणे। एवञ्च यदा तत्कृतिः परिशीलिता भवति तदैव तत्कर्तुरुत्कर्षापकर्षौ सिध्यतस्तदविनाभावितयैव कार्यं निदानाद्धि गुणानधीते ननु!

जगदिदं सर्वं शब्दस्वरूपमेव वरीवर्ति। तेन विना न किञ्चिदवशिष्यते। शब्दज्योतिषोऽभावे कृत्स्नमिदमन्धं तमो जायेत जगत्। यतः –

"न सोऽस्ति प्रत्ययो लोके यश्शब्दानुगमादृते।
अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते॥"
इदमन्धं तमः कृत्स्नं जायेत भुवनत्रयम्।
यदि शब्दाह्वयं ज्योतिरासंसारं न दीप्यते॥"

—इत्यभियुक्तानामुक्तिर्व्यक्ता। वाचकमनुसरति वाच्यं, वाच्यञ्च वाचकमिति द्वौ पक्षौ वर्तेते। यदाहुः—

"लौकिकानां हि साधूनामर्थं वागनुवर्तते।
ऋषीणां पुनराद्यानां वाचमर्थोऽनुधावति॥" इति।
कविर्हि द्वौ पक्षावपि यथावसरं यथाप्रकरणञ्च समादत्ते।
कविकर्म हि काव्यम्। स चर्षिरेव स्यात्, नानृषिः। दर्शनादेवर्षिजायते।
"नानृषिः कुरुते काव्यं ऋषिश्च किल दर्शनात्।
दर्शनाद्वर्णनाच्चैव रूढा लोके कविश्रुतिः॥" इति सिद्धान्तात्।

अर्थगौरवशब्दार्थविवेचनादर्वाक् शब्दार्थयोः किञ्चिदिव स्वरूपमुपवर्णनीयम् अन्यथा अर्थनिष्ठं गौरवं न प्रतिपत्तुं शक्यते। वाक् च परा-पश्यन्ती-मध्यमा-वैखरीचेत्यवस्थाभेदेन चतुर्धा वरीवर्ति। इत्थञ्च परातो निस्सरन्ती वाक् प्रकटां वैखरीं दशामवाप्य स्वमूलावस्थाधर्मानुरोधेनार्थं प्रकटय्यान्ते तत्रैव विश्रान्तिमेति। तदैव तस्या ऐकान्तिकता अर्थवत्त्वञ्च। सम्बन्धश्चानयोरभिव्यङ्ग्याभिव्यञ्जकभावः, वाच्यवाचकभावः, अभिधेयाभिधायकभावः, संज्ञासंज्ञिभावः – इति नाना विद्यते। तत्राद्यस्तिसृष्ववस्थासु विद्यमानाया वाण्याः। अवशिष्टा वैखर्या इति विवेकः।

सम्बन्धस्य सम्बन्धिद्वयसापेक्षत्वेन शब्दार्थौ समवत्स्थिनौ नित्यौ समाश्रित्य सत्वेन नित्यत्वमेव। नित्यो हि शब्द इत्यनुशास्ति भगवती श्रुतिः "वाचा विरूपनित्यया" इति। जैमिनिरपि :– "औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धः तस्य ज्ञानमुपदेशोऽव्यतिरेकश्चार्थेऽनुपलब्धे तत्प्रमाणं बादरायणस्यानपेक्षितत्वात्" इत्याचष्टे तन्नित्यत्वम्। शब्दार्थावनित्याविति दर्शनकाराः केचन परिब्रुवते। तत्रायं विवेको यन्नित्य इत्यस्य नाशाप्रतियोगी, अनित्य इत्यस्य तत्प्रतियोगीत्यर्थः सर्वसम्मतः। नाशो नामादर्शनं "नश-अदर्शने" इति धात्वर्थात्। एवञ्च शब्दप्रवाहस्य विसृत्वरत्वेन यावदस्माकं तत्सम्बन्धस्तावत्तदभिधेयभानं क्वचित्। यावन्न, तावदभानम्। किञ्च यदा वैखरी पश्यन्त्याद्यवस्थायां विलयमधिगच्छन्त्यस्माकं स्थूलेन्द्रियाणामविषया भवति तदा तस्या अदर्शनावस्था इति नाशपदेन व्यवहारः। अदर्शनं चात्र मूलावस्थाऽवाप्तिरेव। तच्च मूलं नास्माभिरवपत्तु शक्यम्। अत्रेत्थमुपदिशति श्रुतिः ––

"चत्वारि वाक्परिमिता पदानि। तानि विदुर्ब्राह्मणा ये मनीषिणः।
गुहा त्रीणि निहिता नेङ्गयन्ति। तुरीयं वाचो मनुष्या वदन्ति॥" इति॥

साम्प्रतमर्थगौरवशब्दार्थौ विविञ्च्म। अर्थशब्दस्य "अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु" इति कोशात् नानाऽर्थाः सन्ति। प्रकृते प्रयोजनार्थः परिगृह्यते। प्रकृष्टं योजनं प्रयोजनम्। तच्च वास्तविकतारूपम्। ततश्च वस्तुनो यद्वास्तविकं रूपं तद्बोधनमेवार्थस्य मुख्यं कृत्यम्। ततश्चैतादृशपरिज्ञानं सुकुमारमतीनां, मन्दमतीनां च काव्यादेव भवति। शब्दस्त्वर्थस्य कवचरूपेणावस्थाय तद्वस्तुस्थितिप्रत्ययमुपजनयति। तेन च कामधुग्भवति। तथा च श्रुतिः––

'एकश्शब्दः सम्यग् ज्ञातः सुष्ठु प्रयुक्तः शास्त्रान्वितः स्वर्गे लोके कामधुग्भवति" इति।

गौरवशब्दस्य गुरोर्भावः गौरवमिति व्युत्पत्त्या निगूढार्थप्रकाशनमुद्रयाऽनुस्यूततयाऽनुगम्यमानानन्ततामसपरम्पराविनाशकमित्यर्थः प्रतीयते। एवञ्चार्थगौरवमित्यस्य वस्तुनः स्वस्वरूपविषयकज्ञानजननमुखेन समस्ततमोनिवारणपुरस्सरं प्रकाशरूपविवेकख्यातिजननमिति निष्कृष्टार्थः कथितो भवति। एतादृशस्थितिरनुत्तमात्काव्यादस्माज्जायत इत्यत्र न संशयकला।

अयञ्च कविरर्थगौरवप्रकटीचिकीर्षयैव बाहुल्येनार्थान्तरन्यासानेव प्रत्यगृह्णात्। अर्थान्तराणां––सूक्ष्माणां विषयाणां, न्यासः– प्रत्ययजननमिति व्युत्पत्त्या तेषामर्थगौरवप्रतिपत्त्याधायकत्वं अवसेयम्।

दिङ्मात्रमत्रोदाह्रियते :—

क्रियासु युक्तैः नृप चारचक्षुषो न वञ्चनीयाः प्रभवोऽनुजीविभिः।
अतोऽर्हसि क्षन्तुमसाधु साधु वा हितं मनोहारि च दुर्लभं वचः ॥

अत्र– दुर्योधनराज्यपालनस्थितिविज्ञानाय धर्मराजेन नियुक्तोऽनुजीवी स्वस्वामिनमेवमाह यद्भृत्याः सर्वदा स्वस्वामिनः प्रतारयेयुर्न कथमपीति निसर्गनियमानुरोधेनाप्रियमपि वचनं व्याहरेयुरेव। हितं – श्रेयः, मनोहारि– प्रेयः, इत्थञ्च श्रेयो हि सर्वातिशायि, तदनुप्रेयस्सत्ताऽवस्थितिः। अत एव श्रवणोत्तरकाले उद्वेजकमपि वचनं श्रेयोमुखं चेद्वदेदेव। अत एव चात्र भृत्यः वास्तविकीं स्थितिमुदीरयितुं कल्पते। इन्द्रियात्मोभयैषणासम्पूरकस्य वचनस्य दुर्लभत्वं ख्यापयति कविः। यस्यैतदुभयं तस्यैव जीवनं सुन्दरं पूर्णञ्चेति वावद्यन्ते तत्त्वविद इति भावमववर्णत्।

"समुन्नयन् भूतिमनार्यसङ्गमाद्वरं विरोधोऽपि समं महात्मभिः"

अत्र– समीहमानो जगतीं नीत्या जेतुं सुयोधनः स्वार्थी सन्नपि महात्मभिरेवानार्यसम्बन्धाद्वैरमकामयत। आर्याः– इन्द्रियातीतसूक्ष्मतत्त्वविषयकज्ञानवन्तः, अनार्याः— एतद्विभिन्नाः संस्कारमात्ररहिताश्च। तेषां हि समवायो मानवस्य समग्रमपि जीवनं समूलमुच्छिनत्ति। आर्यैर्महात्मभिर्विरोधोऽपि सार्वकालिको न कथमपि तदुपहन्ति। किं बहुना, अन्ततः कापथगामिनि पुरुषे गुप्तरूपेण सत्संस्कारमुपजनयन् तदीयजीवनं यथाधिकारि विपरिवर्तयतीत्यत्र न मनागपि संशयः। अत एव दुर्योधनो जानन्वाऽजानन्नपि वा महात्मनः आर्यानेव व्यरौत्सीदिति तत्त्वं प्राकाशिष्ट।

"सहसा विदधीत न क्रियामविवेकः परमापदां पदम्।
वृणुते हि विमृश्यकारिणं गुणलुब्धाः स्वयमेव सम्पदः ॥"

अत्र–तत्तत्पदार्थ - स्थूल - मध्य-सूक्ष्मतत्त्वविभागविषयकज्ञानाभावरूपोऽविवेको विपदोऽनुबध्नातीति सदा विवेकिना भाव्यम्। अयञ्च विवेकः सत्येव सत्संस्कारे स्वसत्तामाविष्करोतीति विज्ञानिनः सङ्गिरन्ते। ततश्च गुणलुब्धत्वावस्था सहजसिद्धा। गुणानां—तत्तद्वस्तुसमवेतधर्माणां उपादित्सया परं यः प्रयतते स एवोत्तमं पदमधितिष्ठति। एवञ्चाविवेक आपत्पदमिति निरूपयन् कविरविवेको बन्धहेतुः, विवेको हि निरुक्तज्ञानरूपो मुक्तिहेतुरिति दार्शनिकसिद्धान्तं प्रादीदृशत्।

"संतां हि वाणी गुणमेव भाषते ॥"

अत्र—लोके सन्तः—साक्षात्कृतपरब्रह्मतत्त्वाः, परिपन्थिनमपि न द्विषन्ति। ते हि समदर्शिनः मह्यां महीयन्ते। अत एव सर्वमपि प्रीणन्ति। अरिरपि चेतनः खलु। स तु सद्वृत्तः शुद्ध-बुद्ध-मुक्तस्वभावश्चापि रजस्तमोन्यक्कृतसत्त्वो विविधतया कर्म कुरुते। एवञ्च प्राकृतान् धर्मानविगणय्य साधवश्चेतनधर्ममात्रजिघृक्षव आचक्षते गुणमेव। न विगुणम्। गुणशब्दोऽत्र चेतनसहजसत्तां बोधयतीति कविर्भावमभिव्यनक्।

"प्रसेदिवांसं न तमाप कोपः कुतः परस्मिन् पुरुषे विकारः।
आकारवैषम्यमिदञ्च भेजे दुर्लक्ष्यचिह्ना महतां हि वृत्तिः॥"

अत्र— परः खलु पुरुषः विकारात्मकान् धर्मान् कदापि न भजते। स हि "सोऽकामयत। बहुस्यां प्रजायेयेति" इति यदा स्वस्य बहुभवनं कामयते तदाऽऽदिशक्तिरूपामात्ममायाऽभिन्नां प्रकृतिं नियोजयति सृष्टिकार्यार्थम्। सा चाग्रे सरन्ती विविधमाचेष्टते। एवञ्च परमात्मा विकारधर्मवत्प्रकृतिसमासक्तोऽपि न विकुरुते परन्तु स्वसङ्कल्पवशान्नानारूपाणि बिभर्ति। तत्तादृशस्य महात्मनः स्थितिर्न बाह्येन्द्रियगोचरा ननु! तस्य विविधभवनमपि जगत्कल्याणकारकं खलु! ततश्च स विभिन्नस्वरूपमुपादाय भक्तमनस्स्थैर्यं कियदित्यवलोक्य तदानुगुण्येन तस्मै फलं वितरति। अत एव च किराताधिपः परमशिवोऽर्जुनाय तपस्यते भक्ताय धनुरुपपदं वेदमभ्यादिदेश। इत्थञ्च यः खलु विपत्सु घोरास्वघोरासु च स्वचित्तमचञ्चलं स्थापयति स एवानुत्तममप्राकृतं च फलमश्नुत इत्यभिप्रायो विस्पष्टः॥



पुरोहितस्य गृहसंमुखमेव कश्चिद् रासभो ममार। अतः स ब्राह्मणो नगरपालिकां गत्वा तत्रासीनं कमप्यधिकृतपुरुषं तद्वृत्तान्तं निवेदयामास। अधिकृतपुरुषः स्मितं कुर्वाणस्तं प्रत्युवाच, "भूदेव, मृत्यूत्तरकालीनोऽन्त्येष्टिसंस्कारस्तु भवता एव करणीयः" इति।

"बाढम्। किन्तु मृतस्य स्वजनेभ्यस्तु मृत्युवृत्तान्तो प्रथममेव निवेदितव्यः" इति।

# सत्सङ्गविजयः (तृतीयोऽङ्कः)

(ततः प्रविशति विद्या।)

(प्रविश्य। सविषादम्।)

विद्या :—अये दुर्जनानां संपर्कोऽपि दुःखावहः। यतः।

समुपेत्य मषीभवनं को वा लोके न याति मालिन्यम्।
दुर्जनसंसर्गवशान्न जायते कस्य मानसं कलुषम्॥

भवतु। तथापि स्वामिपरतन्त्राणामस्माकं को वा एष विचारः। यतः।

शृण्वद्भिर्बधिरायितैरपि तथा पश्यद्भिरन्धैर्यथा
गच्छद्भिः परमत्र पंगुभिरिव स्थेयं प्रभोः सन्निधौ।
आज्ञापालनखड्गधारवदनुष्ठेयं न नम्रेतरै-
र्भाव्यंनित्यमयत्नतो न सुलभा या राजसेवा क्षितौ॥

अपि च।

कृते कार्ये योग्ये प्रवदति विभोर्भाग्यवशत-
स्तथायोग्ये दोषं भजति ननु भृत्यस्सुनिपुणः।
तदेतद्विज्ञेयं विपुलधिषणैः सेवनपरै-
र्विधेयं सत्कार्यं जगति किमतोऽस्त्यत्र हि परम्॥

तद्भवतु प्रस्तुतविधानाय कमपि सहायमाश्रित्य गच्छामि यदि पुत्र्या समागमश्चेत्तदलं सहायान्तरेण।

(नेपथ्ये।)

मातर्मातः क्व गतासि। विना त्वां मम न धन्यं जीवनम्।

विद्या :—(सानन्दम्।) अये वत्से इतस्तावत्।

(ततः प्रविशति प्रतिष्ठा।)

प्रतिष्ठा :—मातरेष साष्टाङ्गप्रणामः पुत्र्याः प्रतिष्ठायाः।

(सा तथा करोति।)

विद्या :—वत्से स्मरणमात्रेणागतासि। यतः स्वर्गमिवायं सज्जमिव मन्ये।

(इत्युत्थाप्य परिष्वजति। )

प्रतिष्ठा :—अम्ब किं तत्।

विद्या:—अद्य खल्वाहूय स्वामिनाऽऽज्ञप्तास्मि गच्छ तावद् दुः संगोपजातव्यव-सायावलोकनायेति।

प्रतिष्ठा :—अम्ब तर्ह्यहमपि त्वया सार्धमागच्छामि। यतः।

विना विद्यां प्रतिष्ठायाः जीवनं हि विडंबनम्।
यथा नेत्रविहीनं स्वं गात्रमत्र त्रपावहम्।।

विद्या :—वत्से तर्हि गच्छावः। (इति कतिचित्पदानि गत्वा। )

प्रतिष्ठा :—(पुरतोऽवलोक्य। ) अम्ब पश्य। सम्प्राप्तोऽयं— सुरम्यदेशः। योऽसौ विविधजम्वाम्रताल—तमाल कपित्थबदरमधुकक्षीरिण्यादि फलप्रकरसंकीर्णसमृद्ध-सलिल—सकलधान्यसंचयप्रचयप्रपुष्टचातुर्वर्ण्य-जनाकीर्णनवयौवनगर्व—खर्वीकृताखंडलमंडलयौवनमत्तकामिनी कटा-क्षाक्षेपक्षपितधैर्ययुव—जनो लोचनगोचरः।

विद्या :—वत्से विलोकयावस्तावदेतद्देशीयधर्मचर्याम्। (विद्याप्रतिष्ठे तथा-कुरुतः) अये विलोकितः सर्वोऽप्ययं देशः। परमत्रत्यसुजनानामपि शेमुषीं विचारविधुरत्वमलंकरोति। किञ्च।

शयमेकमिमे प्रसार्य वित्तग्रहणेऽन्येन करेण तद्विरागम्।
पुरतः परिदर्शयन्ति धूर्ताः विहरन्ते कपटाशयाः किलामी ।। किञ्च।
विविधाभिरुपायवागुराभिर्ननु बध्नन्त्यविचारिणश्चमूरून्।
अवशं स्ववशे विधाय तेषां प्रतिसंवत्सरमाहरन्ति वित्तम्।।

प्रतिष्ठा :—अम्ब एवमपरिमितपाखण्डपरिपीडितममुं विहाय गच्छा—वस्तावदन्यदेशं प्रति।

विद्या :—तथा भवतु।

(उभे परिक्रामतः।)

प्रतिष्ठा :—मातः समुपागतोयमन्यदेशः।

विद्या :—(विलोक्य। ) अये त्वत्परिचित एवायं देशः।

उपवर्णय तावदत्रत्यवृत्तान्तम्।

प्रतिष्ठा :—शृणु तावन्मातः।

कलौ काञ्चिल्लब्ध्वा झटिति मयि सक्ताः प्रतिदिनं
प्रलब्धं यद्वित्तं तदिह गणिकासात्कृतमलम्।
बहिः स्वच्छा नित्यं मनसि मलिनाः साहसधुरं
समुद्धर्तुं कर्तुं कपटनिचयं केऽपि बलिनः॥

विद्या :–वत्से हेत्वाभास इव सव्यभिचारोऽत्रत्य-जनो नास्मत्साध्यसिध्यनुकूल इति। गच्छावस्तावदितरत्र।

(परिक्रामतः।) (अग्रे विलोक्य।)

प्रतिष्ठा :–(सानन्दम्।) अम्ब पश्य तावद्रत्नाकरतटनिकट–प्राकारान्तर्गतसौधसहस्रसंशोभितमगणितार्वरथनिध्वानविजितार्णवनिध्वानमनेकतरणिकमप्येकतरणिप्रभाप्रकाशितमतुलव्यापारविशंकटमपि सतुलव्यापारमपरलंकामिव महत्पुरम्।

विद्या :–वत्से विलोकयावस्तावदत्रत्यजनतावृत्तान्तम्।

प्रतिष्ठा :–अम्ब अत्र तु परं पाखण्डपाण्डित्यं श्रूयते।

विद्या :–विलोकयावस्तावत्कंचित्प्रसिद्धपाखण्डपण्डितम्।

(परिक्रामतः।) (पुरोऽवलोक्य।)

विद्या :–अये अयं कश्चिच्छ्रेष्टिजनसमावृत उच्चासनाधिरुढो वनितानिचयसंसेवितः प्रकटयति पाटवम्। तदुपसर्पावः।

(उपसृत्य।) नमो भवते।

पाखण्डपण्डित :–अनन्तपतिका भव।

विद्या :–भगवन्भवतां केषु ग्रन्थेष्वभ्यासः।

पाखण्डपण्डितः –(विकलो भूत्वा)

सारस्वतं श्रुतिपथं न कदापि नीतं
काव्यं न कोमलपदावलिदृक्समक्षम्।
पंडासु मूर्खबहुलेषु जनेषु दंभा–
त्पाखण्डिकत्वममलं प्रकटीकरोमि॥

विद्या :–कश्चिद्विद्वानागतश्चेत्।

विकलपाखण्डपण्डित :–

गीर्वाणानां गुरुर्वा फणिपतिरथवा जैमिनिर्गौतमो वा
नानाशास्त्रैकमूला यदि मम सविधं संस्थिताश्चेन्न शङ्के।

को वा विद्वान्वराकः प्रखरमुखर[illegible]पूरमध्ये
मग्नान् शब्दान्विदित्वा सदसदिति वदेद्धाष्टर्चमेवं मदीयम् ।

विद्या :–तथापि भवतां विदुषां च योग्यतायां तौल्यं किम् ।

विक्ल :–नह्यस्मद्योग्यतायामाधिक्यम् । यतः ।

अस्मिन् श्रैष्ठिकमूढवर्गनिचये ख्याता वयं पण्डिताः
पंडाभिः प्रकटीकृताश्च सुतरां गीतप्रबन्धादिभिः ।
अस्त्येका विधवा मदीयगृहिणी तस्याः प्रभावादहं
यानेनापि विना स्वकीयभवनान्नालोकयेऽन्यद्गृहम् ॥

विद्या :–तथापि विद्याजन्यसुखानुभवस्य भवत्सुखानुभवस्य सादृश्यं वा ।

विक्लः :–अये आधिक्यमेवास्मत्सुखसाक्षात्कारस्य । यतः ।

पीनोत्तुंगकुचाः शिरीषमृदुलाः पूर्णेन्दुबिंबानना
वामा नूतन–यौवना मृगदृशः स्वप्नेऽपि विद्वज्जनैः ।
नो दृष्टाः खलु पाणिपद्मयुगले तासां स्थिते राजते
पात्रे स्वादु-सुशर्करायुतपयः पेपीयतेऽहर्निशम् ॥

(विद्याप्रतिष्ठे सहस्ततालं विहस्य ।)

विद्या :–वत्से सत्वरं हेयमेतत्पुरम् । यतः ।

यत्र काचमणयः समास्तथा हीनवर्णपरिभूतसज्जनः ।
मूर्खपंडितविवेकशून्यता तत्र न क्षणमपि स्थितिः शुभा ॥

(परिक्रम्य)

विद्या :–अये अशेषदेशवृत्तान्तो विदितप्रायो यतस्तत्रैकदेशे दुराग्रहेण निवास उपक्लृप्तः । अन्यदेशवृत्तान्तोऽपि कुत्रचित् व्यभिचारः कुत्रचिद्दंभः कुत्रचिदविवेक इति तत्तद्देशीयजनता–समागमेन ज्ञात इति स्वामिने निवेदयावः ।

प्रतिष्ठा :–यथाज्ञा अम्बायाः ।

(नाट्येन उभे निष्क्रांते ।)

इति सत्सङ्गविजयनाम्नि नाटके तृतीयोऽङ्कः समाप्तः ॥





# सत्सङ्ग-विजयः ।

## चतुर्थोऽङ्कः ।

(ततः प्रविशति प्रामाणिकः)

**प्रामाणिक :**—(विमृश्य ।)

आस्तिक्यमस्तेयमहिंसकत्वमाप्तत्वमेते हि मनुष्यधर्माः ।
सत्कीर्तिमत्त्वं च कृतज्ञता वा षड्भिर्विहीनो नृपशुः प्रदिष्टः ॥
आदिष्टोऽस्मि प्रभुणा दुर्विनयमाचरतां शिक्षणार्थम् ।
(नेपथ्ये । साधु अमात्यवर साधु ।)

**प्रामाणिक :**—(आत्मगतम् ।) अये मत्प्रियसुहृदः सत्यस्येव वचनं श्रवणगोचरमिदम् ।
भवतु । पुनर्भणामि ।
(आस्तिक्यमित्यादि पठति ।)
(नेपथ्ये । सुदिनं सुदिनम् ।)

**प्रामाणिक :**—सुदिनमित्यनेन प्रसंगान्तरमुपस्थितम् । मत्प्रयाणावसर एव देवेनादिष्टम् । यदि कथमपि न संधिश्चेत्सुदिनमवलोक्य रणांगणावतरणायोद्युक्तेन भाव्यमिति ।
(प्रविशति सत्यम् ।)

**सत्यम् :**- (आकाशे दत्तदृष्टिः ।) अरे किं ब्रूषे संधिः । संधिस्तु सकलब्रह्मांडप्रलय-प्रवर्तकमहासाहससहस्रसंछिन्नकोमलकलेवरनिर्गतशोणितशोणायमानसमरच-त्वरचलत्खड्गधारया भविष्यति ।

**प्रामाणिक :**—वत्स मर्षय मर्षय ।

सत्यम् :—आर्य क्रोधावेशेन विस्मृतं मया । किं तत् ।

प्रामाणिक :—वत्स इत्थं देवेन संधिकार्येण चिंतितम् ।

गुडेन येषां मरणं सुसाध्यं विषप्रयोगैः किमु तेऽनुवध्याः ।
तथैव संधौ विहितेऽत्र वश्याः यदा भवयुः प्रधनेन किं तत् ॥

सत्यम् :—कोऽसौ देवः ।

प्रामाणिक :—वत्स देवमपि न जानासि ।

सत्यम् :—आर्य मया दुःसङ्गभृत्यवचनमवज्ञातम् । परमिदानीमवगतम् । आर्य किं देवो दुःसङ्गेन संधिं विधास्यति । एवं तर्हि देवस्यापि यशोहानिरचिराद्भविष्यति ।

प्रामाणिक :—वत्स देवेनेत्थं राजनीतिश्चिंतिता ।

सत्यम् :—का वात्र राजनीतिः । प्रत्युत अनीतिरेवेयम् । यतः ।

भासांनिधिर्न तु कदाचिदुपैति संधिं गाढांधकारहतकेन तथात्र देवः ।
संधिं विधास्यति तमस्सदृशेन भास्वान्नीतिः कथंकथमहो न भवेदपूर्वा ॥

(विहस्य ।) आर्य तर्हि व्यभिचारादिष्वपि देवस्य प्रेमप्रसरो भविष्यतीति महाननर्थापातः । यतः ।

आजन्मसंचितानां भाव्यानामपि यशस्सुतूलानाम् ।
प्रज्वालनपटुरेष व्यभिचारो गद्यते स्फुलिंगस्सः ॥
यशसामभिचार एव नूनं व्यभिचारः किमतः परं ब्रवीमि ।
गुरुदारविटः कलाधिनाथस्सकलंकां विकलां कलां दधाति ॥

(विचिन्त्य ।) आर्य तर्ह्यनृतेन किमपराद्धम् । तदपि देवः संभावयिष्यति । यद्येवं चेदहं गृह्णामि चतुर्थाश्रमम् ।

प्रामाणिक :—वत्स मैवं मैवम् । देवेनेत्थमाज्ञप्तम् । शिक्षामुखेनैव यदि तेन दुःस्वभावो न परित्यक्तश्चेत्प्रधनेनैव भाव्यम् ।

सत्यम् :—शांतं पापं शांतं पापम् ।

(विमृश्य ।) आर्य शिक्षासहस्रैरपि दुराशयैः किं मुच्यते निसर्गः । यतः ।

माक्षिकैर्मधुरशर्करान्वितैः किं पयोभिरपि नन्वहर्निशम् ।
सिक्त एष विजहाति काटवं पारिभद्रतरुरल्पबुद्धिभिः ॥ अपि च ।
मृगमदैर्घुसृणैर्मलयोद्भवैरपि सुकंदक एव सुभावितः ।
न विजहाति निजं ननु दुर्गुणं तदिह किं विफलं बत शिक्षणम् ॥

प्रत्युत मूढानां [illegible] संपर्कवशाद्भवस्यापि दुस्स्वभावप्रसरः प्रतिभामलं कुर्यादिति शङ्कते मानसं मे।

प्रामाणिक :—वत्स मैवं शक्यम्। यतः।

स्पर्शस्पर्शवशेन लोहममलं संजायते काञ्चनं
स्पर्शः सद्गुणभाजनं पुनरसौ नो लोहभावं भजेत्।
इत्थं सज्जनसङ्गमात्खलु जनः सद्बुद्धिमाप्नोत्यलं
तत्संपर्कमुपाश्रितः स तु कथं जह्यान्निजं सद्गुणम्॥

सत्यम् :—आर्य खल्वयं वस्तुस्वभावः। परम्।

न दुर्जनानां हि हितोपदेशैः शर्मातिरेकं भुवि कोऽपि मर्त्यः।
आसादितः कुण्डलिनं पयोभिर्गवां प्रपुष्णन्निजबालभावात्॥

प्रामाणिक :—वत्स यद्येवं तर्हि गच्छावः स्वामिसविधं प्रधनोद्योगसंधुक्षणाय।

(निष्क्रान्तौ।)

इति सत्सङ्गविजयनाम्नि नाटके चतुर्थोऽङ्कः समाप्तः।

## अथ पञ्चमोऽङ्कः

(ततः प्रविशति तत्त्वविचारः)

तत्त्वविचार :—(सविमर्शम्।)

यत्रानेककपोलकल्पितमतैः पिच्छं हि काकीकृतं
भ्रान्तास्तद्वचनैः प्रतारितधियो नाद्यापि पारंगताः।
वाग्बुध्यादिदरंपरापरपथं यद्ब्रह्मसत्कारणं
तस्येच्छाविषयं विचारममितं प्राज्ञाः परं कुर्वते॥

अये चिरकालप्रवासपर्यटनपरिपीडितः कुशस्थलीमासाद्य तत्रत्य-जनावधीरित इतस्ततो संभ्रम्यमाणः सर्वत्रापि दुःसङ्गयुद्धोद्यममाकर्ण्य देवस्य वृत्तांतावकलनाय गंतुमुद्युक्तोऽस्मि। गच्छामि तावन्नार्मदं तीरं तत्रार्जवेन संगत्य वृत्तांतं कलयामि।

(प्रयाणं नाटयति।)

(ततः प्रविशत्यार्जवम्।)

आर्जवम् :—भो तत्त्वविचार एष आर्जवस्य साष्टांगः प्रणामः। (तथा करोति।)

तत्त्वविचार :—वत्स भद्रं भद्रम्। (उत्थाप्यालिंग्य)

वत्स देवस्य को वृत्तान्तः?

**आर्जवम्** :–प्रामाणिकनामा मन्त्री देवेन संध्यर्थं प्रेषितः । स च सत्येन संगत्य देवनिकटमागतः। आगत्य उभाभ्यां बोधितो देवो विग्रहमेवोररीचकार।

**तत्त्वविचार** :–ततस्ततः ।

**आर्जवम्** :–तदवसर एव देवानांप्रियेण दुःसङ्गेन दूतः प्रेषितोऽभूत् ।

**तत्त्वविचार** :–ततस्ततः ।

**आर्जवम्** :–ततश्च स निर्मर्यादः संसद्यतिपरुषाक्षराण्यभाणीत् ।

**तत्त्वविचार** :–किं तत् ।

**आर्जवम्** :–आर्य ! स इत्थमवोचत् ।

**अद्यावधि त्वदपराधशतं विसोढं चैद्यस्य शौरितनयेन यथा मयात्र ।**
**तस्मात्त्वमद्य गिरिगह्वरमाश्रयाशु नो चेद्रणांगणभुवं भज दुर्विनीत ॥**

**तत्त्वविचार** :–ततस्ततः ।

**आर्जवम्** :–तदनु देवोऽपि—

शोणायमाननयनशतपत्रप्रभारुणगात्रयष्टिर्जपाकुसुमसंसक्तस्फटिकोपमामुपदधानः प्रमुखामात्यं चतुरंगबलसज्जीकरणाय त्वरिततरमादिदेश।

**तत्त्वविचार** :–ततस्ततः ।

**आर्जवम्** :–ततोऽपरेऽह्नि वाहिनीपतिर्वेलामिव चतुरंगवाहिनीं व्यूह्य रणरंगमुपाजगाम।

**तत्त्वविचार** :–ततस्ततः ।

**आर्जवम्** :–ततोऽपरेद्युर्भगवति भासांनिधावुदयगिरिपरशिखरनिहितकरनिकरविकासितकोकनदप्रसृमरमकरंदमंडितदिङ्मंडले स्वपरोद्भटभटाः धनुःशिल्पानल्पकौशलमभ्यस्तवन्तः ।

**समरतूर्यनिनादविमिश्रितैर्भटरवैर्दिगिभाः स्खलितास्ततः ।**
**वनरजःपटलैश्च दिवामणिर्घनगणैरिव निष्प्रभतां गतः ॥**

**रथिभी रथिनः पदातिवर्गश्चरणाटद्भिरलं चकार युद्धम् ।**
**गजगामिजनैर्गजाधिरूहस्तुरगस्थैश्च ततोऽश्वपारयोधाः ॥**

**पवनमतिपतद्भिः कंपितार्वद्भिरेषा धरणिरपि तदानीं नर्तकी संबभूव ।**
**चलदगकुचकुंभाशाखिशाखाकराग्रैरभिनयमभितः सा दर्शयामास सद्यः ॥**

**चंचद्विशालकरवालकरालशंपा गर्जद्गजेन्द्रघनगर्जितमादधाना ।**
**चापैः पृषत्कनिकरैश्च पयोदकालप्राप्तद्युलोकवदियं रणभूर्विरेजे ॥**

तत्त्वविचार :—ततस्ततः।

आर्जवम् :—तदनन्तरम्—

निस्त्रिंशदारितमदोद्धतकुंभिकुभाद्रक्ताक्तमौक्तिकगणाः भुवि संनिपत्य।
नृत्यत्कबन्धगलनिर्गतशोणधारासंपातबुद्बुदतुलामतुलामवापुः॥

तत्त्वविचार :—ततस्ततः।

आर्जवम् :—ततोऽस्मदीययोधैरहंपूर्विकया एकीभूयाभिमुखमुत्पतितैः प्रासतोमरपरश्वधमल्लकुंतनिकृत्तशूरसहस्राच्छादितायां रणांगणधरण्यां—

चंचत्प्रचंडतरखड्गनिबद्धमुष्टिर्नृत्यद्रथाश्वपरिधूनितशत्रुधैर्यः।
भग्नं निशम्य विलसद्वरवारवाणो देवो रिपुं स्वशिबिरं पुनराससाद॥

तत्त्वविचार :—ततस्ततः।

आर्जवम् :—तदनु प्रबलमहाहवसत्रसमाप्तिसमाप्तपुरुषार्थसार्थसदनस्वांतरंगो रणरंगनिवृत्तमानसः पटसदनसम्मुखो बभूव।

तत्त्वविचार :—ततस्ततः।

आर्जवम् :—तदवसरे देवेनार्य स्मृत्वाहमादिष्टः। यथा गच्छ तावद्दशाश्वमेधतीर्थमहमप्यद्यक्षपयिष्णुराहवावभृथस्नानं तत्राचरिष्ये। यदि तत्त्वविचारेण समागमश्चेन्मदागमनं प्रतिपालयतां भवन्ताविति।

तत्त्वविचार :—(सहर्षं सरोमांचम्।) वत्स निर्वर्तितसाधुकृत्यं देवं विलोकयिष्ये तदनु संभावयिष्यति मां देवः। धन्योऽहम्। (नृत्यं नाटयति।)

आर्जवम् :—आर्य प्रत्यासन्नो देवः। यतः।

गंधर्वोद्भूतधूलिप्रकरपरिवृता किं च सौरीप्रभैषा
गंभीरा वीरनादाः जयपटहरवामिश्रिताः पूरयन्ति।
आशानामन्तरालं पुरयुवतिजनाः संभ्रमात्सौधमूर्ध—
स्वारूढाः कामयन्ते ननु विजयिनृपं दृक्पथे संविधातुम्॥

तत्प्रत्युद्गच्छावः।

(उभौ प्रत्युद्गमनं नाटयतः।)

(ततः प्रविशति राजा सार्जवतत्त्वविचारः सपरिवारः।)

तत्त्वविचार :—देव एतद्दशाश्वमेधतीर्थं यच्च विरोचनतनूद्भवरचितदशाश्वमेधावभृथसमयसमागतत्रिविक्रमपदपंकजपरागमकरंदमिश्रणेन तीर्थराजाधिकमधिमहीतलमध्यास्ते। यतः।

[illegible]ीति प्रथमप्रसादगंगा ।
तत्प्राक्प्रभुपदपंकजसंसर्गान्नाधिकं कुतश्चेदम् ॥

(राजा विहितस्नानदानादिकृत्यः सभाप्रवेशं नाटयति । )

तत्त्वविचार :—वत्स आर्जव एष देवः सिंहासनाधिरूढः । तदेनं द्रक्ष्यावः ।

(उपसर्पतः । उपसृत्य । )

जयतु जयतु स्वामी ।

राजा :—भो तत्त्वविचार । कः खलु भुवनवृत्तान्तः ।

तत्त्वविचार :—देव । इदानीं——

हंसाः सुमानसरताःविलसत्सुपक्षास्त्वत्कीर्तिमन्वभिसरंत्यधुनात्र लोके ।
शोकाविलानि विमलानि सतां मनांसि प्रोत्फुल्लहल्लकवनानि सरांस्य-
—भूवन् ॥

अपि च ।
काणादशास्त्रमधुना व्यभिचारशालि वैकर्तनं श्रयति संप्रति हिंसकत्वम् ।
नास्तिक्यमीश्वरधियां किल संप्रविष्टं देव त्वदीयविजयेन शुभं जनानाम् ॥

किञ्च ।
विश्वासघातनिपुणोऽनुपतत्त्रिवर्गो भर्गो जने विषमदृक्परिपठ्यतेऽसौ ।
नेशेतरो भवति कोऽप्यधुना कृतघ्नश्चौर्यं चकास्ति भुवने परसद्गुणा-
नाम् ॥

राजा :—भो तत्त्वविचार ! अलमधिकश्लाघया । यतः

यस्येच्छावशतो विचित्ररचना ब्रह्मांडगोला इमे
स्थित्युत्पत्तिविनाशमाशु दधते श्लोक्यः स सत्यो हरिः ।
जीवास्तत्परिचारकाः यदि कृपादृष्टिं भजेयुस्तदा
स्तोत्रार्हास्तदपीशभक्तिविधुरा न स्युः कृतार्थाः परम् ॥

अत इदमभ्यर्थये ।
स्वधर्मे सर्वेषामभिमतिरतीवास्तु सततं
विवेकं विज्ञानं दिशतु निजभक्तिं सुविमलाम् ।
दुरध्वध्वांतानां विघटनपटुः श्रीशतरणिः
कृपादृष्ट्या वृष्टिं वितरतु जनेभ्यस्त्वविरतम् ॥

तच्छ्रीमद्गोवर्धनोद्धरणकृपासंपादनाय श्रीशद्वारं प्रतिगंतुमुत्सुकोऽस्मि ।

तत्त्वविचार :—देव आवामपि सहैवागच्छावः ।

(निष्क्रान्ताः सर्वे । )

इति सत्सङ्गविजयनाम्नि नाटके पञ्चमोऽङ्कः समाप्तः ।

समाप्तमिदं नाटकम् ।

# संविद्धृद्याऽऽविरस्तु नः

रामकृष्ण तुलजाराम व्यास

संमीलिताक्षैर्ऋषिभिस्सदसत्पारदृश्वभिः ।
विद्यया परया साक्षात्प्रत्यक् चेतसि वीक्षिता ॥
त्यागयोगानुभूता सा संविद्धृद्याविरस्तु नः ॥१॥

संस्क्रिया सर्वलोकानां प्रसिध्यादात्मबोधिनी ।
विश्वं चैतद्भवेदार्यं विशुद्धाचाररक्षणात् ॥
द्यावापृथ्व्योश्च शान्तिः स्यात्संविदा ज्ञानरूपया ॥२॥

संव्यूढं व जगद्योद्धुं द्वयोरन्तीककेन्द्रयोः ।
विभ्रमश्चैव प्राज्ञानां प्रजारक्षणहेतवे ॥
त्राणमेतादृशे काले संविदेषा दधात्वलम् ॥३॥

संचारः सर्वप्राणेषु धृत्युत्साहशमत्विषाम् ।
विचारश्च स्वरूपस्य कर्तव्यस्य व्यपाश्रयः ॥
दृढसंकल्पशक्तिश्च संविदैतत्प्रसिध्यतु ॥४॥

संश्लेषो हृदयानां स्याद्दयाप्रणयप्लावनात् ।
विरोधशमनं चैव राष्ट्राणां सामविद्यया ॥
त्रस्तमानवतात्राणं विदधात्वात्मसंविदोम् ॥५॥

(अत्र "तु याग" इत्यादौ असमीचीनता प्रतीयेत तर्हि "त्याग" इत्येवं कृत्वा विशोध्यम् ।)

# विरहिणीगीतम्

**भगवान् शरणभारद्वाजः 'प्रदीपः'**

प्रियो नाधुनाप्यागतो मे वसन्ते !
तडागेषु कंजाः श्रियं धारयन्तो
मनो मेऽनिशं पीडया पूरयन्ते ॥
प्रसूनान्तिके मञ्जु गुञ्जन्तिभृङ्गाः
जनाः मादृशाः शोकदग्धाः म्रियन्ते ॥
यदा कोकिलाः गीतमालापयन्ति
तदा मे हि प्राणाः व्यथामाश्रयन्ते ॥
कथं रोषयुक्तः स प्राणेश्वरो मे ?
वसन्तागमो नास्ति किम्वा तदन्ते ?
भृशं क्लिश्यते सङ्गमोत्कण्ठिताहं
न तं पुष्पिताश्शाखिनः प्रेरयन्ते ?
न तत्रास्ति किं किञ्चिदुद्यानमारात् ?
न किं सौरभं गन्धवाहाः वहन्ते ?
किमत्रैव रागान्खगाः कीर्तयन्ते ?
तदीयान्तिके मौनमासादयन्ते ?
प्रणीतं प्रदीपेन गीतं नवीनं
रसज्ञास्तु गीत्वा मुदं संलभन्ते ॥

★

# आर्याणां मनस्तत्त्वम्

च. ईश्वरशास्त्री*

आर्याणां सर्वा विद्या वेदेषु तदङ्गेषु शास्त्रेषु च दरीदृश्यते। कृत्स्नं जगत् विचारविषयं कुर्वत् न्यायशास्त्रं, आत्मविज्ञानं च नवरससम्बन्धिनीं जिज्ञासां प्रवर्तयद् रसशास्त्रमलंकारशास्त्रापराख्यं, कामशास्त्रं च मनसैव केवलेन स्त्रीपुंसो रोचमानं, आरोग्यमूलतया वर्ण्यमानेषु चरकादिषु आयुर्वेदश्च, तेषां मनस्तत्त्वं निगमयन्ति नितराम्।

परं तत्त्वं ब्रह्म जगदेकमूलम्। तस्मिन् सर्वं (प्रतिष्ठितम्) विवर्तते। सर्वतन्त्रस्वतन्त्रं ब्रह्म चेतनं स्वच्छतरे फलके इव दर्पणे जडे प्रतिफलति कर्तरि भोक्तरि मनसि अन्तःकरणे ब्रह्मणः अध्यासेन ब्रह्म कर्तृ भोक्तृ इत्यभिमन्यते। एवं मनसा सहायेन आत्मा जानाति इच्छति यतते करोति सुखमनुभवति दुःखं वा। यतो जीवब्रह्मणोरभेदाग्रहेण बद्धो मुक्त इत्यादिव्यवहारो मनःकृत एव। तत उच्यते मन एव मनुष्याणां कारणं बन्धमोक्षयोः। इति। मन इति किञ्चिद् द्रव्यं द्रव्येणात्मना सम्बध्यैव जानाति। तदेवेच्छति–मे स्यादिति। यदिच्छति तज् जानात्येव। अज्ञातं नैव वाञ्छति। वाञ्छितं च प्रयत्य क्रियया लभते। तस्मान् मनुष्यस्य फलान्त हेतुक्रियायाः इच्छा कारणम्। यतो ज्ञानमन्तरेण नेच्छति तत इच्छां प्रति ज्ञानं कारणमवसीयते। यस्यां च क्रियायां प्रवर्तते तादृशप्रवृत्तिं प्रति कृतिसाध्यताज्ञानं इष्टसाधनताज्ञानं बलवदनिष्टाननुबन्धित्वज्ञानं च कारणं निश्चीयते। कृत्यसाध्ये चन्द्रमण्डलानयने, शीतनिवारणाय सरोवगाहे बलवदनिष्टजनके चौर्यादौ च न केऽपि अमन्दाः प्रवर्तन्ते। वस्तुतोऽनिष्टसाधनमपि इष्टं साधयिष्यतीति भ्रमेण कदाचित्कुर्वते। उपलभ्यन्ते तादृशा यथा प्रबलतरज्वरेण सन्तापार्ता दाहशान्तये शीतं जलं पिबन्तः। परिणामेऽमृतोपमं भेषजं तिक्तं बालं मन्दाश्च, सात्विकमाहारं विद्यां च न कामयन्ते स्वाच्छन्द्येन।

मनसैवात्माभिमन्यते बुद्धिवृत्या धनेन कुबेरो भवानि। आयुषा ब्रह्मासानि। रूपेण कामो भूयासम्। इति।

---

* पम्बेत्ताडि, पञ्ज, दक्षिणकन्नड।

–शरीरेन्द्रिय–सत्वात्म–संयोग आयुरिति चरके। आयुरित्येकस्मिन् शरीरे मनस इन्द्रियाणां आत्मनः सम्वन्धरूपः। मनो हि सर्वं व्यापारं नियमयति वाह्ये यथा तथाऽन्तरेपि शारीरे। प्रियायाः पुत्रस्य बन्धुजनस्य वान्यस्य वियोगे स्वकीयस्य धनस्य चौर्ये स्वसम्पदाऽपरिखे वा जनः दूयमानो दुःखायमानः, मनसा कायेन च ह्रसति। रुज्यति कुप्यति विरज्यति मुमूर्षति प्रपाते पिपतिषति विषं पिपासति कण्ठे रज्वोदवध्नाति ह्रदे निमज्जति प्राणान् वा स्वयं जहाति। मनश्चाशान्तं सत् हसति रोदिति प्रलपति ताडयति आत्मानं दहति गृहं वह्निना। एवं मनसा वुद्धिर्देहश्च वहु विकरोति। वहुना भेषजेनागदंकरेण पायितेनापि न स्वस्थो भवति वलवदुन्मनायमानः चिन्ताकुलः। अन्नं न जीर्यति। न रक्तमापूरयति नान्नरसं सम्पादयति न निद्रामनुभवति न वा जागर्ति। एवं देहे मनसोऽधिकारो वलवान् दृढश्च।

शृंगारवीरकरुणा रौद्रहास्यभयानकाः। वीभत्साद्भुतशान्ताश्च रसरत्युत्साहादिभिः स्थायिभावैर्मानसिकैः सात्विकैर्व्यभिचारिभिश्च पोषिता रस्यन्ते सहृदयैः। स्तम्भः प्रलयरोमाञ्चौ स्वेदो वैवर्ण्यं वेपथू। अश्रुवैस्वर्यमित्यष्टौ सात्विकाः मनोभावपरिणामाः पामरगोचरा एव। देहे सर्वत्र ज्ञानवाहिनो नाड्यः प्रतायन्ते। शतपत्रपत्रशतवेधन्यायेन ज्ञानवृत्तयो वरीवर्तन्ते। सर्वावयावच्छेदेन यातनाः सुखं दुःखं च वेदनाः प्रतिवुध्यन्ते। हर्षेण कोपेन दुःखेन च रोमाञ्चः कम्पः आरुण्यं च सम्भवति। एवं मनसो गम्यन्ते सूक्ष्माः विकारा देहे विक्रियां च जनयन्ति। विरुद्धलिंगस्य पुंसः स्त्रियो वा दर्शनस्पर्शनादिभिः क्रमदीप्तता भवति तेनोपायेन कामकेन्द्रषु तत्तत्स्थानेषु देहावयवेषु घट्टनकुट्टनादिभिरुद्रेकादभिरज्यते। चुम्बनालिंगननखक्षतदन्तक्षतादयश्चैवम्भूताः। कन्यायाश्च विस्रम्भणे चेदमतीवाद्रियते वचनोपक्षेपाश्च। विना मनोनुकूलं रभसप्रवृत्तौ लज्जा वैमुख्यमसुखमतृप्तिर्द्वेषश्च जातु समुत्पद्येरन् परस्परम्। एवं मनस आवर्जनं कामतन्त्रे बहुश उपलभ्यते। मनसो वेगः बलं सौक्ष्म्यं चातिमहत्। योगिनो मनसो वलेनैव देहस्यापि अणिमादिकमद्भुतं वलं बिभ्रति। उपासनाकाण्डे वितितानि उपासनानि मनःकल्पनामायतन्ते। फलं च तत्तत्समुपलम्भयन्ति। कामकन्धरायमाणस्य मनसो विलयं निद्रायां मुक्तौ चाभिलषन्ति जगत्पारदृश्वानः। प्राणायामेन मनो निगृह्णन्ति॥

दुःखिताय भेषजदानं निषिद्धम्। क्लीवतां च जनयति मनोभंगः। इतराणि यथासम्भवं रोगान् वहून्।

# सुरभारती नाम संस्कृतभाषायां विश्वभाषायाः साक्षात्कारः

–रामकृष्ण अनन्तभट्ट काशीकर*

अस्या 'भारती' नाम्न्या भाषाया अपराणि नामधेयानि 'सुरभारती, देवभाषा, गीर्वाणवाणी' इत्यादीनि इदानीमपि सुप्रसिद्धानि सन्ति।

भारतस्य राष्ट्रस्य भाषा 'भारती' ति सुप्रसिद्धा एव वर्तते। वेदमन्त्रेपु अपि भारती भाषा तथा भारता जनाः प्रशंसिता दृश्यन्ते यथा–

**"विश्वामित्रस्य रक्षति ब्रह्मेदं भारतं जनम्।"** (ऋ. ३।५३।१२)

"विश्वामित्रस्य इदं ब्रह्म इदं सूक्तं भारतं जनं रक्षति" इत्यत्र भारतनामकस्य जनसमुदायस्य संकेतो दृश्यते। तथा तस्य भारतजनस्य या भाषा सा भारती अपि एवमेव प्रशस्यते वैश्वामित्रे मण्डले–

**"आ भारती भारतीभिःसजोषा इळादेवैर्मनुष्येभिरग्निः।**
**सरस्वती सारस्वतेभिरर्वाक् तिस्रोदेवीर्बर्हिरेदं सदन्तु॥"** (ऋ. ३।४।८)

"भारती भारतराष्ट्रस्य भाषा भारतीभिः अन्याभिः उपभाषाभिः साकं, सरस्वती संस्कृत्युपासकैः सारस्वतेभिः साकं,तथा इळा मातृभूमिः सर्वैर्मनुष्यैः सह, अत्र अस्मिन्यज्ञे सदन्तु, आगच्छन्तु, अत्रागत्य विराजन्तु।"

इळा मातृभूमिः सर्वैर्मनुष्यैरुपास्या, सरस्वती तु सारस्वतेभिरेव सम्भजनीया वर्तते। भारती तु भारतीभिः अन्याभिः उपभाषाभिः साकं समुपास्यते। अत्र भारतस्य भाषा भारती दृश्यते। सां एव सुरभारती, गीर्वाणी, इत्यादि नामभिः प्रसिद्धा वर्तते। के नाम ते सुराः, के नाम ते देवाः, के नाम ते गीर्वाणा इति प्रथम-मत्र निश्चेतव्यम्। देवलोकस्य अपरं नामधेयं 'त्रिविष्टप' इति वर्तते। तस्यैव 'त्रिविष्ट-पस्य' अपभ्रष्टं नामधेयं 'त्रिवेट' इति इदानीं सुप्रसिद्धं वर्तते। त्रिविष्टप एव तिबेट देश इत्यत्र न कोऽपि सन्देहः। सुरनद्या गङ्गाया उद्गमप्रदेशः समीपमेवास्ति। स्वर्ग-द्वारमपि तत्रैव हिमगिरौ वर्तते। भारतस्य उत्तरस्यां दिशि त्रिविष्टपाख्यः प्रदेशो वर्तते। येन मार्गेण युधिष्ठिराद्याः पाण्डवाः स्वर्गारोहणं कृतवन्तः स एव त्रिविष्टपस्य मार्गो हरिद्वारस्य उत्तरस्यां दिशि वर्तते स्वर्गगंगा प्रदेश एष एव। एष एव सुरलोकः, यत्र देवजातीनाम्नी मानवानां जातिः सर्वशुभगुणसम्पन्ना निवासं कृतवती पाण्डवानां समये। कुन्त्यां जातोऽर्जुनोऽस्यैव देवराष्ट्रस्य शासकस्य इन्द्रस्य नियोगजःपुत्रः

* होसाड, उत्तरकन्नड।

आसीत्। सोऽर्जुनः अस्त्राणां प्राप्त्यर्थं अस्मिन्नेव त्रिविष्टपे गतः तस्मात् त्रिविष्टपराजादिन्द्रात् नानाऽस्त्राण्यानीतवान्।

अस्मिन्स्वर्गे गमनमर्जुनेन जीवितदशायामेव कृतम्। मरणोत्तरं यस्य प्राप्तिर्भवति स अन्यः स्वर्गः। एष त्रिविष्टपनाम्ना प्रसिद्धः स्वर्गो जीवितदशायामपि गन्तुं तत्र वा निवस्तुं शक्यः। इदानीमपि तत्र सर्वैः गन्तुं शक्यते। अस्मात्त्रिविष्टपात् अर्जुनः कैलासं प्रति गतवान्। तत्र च भगवन्तं श्री शंकरं सम्पूज्य, तस्मात्पाशुपतास्त्रं प्राप्तवान्। एष कैलासः इदानीमपि गन्तुं योग्य एवास्ति। शतशो जना इदानीमपि तत्र गच्छन्ति, तत्र प्रदक्षिणं च कुर्वन्ति। अतः कैलासनिवासो जीवितदशायामपि भवितुं शक्यः। सर्वमेतत्प्रत्यक्षमेव वर्तते; अतस्तस्य सिद्ध्यर्थं प्रमाणान्तरप्रदर्शनस्य किमपि प्रयोजनं नास्ति। भारतस्य जनाः भरता भारता वा तेषामपि उल्लेखो वर्तते वेदमन्त्रे। यथा–

**"अतारिषुर्भरता गव्यवासम्।"** (ऋ. ३।३३।१२)

"गव्यः गा इच्छन्तो भरताः समतारिषुः अत्र सर्वसामान्यजनवाचकभरता इति पदं दृश्यते।" तथा च–

**"आसन् परिच्छिन्ना भरता अर्भकासः अभवच्च पुर एता वसिष्ठः।**
**आदित् तृत्सूनां विशः अप्रथन्त॥"** (ऋ. ७।३३।६)

"अत्र भरता जनाः अर्भकासः बालबुद्धयः परिच्छिन्नाः कलहप्रिया आसन्। तेषां यदा पुरोहितः वसिष्ठः समभवत्, तदानीं प्रभृति भरतानां विशः अप्रथन्त। समृद्धाः परमोत्कर्षमापन्ना अभवन्।" इत्यत्रापि भारता जना उल्लिखिता दृश्यन्ते, एतेषां जनानां या भाषा अस्ति सा भाषा भारतीति स्पष्टमेव भवति। भारतस्य सूनवः अपि अत्र प्रशंसिता दृश्यन्ते यथा–

**"भारतस्य सूनवः।"** (ऋ. २।३६।२) **"भारतस्य पुत्राः।"** (ऋ. ३।५३।२४)

"भारतराष्ट्रस्य पुत्रा एते भारता" वा "भायाः प्रकाशस्य मार्गे अर्चिरादिके पथि वा रताः ते भारताः, प्रकाशमार्गावलम्बिनो भद्राः पुरुषा वा अत्रापेक्षिता इति विद्वद्भिः विचार्य निश्चयः कर्त्तव्यः।

आकाश्मीराल्लङ्कापर्यन्तं विस्तीर्णं भारतं राष्ट्रं इदानीं दृश्यते, किं तदेतद्राष्ट्रं पूर्वोक्तेन वेदमन्त्रेण उल्लिखितम्, अथवा प्रकाशमार्गसंस्थितानां अर्चिरादिमार्गा-

वलम्बिमानवसमूहोऽत्र 'भारतजन' इति पदेन व्यवह्रियत इत्यस्य विचारः कर्तव्यः सद्भिः वेदविद्भिः।

श्रीभगवतः शंकरस्य शासनक्षेत्रं भूतस्थानं आसीत्। तदेवेदानीं भूतस्थानं 'भूतान' इति नाम्ना प्रसिद्धमस्ति। सर्वेषां जनानां तत्र गमनं तस्मात्स्थानात्पुनरत्र प्रत्यागमनं चेदानीं सुखेनैव भवितुं शक्यम्। अत एतद्विषये न कापि शङ्का प्रभवितुं इदानीं शक्या।

भारते तु भारतीयानामार्याणां निवासः तथा च भूतस्थाने भूतान देशे 'भूत' नामकानां जनानां निवास आसीत्। 'भोहिया' इति यन्नामेदानीं उच्यते, तदेव दर्शयति तत्रत्यानां प्राचीने काले "भूतजाती' इति नाम आसीत्।

असुरास्तु असीरिया प्रदेशीयाः, दानवा दान्यूबनदीदेशीयाः, बका बाक्ट्रीया देशवासिनः, राक्षसा रूसदेशीया आसन्निति तेषां नामभिरेव स्पष्टं भवति। भगवान् शंकरस्तु ब्रह्मविद्यायां, आत्मविद्यायां, वेदविद्यायां, नाट्यनर्तनविद्यायां प्रवीण आसीत्। सर्वे पूर्वोक्ताः भूभागे निवसन्तो असुराः शाङ्करीये विद्यालय एव नानाविद्या अधीतवन्त इति श्रूयते। अतस्ते सर्वे संस्कृतभाषां जानन्ति स्मेति सुस्पष्टमेवास्ति। शुक्राचार्यस्तु भार्गवो असुराणां प्रदेशे गत्वा तत्रत्यानामसुराणां आचार्यः सञ्जातः। स तु संस्कृते प्रवीण आसीदित्यत्र कोऽपि सन्देहो नास्ति।

रावणस्य माता कैकसी, तस्याः पिता सुमाली नामक एको राक्षसो मध्यामेरिकादेशात् भारते आगतः। स पुलस्त्याश्रमे न्यवसत्। तत्र कैकसी गर्भं दधार, रावणादीन् जनयामास च। मैक्सिको नामके मध्यामेरिकादेशे संस्कृतभाषा प्रचलितासीदिति एतेन प्रतीयते। अन्यथा स भारते एव किमर्थं कथं वा आगतः अनाहूत इव यदि तस्य कोऽप्यत्र सम्बन्धो न भवेत्?

मैक्सिको देशे 'ग्वातिमाल' नामकं नगरं वर्तते। 'गौतमालय' एव तत्। किमेतत्संस्कृतस्यैव रूपं नास्ति? एवमेव प्रायशः सर्वेषु देशेषु ग्रामनामानि, पर्वतनामानि-नदीनामानि, मनुष्यनामानि च संस्कृतोद्भवान्येव दृश्यन्ते। "मोलोटोव्ह, वेराशिलाव्ह, मालंकोव्ह, आदीनि नामानि आव्हान्तानि सन्ति। 'आव्ह' पदं संस्कृते नामवाचकं वर्तते; यथा 'अमृताव्हः', 'विनायकाव्ह इत्यादीनि संस्कृते नामानि भवन्ति। तथैव 'वीरशीलाव्ह', 'मोलोटोव्ह', 'मालेन्कोव्ह' आदीनि आव्हान्तानि कथं रूसदेश गतानि? कथं नाम 'आव्ह' इति पदं रूसदेशे गतम्? यदि तत्र कदाचिदपि संस्कृत भाषायाः सम्बन्धो नासीत्?

रशिया (रूस) देशे एतदेकमेव नाम वर्तते इति न, शतशः स्थान-पर्वत-ग्राम-नदीनामानि तत्र संस्कृतोद्भवान्येव दृश्यन्ते। यथा–रशिया देशे संस्कृत नामानि Vata, वेत, वेदः, Polist, पोलिस्त, पुलस्तिः Viza, वियाझ्य, व्यासः, Samoyedas, समायेदस, सामवेदः, Nerekta, नेरेक्त, निरुक्तं, Sorot, सोरोत, श्रुतं, Oma, ओमा, उमा, Rusa, रूसा, ऋषिः, Gori, गोरी, गौरी, Moksha, मोक्ष मोक्षः, Yug, युग, युगं, योगः, Usa, उसा, उषा, Sura, सूर, सूरः, सूर्यः।

अत्र "वेद-सामवेद-मोक्ष-उषा-व्यास-उमा-गौरी-पुलस्ति"– आदीनि नामानि शुद्धानि संस्कृतनामान्येव सन्ति। एतान्येवैतादृशानि नामानि सन्ति इति न, पर एतादृशानि शतशो नामानि सन्ति। रशियादेशे यदि संस्कृतभाषा नासीत्, कदाचिदपि प्रचलिता, तर्हि एवं विधानि नामानि तत्र कथं गतानि इति दर्शनीयं तैः येषां मतं विरुद्धं वर्तते। वयं तु मन्यामहे यत्प्राचीने काले वैदिकी भाषा, संस्कृता वा लौकिकी भाषा वा तत्र प्रचलितासीदिति।

प्रकृतमनुसरामः। त्रिविष्टपनिवासिनां देवानां या भाषा आसीत् सा एव 'देव-भाषा, सुरभाषाः, सुरभारती' इत्यादिभिर्नामभिः प्रसिद्धाऽस्ति इदानीमपि।

"देवाः। विबुधाः। सुराः। सुमनसः। लेखाः। ऋभवः। अमृतान्धसः। वृन्दारकाः।" इत्यादीनि तेषां नामानि प्रसिद्धान्येव वर्तन्ते।

'विबुधा' इति विशेषेण ज्ञानविज्ञानसम्पन्नाः। 'सुमनस' इति शोभनमनस्काः। 'लेखा' इति लेखकाः लेखनकर्मणि कुशलाः। 'ऋभव' इति शिल्पकर्मणि कुशलाः। 'अ-मृतान्धसः' इति ये मृतमन्नं मृतपशुदेहात्समुत्पन्नं न भक्षयन्ति ते। 'वृन्दारका' इति प्रशस्तो वृन्दः सङ्घः येषां ते शोभनसङ्घटनसम्पन्ना इति एषामेतानि नामधेयानि, एषां शोभनगुणान् प्रकाशयन्तीति द्रष्टव्यम्।

यत्तूच्यते पाणिनिकालेऽपि लेखनकला नासीदिति, तत्तु 'लेखा' इति एतेषां नाम्नैव प्रत्याख्यातम्। 'लेखा' इति लेखकानामेकः स्वतन्त्रो वृन्द एव तेषां मध्ये आसीदिति स्पष्टमेव भवति अनेनैव नाम्ना। अतोऽनेन 'लेखा' इति पदेन लेखनकला नासीदिति शङ्का स्वयमेव परास्ता। त्रिविष्टपवासिनो देवजात्या विबुधा मानवा लेखनकर्मणि प्रवीणा आसन्, तथा च तेषां भाषा 'सुरवाणी देवभाषा, देववाणी, सुरगीः' आदि नामभिः सुप्रसिद्धाऽस्ति इदानीं पर्यन्तम्।

एतेन सिध्यति यत् अस्मिन्नार्यावर्ते, उत्तरे भारते, त्रिविष्टपे, भूतस्थाने च एषैव सुरभाषा प्रचलिता आसीदिति। अर्जुनस्य तत्र गमनं, तत्रत्ये शिक्षणालये-

ऽध्ययनं, तत्रत्येन केनापि राज्ञा सह कुन्त्याः अर्जुनमातुः नियोगेन सम्बन्धः, तेन सम्बन्धेन अर्जुनस्य जन्म, अनेन कारणेन कर्णेन सह अर्जुनस्य भ्रातृत्वसम्बन्ध इत्यादिकं व्यवहारं दृष्ट्वा स्पष्टमेव भवति यदेषा सुरभारती यथाऽऽर्याणां तथा देवानामपि व्यावहारिकी भाषासीदिति। एतेन आर्यावर्त-त्रिविष्टप-भूतस्थानादयः प्रदेशाः संस्कृत-भाषाभाषिणां वासन्निति निश्चितं भवति।

ब्रह्मणः प्रदेशो ब्रह्मदेशः, विष्णोः प्रदेशः गण्डकीनद्या उद्गमस्थाने शालिग्रामस्थाने नयपालस्योत्तरे विभागे आसीत्, भगवतः शङ्करस्य प्रदेशः कैलासीयः भूतस्थानीयः प्रसिद्धः। एते ब्रह्म-विष्णु-महेशाः संस्कृतभाषां न जानन्ति स्मेति केनापि वक्तुं न शक्यते। अतः ब्रह्मदेश-भूतान-कैलास-त्रिविष्टप-नयपालादिषु प्रदेशेषु संस्कृतभाषा प्रचलिता आसीदिति स्पष्टं भवति।

दक्षिणभारते वानराणां निवासः लङ्कायां च राक्षसानां निवास आसीत्। सुग्रीव-हनूमदङ्गदादयो वानरवीराः, तारादिका वानरस्त्रियः च संस्कृतभाषाज्ञाने निपुणा एवासन्नित्यत्र सन्देहलेशोऽपि नास्ति। रामेण सह हनूमंतः संवादः प्रथमं घण्टाद्वयपर्यन्तं सञ्जातः। तत्र एकमपि हनूमंतः स्खलनं नाभवदिति भगवता रामचन्द्रेण प्रशंसितं वाल्मीकीये रामायणे। रावणस्तु पुलस्त्याश्रमे वेदादिशास्त्राणि साङ्गानि अधीतवान्, स च अग्निहोत्रधारी आसीत् वेदशास्त्रनिपुणः, वेदभाष्यकर्ता, तत्र लङ्कायां राक्षसा अपि संस्कृतज्ञा एवासन्निति वाल्मीकीये रामायणे प्रतिपादितम्। एतेन लङ्कायां तथा दाक्षिणात्ये भारतप्रदेशे, वानराणां देशे च संस्कृतभाषा प्रचलितासीदिति कथनं शङ्कास्पदं नैव भविष्यति।

ऋषिभिर्भारद्वाजादिभिः दक्षिणे भारते स्वकीया आश्रमाः स्थापिताः। तेषु बोधभाषा संस्कृता नासीदिति कथं केन वक्तुं शक्यते? अतः लङ्कायां दक्षिणे भारते किष्किन्धायां, उत्तरे भारते हिमालये, त्रिविष्टपे, कैलासे, भूतस्थाने, ब्रह्मदेशे, नयपाले सुरभारती प्रचलिता आसीदिति स्पष्टं भवति।

कैलासे यः शाङ्करीयो विद्यालय आसीत्, तत्र यथा देवानां कुमाराः, तथैव असुराणां, आर्याणां अपि कुमारा अध्ययनार्थं आगच्छन्ति स्म इति पुराणेषु सुप्रसिद्धमेव वर्तते। राक्षसानां, सर्पाणां, असुराणां, आर्याणां, देवानां, भूतानां, सम्मेलनमेव कैलासे वासीत्। बाणासुरः, रावणः अन्ये शतशोऽसुराः शङ्करप्रसादेनैव बलान्विताः समभवन्। तथा च ते तदनन्तरं देवान् आर्यांश्च संत्रासयामासुरिति इतिहासकथाः सर्वे जानंत्येव। विद्वद्भिः विमर्शितव्यम्॥

**इतिशम्।**



स्वर्गत म. म. श्रीगिरिधरशर्मा-चतुर्वेदिभ्यः—

# पद्यपाद्याञ्जलिः

श्री. शशिधर शर्मा*

जगति विबोधं जनयन् घनविपदं प्रतिपदं दलयन् ।
विहरतु चित्रगवीको गिरिधर-तरणिर्मनोनभसि ।।
कुन्देन्दुगौरवर्णं लोके महसां महीयसां शरणम् ।
कमलाभमृदुलचरणं गिरिधरचरणं समाश्रये शरणम् ।।
साङ्गोपाङ्गरहस्यालोकोद्धारोल्लसत्करुणाः ।
तनुमेकामुपपन्ना विरेजिरे ननु चतुर्वेदाः ।।
प्रोद्भूतसरिल्लेखो गुणमणिखनिधृक् सुगाङ्गसुषमाढ्यः ।
अचलेन्द्रोऽर्च्यो हिमभाः यस्माद्रत्नाकरो जातः ।।
मधुसूदनवक्त्राब्जाज्जयति परं जाह्नवी जाता ।
जयतितरां च तदार्द्रः कोऽप्यनिलो येन काश्यपी पूता ।।
वाचस्पतिर्गिरिधरो विबुधेन्द्रः कालिका-कान्तः ।
सारस्वतो विभूमा वैराज्यमिवाश्रितः प्रबभौ ।।
आस्तिक-नास्तिक-नव्य-प्राच्याऽखिलमतिविरोधविधुरेऽपि ।
नाम्न्येवा 'ऽऽस्त विरोधो' गिरि मधुधारामयास्य तव ।।
गिरि धरति सर्वसारं निगमागमगं, गिरिञ्च यो धरति— ।
धर्मं प्रत्न-गरिष्ठं, गिरिधर इति वाऽञ्जसा प्रथितः ।।
दुस्तर्कलयोज्जलदस्तोमाद्, गां गोजुषश्चैव ।
परिपालयन्नपीन्द्रं व्यजेष्ट ही ! गिरिधरः कोऽपि ।।
हा हा । शब्दा विकलाः विशीर्णभावा अलंकाराः ।
गिरिधर-विरहे च गिरस्तमसादर्शनमथाऽऽक्रान्तम् ।।

*वाचस्पतिः, प्राध्यापक, पंजाबविश्वविद्यालयः ।

सौजन्यमन्तमाप्तं विनयस्याऽजनि परं विलयः।
आर्ता मार्मिकवार्ता शिष्यस्नेहस्तथाऽनीहः॥

धर्मो मर्मणि निहतः, संस्कृतिरजनीन्दुना विना भूता।
दैवी गिरा च विधवा-भावं विभराम्बभूव बत ! हा !! हा !!!

धारा धर, धारा धर लोचनयोरिति विबोधयन्तीव।
स्वयमुपगान्तस्वान्ता प्रस्रवणैरतिरुरोद भूरार्ता॥

देवेन्द्रनयन-युगली-तृषं समुच्छेत्तुमनुयातः।
वाचस्पतिः, श्रवणयो 'रुत तर्पयितुं स नैर्जरीं सदसम्॥

सद्धर्ममर्मविदुषा विना वृथात्वं सुधर्मायाः।
कलयंस्त्वामाकलयत् त्रिदिवं त्रिदिवेश्वरो नूनम्॥

शास्त्रग्रन्थीन् गूढान् स्मयमानो हन्त ! वेत्स्यति कः।
वादिगजेन्द्रव्रातान् हरिरयमानो निषेत्स्यति कः॥

वैज्ञानिकञ्च हृदयं निगमानां ननु विनेष्यति कः।
आगम-विचिकित्सानां संङघं भङ्गं च नेष्यति कः॥

पीयूषपूरपूर्णा, धाराधर-घोरणी-धरा वाणी।
आप्याययति पुनः क्व नु श्रवसी जिज्ञासुजनतायाः॥

क्व नु वा हिमाद्रि-हिमकरहारान्, हारं स्मितञ्चैव।
अनुविदधानो धास्यति प्रतप्तयोः शम-शलाकिकां 'स' दृशोः॥

शाश्वतधर्मपताकां लोकक्षेमैकलक्ष्ममयीम्।
कस्याऽपि वा समर्प्य प्रयातवान् नेतरात्मधृताम्॥

यः सागसोऽपि शिष्यान् नोपैक्षिष्ठाः कदापि करुणाढ्यः।
रुदतीं विहाय किं हा तेषां संहतिमये ! यातः॥

स्वाऽऽत्ताऽवनव्रतावन किं वर्णाश्रमयमास्त्यक्ताः।
एषा त्वदेकशरणा गिरा सुराणां कथं धूता॥

भगवन्न युज्यते खलु विश्वासिजनान् परित्यक्तुम्।
सच्छिष्यपुत्रभक्तान् शुक्-परिभुक्तान् न वा वक्तुम्॥

संमेलनजनकाय, द्वितीयजनकाय, जनकहृदयाय।
प्रणतिशतं देशिककर तवाऽपर्यन्तेऽजरयशःकाय ! ॥

खलकारा-पतितस्य प्रबाध्यमानस्य संस्कृतद्विड्भिः ।
अनपायि हृदि निबद्धं यच्चरणं तेन दर्शनं लब्धम् ॥

न पुनर्विभोऽतिकरुणा घूर्णन्नयनप्रसादपरिकीर्णा ।
"शशिधर" इत्यधराऽमृतसरणा वाणी मयाऽऽगीर्णा ॥

सत् कञ्जपुञ्जकानां मार्दवमञ्जिमविनयदायौ ।
सकृदपि नयेन वाऽऽप्तौ चाऽऽप्तौ चरणौ पुनः स्प्रष्टुम् ॥

संस्कृत–संस्कृत्योः परिसेवैवाऽऽसीत्तवाऽति येनेष्टा ।
कथमपि सैव धृताऽस्तु प्रसादिनी चिन्मयस्य तव ॥

सारस्वतवर्यायोपहृतः सद्भक्तिभावितेन हृदा ।
सारस्वतोऽञ्जलिस्त्वां दीपो रविमिव विमोदयतु ॥

उद्धूतधर्मपद्याकण्टककीलस्य बोधलीलस्य ।
पाद्यतया पद-पद्मे पद्याञ्जलिरयमुरीकार्यः ॥



यथा यथा विपर्येति लोकतन्त्रमसारवत् ।
तथा यथा विरागोऽत्र जायते नात्र संशयः ॥

●

जयन्ति ते सुकृतिनो रससिद्धाः कवीश्वराः ।
नास्ति तेषां यशःकाये जरामरणजं भयम् ॥

●

मैत्रेयी–यन्नु मे इयं भगोः सर्वा पृथिवी वित्तेन पूर्णा स्यात् किं तेन अमृता स्याम् ?

याज्ञवल्क्य :–यथैव उपकरणवतां जीवितं, तथैव ते जीवितं स्यात्, अमृतत्वस्य तु नाशास्ति वित्तेन ।

मैत्रेयी–येनाहं नामृता स्यां किमहं तेन कुर्यां, यदेव भगवान् वेद तदेव मे ब्रूहि ।

# ते हि नो दिवसा गताः

अनन्तकृष्ण हरिकृष्ण दवे*

जीवत्सु 'बापु' पादेषु नवे स्वातंत्र्यविप्लवे ।
'मातरं' सेवमानानां ते हि नो दिवसा गताः ॥१॥

अहिंसासाधनेनैव सत्यं साध्यं परात्परम् ।
प्रयोज्ये साधने शुद्धे ते हि नो दिवसा गताः ॥२॥

सत्याग्रहे कृते नृणां कारा प्रासादतां गता ।
सहर्षं मृत्युराश्लिष्टः ते हि नो दिवसा गताः ॥३॥

दरिद्रदेहे द्रष्टव्यो देवो नारायणः स्वयम् ।
राष्ट्रधर्मस्तत्सेवाऽऽसीत् ते हि नो दिवसा गताः ॥४॥

अस्पृश्यभावो हर्तव्यः समानाः सर्वदेहिनः ।
नीचोच्चभावना हेया ते हि नो दिवसा गताः ॥५॥

हस्तेनैव कृते वस्त्रे कुतः परावलंबनम् ।
शुभ्रवसनभूषाणां ते हि नो दिवसा गताः ॥६॥

अल्पमूल्यं वस्तुजातं स्वाधीनौ क्रयविक्रयौ ।
अजिह्मा लोकरीतिश्च ते हि नो दिवसा गताः ॥७॥

अरिंदमाः प्रजा आसन् विपक्षे समुपस्थिते ।
मुक्त्यर्थं दृढसंकल्पाः ते हि नो दिवसा गताः ॥८॥

सांप्रतंतु:— अहमहमिकाबद्धाः मंत्र्यासनजिघृक्षया ।
सर्वेऽधिकारमिच्छंति ते हि नो दिवसाः कृताः ॥९॥

जनता हृदया स्पृष्टा नेतारो बहुमानिनः ।
उच्चैस्तरां दिदृक्षंते ते हि नो दिवसाः कृताः ॥१०॥

चारित्रशुद्ध्यपेक्षायां भ्रष्टाचारः समुच्छ्रितः ।
प्रजानां दुरवस्थैव ते हि नो दिवसाः कृताः ॥११॥

---

*निवृत्ताचार्यः संग्रामजी हाईस्कूल गोंडल ।

[illegible] महार्घत्वात् खाद्यपेयं सुदुर्लभम्।

दरिद्रदर्शनो देशः ते हि नो दिवसाः कृताः ॥१२॥

व्यवहारेऽन्यदेशेषु रूप्यको हीनमूल्यकः।
जनाः करभराक्रांता ते हि नो दिवसाः कृताः ॥१३॥

धरायां सस्यशालिन्यां न्यूनता धान्यसंग्रहे।
विदेशैर्भोज्यमानानां ते हि नो दिवसाः कृताः ॥१४॥

'अहमग्रे, ममायं च', संघर्षः प्रांतवादिनाम्।
तीक्ष्णं विवदमानानां ते हि नो दिवसाः कृताः ॥१५॥

गमिता गांधिशिक्षा हा! नेतृभिः स्मृतिशेषताम्।
उदरंभरिता वृत्तिः ते हि नो दिवसाः कृताः ॥१६॥

अतः राज्याधिकारिणः प्रति लोकोक्ति :–

यूयं वयं वयं यूयमित्यासीन्मतिरावयोः।
किं जातमधुना येन यूयं मत्ताः वयं हताः॥



अतिक्रान्तसुखाः कालाः
प्रत्युपस्थितदारुणाः।
श्वः श्वः पापीयदिवसाः
पृथिवी गतयौवना॥

–महाभारतम्

# हिमाचलप्रशस्तिः

(पश्चिमवंगशिक्षाधिकार-विश्रान्त-प्राध्यापकेन श्रीविश्वेश्वर विद्याभूषणकाव्यतीर्थेन विरचितम्)

स्वर्गंगाहिमवारिशीकरधरः पुण्याभिषिक्तः श्रिया
शैलेश त्रिदिवाधिराजसदृशस्त्वं वै गुरुर्भूसदाम् ।
मौलौ सूर्यकरोज्ज्वलांशुमुकुटं सन्धृत्य रत्नप्रभं
नाना निर्झरकुञ्जमञ्जुनिलयः संराजसे दिक्पटे ॥१॥

गंगा त्वां पुण्यनीरैः स्नपयति नियतं मंगलैर्गीतिनादैः
सर्वांगे चानुलेपं विदधति ललितं गैरिका धातुरागाः ।
मौलौ भल्लो वितानं विकिरति कुसुमं दिव्यगन्धाभिरामं
स्निग्धं वायुर्विलासं रचयति चमरीचामरैः शुभ्रपुच्छैः ॥२॥

क्रीडास्थानं त्वमसि ललितं यक्षविद्याधराणां
वन्दन्ते त्वां प्रणतिमधुरं देवकन्याः सुवेशाः ।
लीलाभङ्गैस्तनुविकसितैरंगनाः किन्नराणां
नृत्यानन्दं विदधति भवतश्चाप्सरः कन्यका वै ॥३॥

अर्चां ते प्रकरोति पद्मनिकरैर्गन्धर्वसंघोऽनिशं
अन्नैश्चार्घोपहारकुसुमैः संसेवितः सिद्धकैः ।
पूजामप्सरसां तथैव ललितां संप्राप्य पुण्यात्मनां
देव त्वमधिराजसेऽत्र विपुलैः श्रीशैलराजेश्वर ॥४॥

भाण्डारस्ते प्रपूर्णो गिरिवर विमलै रत्नजातैर्विचित्रैः
पाल्यन्ते स्नेहदृष्ट्या मृगवनविहगाः पुत्रकल्पास्त्वांके ।
सिंहव्याघ्राः करीन्द्रा विविधवनचरा वैरभावं त्यजन्तः
प्रेमाबद्धाः प्रसन्नाः प्रभुगुणकलिताश्चांगणे ते चरन्ति ॥५॥

त्वं वै शीर्षे वहसि धवलां जाह्नवीं पुण्यतोयां

स्निग्धाऽनीला गलति यमुनापुण्यधारा शुभांगे।
शामच्छाये तव कुटिचये योगिनो ध्यानमग्ना
मौनं भक्त्या यजनपरमा ब्रह्मचर्यं चरन्ति ॥६॥

मौलौ छत्रं विशालं रविकरखचितं व्यातनोत्यम्बरं ते
सायं नक्षत्रमाला शशिकरधवला दीप्यते चोद्ध्र्वभागे।
उत्तुंगैर्धूम्रशीर्षैः सितहिमखचितैर्मण्डितो दीप्तकान्तिः
मूर्तः श्रीशेषनागः फणशतमुकुटैः राजसे भो यथाग्रे ॥७॥

रम्यान्ते तव पुण्यकुञ्जगहने पत्नीवियोगाहतः
शम्भुर्योगपरायणः सुनिभृतं तेपे तपःकृच्छ्रकम्।
प्राणारामविभुं समेत्य दयितं ध्यानेन पद्मानना
लेभे कान्तमनिन्द्यसुन्दरतनुं भर्गं सती पार्वती ॥८॥

अभ्यस्यन्ते तपांसि व्रतनियमपरैः योगिभिस्त्वद्गुहायां
रम्ये केचिद्वनान्ते विरलकटिकटे ध्यायन्तिदेवमिष्टम्।
स्निग्धच्छायाभिरामे सुखजपनिरताः केचन प्रेमयुक्ताः
शान्ते त्वत्कुञ्जगेहे शुभयजनपरा आत्मयागं चरन्ति ॥९॥

एवं त्वं शैलराज त्रिभुवनमहितः कीर्तिमान् श्रीगुणाढ्यो
नानातीर्थाभिरामो विलससि नितरां रत्नराजिप्रदीप्तः।
बालार्कारक्तमौलिः कनककरशतोद्भासितांगच्छटाभि-
रानीलव्योमरेखां भजसि सुविमलां विश्ववन्द्य हिमाद्रे ॥१०॥

मध्येश्यामं जलदपटलं कृष्णसाराजिनं ते
विद्युल्लेखा कटिविलसिता मौञ्जशोभां बिभर्ति।
स्रोतस्विन्या विमलसलिलैर्यज्ञसूत्रं दधानः
आभासि त्वं कुसुमनिकरैर्ब्रह्मचारीव मौनम् ॥११॥

एवं चान्तविहीनरम्यविततिं दिक्चक्रवालान्तगां
धृत्वा पादतटात् सुनीलजलधेस्तीरात्तभूम्यायताम्
सुश्यामां फलपुष्पनिर्झरमयीं तीर्थाभिरामामिमां
रक्ष त्वं गिरिराज भारतभुवं देवात्मने ते नमः ॥१२॥

## ओम् तत् सत्





# भारतवर्षे वैदिककालीना शिक्षापद्धतिः

लक्ष्मीचंद्र शास्त्री

१. **समाजव्यवस्था :–**

देशेऽस्मिन् प्राक्तन काले समाजव्यवस्था कथमासीदिति न केऽपि सुनिर्णय-पुरस्सरं वक्तुं प्रभवन्ति। विश्वस्य सृष्टिः कथं बभूव इत्यत्रापि-अनेकानि मतानि विवादाश्च सन्ति। अस्मिन् विषये वेदैकशरणाः वैदिका वेदैरेव चिन्तयन्ति। राष्ट्रस्यास्य सृष्टिस्थित्यादिसामाजिकविषया वेदशास्त्रादिप्रमाणेन प्रपंचीक्रियन्ते मया।

२. **वर्णाश्रमपद्धति :–**

वेदे शास्त्रे च वर्णाश्रमविषये तत्र तत्र उल्लेखो दृश्यते, तथापि अस्याविर्भावः कथं क्व संजातः, कथं वा अस्य विस्तारः प्रादुर्बभूव, किमर्थम् वर्णाश्रमव्यवस्था ऋषिमुन्यादिभिरंगीकृताऽऽचरिता च। इमं विषयं सप्रमाणं विशदीकरोमि।

३. प्राक्तने काले शिक्षापद्धतिः कथमारब्धा ? कथं वा जना अस्मिन् विषये श्रद्धालवो बभूवुः, कीदृशेन मार्गेण शिक्षाप्रसारार्थं ऋषिमुन्यादयः प्रावर्तन्त। शिक्षायाः विस्तारः अनेकेषु क्षेत्रेषु कथं कृतः इत्यादिकं अस्मिन् भागे निरूप्यते।

४. अस्मिन् देशे प्रायः सर्वे महापुरुषाः विद्यैकशरणाः आसन्। विद्यया सुखमिच्छद्भिरैतिहासिहकमहापुरुषैः विद्यां सफलीभूतां सुविन्यस्तां आदृतां सर्वप्रियां च कर्तुं कीदृशः उपायोऽवलम्बितस्तदर्थं कियान् प्रयत्नः कृतः? देशकालानुसारेण श्रुतिसम्मता अध्ययनाध्यापनव्यवस्था कथं दृढीकृता? विद्यासमधिगत-ज्ञान-मार्गावलम्बिनः जीवनसाफल्यं विद्यामेव मन्यमानाः शरीरसंरक्षणार्थं, अर्थार्जन-व्यवस्थां अर्थव्ययव्यवस्थां च आदानप्रदानरूपेण कथं निर्णयामासुरित्यस्य विस्तरोऽत्र क्रियते। उपर्युक्तविषयं दृढीचिकीर्षुभिः ऐतिहासिकैः विद्यां ज्ञानं वा सनातनीकर्तुं गुरुशिष्ययोः कस्सम्बन्धः आवश्यकः, केन वा सम्बन्धेन कीदृशविद्यारक्षा स्थिरा भवेत् इति मन्यमानाः कमुपायमाललम्बिरेऽस्य विन्यासः अस्मिन्नुल्लासे स्पष्टीक्रियते।

५. गुरूणां प्रकार :–

वेदा नाम-गुरुच्चारणानुच्चारणपूर्वकः यः शब्दसमुदायः सः वेदः इति कथ्यते महद्भिः पण्डितवर्यैः। आर्यावर्तेऽस्मिन् कदा वा वेदः आविरभूत्, कथं अस्य प्रसृतिः संजाता इत्यस्मिन् विषये विचारयद्भिः अस्माभिः गुरुपरम्पराश्रयणीया। प्राक्तने काले कण्ठस्थविद्यैव सर्वत्र सदैव विराजते स्म। अधुनातने काले प्राचीनगुरुपरम्परापद्धतिः अत्यन्तदुर्लभैव क्वचित् क्वचित् दरीदृश्यते।

**शिवे रुष्टे गुरुस्त्राता, गुरौ रुष्टे न कश्चन।**

शरीरमेव मातापितरौ जनयतः। गुर्हि विद्यातः तं जनयति, तच्छ्रेष्ठं जन्म इत्याद्युदाहरणपुरस्सरं गुरुपरम्पराविद्याप्रसारः, गुरुशिष्ययोः सम्बन्धः, गुरोर्महत्वं इत्यादिकं विस्तरशः विशदीक्रियते।

६. विद्यार्थी :–

कर्मणैव संसिद्धि लभते नरः। तच्च कर्म विद्याधीनम्, विद्या तु नित्यानित्यवस्तुविवेकज्ञानार्थं कारणम्। यः विद्यामधीते सः वेत्ति अत एव सः विद्यार्थीति कथ्यते। विद्यार्थी 'अन्तेवासी' इति केचन औपनिषदाः कथयन्ति। उपनयनसंस्कारानन्तरं गुरुकुले गत्वा गुरोरादेशानुसारं गुरुशुश्रूषापूर्वकं गुरुकुल एव यो विद्यामभ्यस्यति सः अन्तेवासीति नाम्ना प्रख्यायते। भारतेऽस्मिन् देशे वर्णव्यवस्था, आश्रमव्यवस्था च विद्याप्राप्त्यर्थमेव प्रपंचीकृता इति पुराणेतिहासधर्मशास्त्राध्ययनेन सुतरां ज्ञायते। उपर्युक्तविषये ब्राह्मणादिग्रन्थेषु विद्यमानानि अनेकानि वाक्यानि प्रमाणीक्रियन्ते।

७. समिद्धरः सन् श्रोत्रियं ब्रह्मनिष्ठं गुरुं गत्वा अभिवादनपुरस्सरं गुरोः पादोपसंग्रहणं कृत्वा गुरोरादेशपूर्वकं, गुरोः समीपे उपविश्य, गुरूपदिष्टां विद्यां अभ्यस्येत्। अजिनवस्त्रधारी यज्ञोपवीती दण्डधारी गुरुसेवातत्परः संयमी भूत्वा यो ब्रह्मचारी गुरुकुले एव उषित्वा गुरोरादेशं शुश्रूषमाणः विद्याध्ययनं करोति स एव विद्यार्थिशब्देन अभिधीयते। सज्जनैः विद्वद्वरेण्यैः वस्त्रदण्डाहारादिनियमाः आपस्तम्बबोधायन-भरद्वाज-वसिष्ठ-विश्वामित्रप्रभृतिभिः, तत्तच्छाखाध्येतृणां तत्तद्गोत्राणां, तत्तद्वर्णानां कृते ,उल्लिखिताः। एवं स्मृतिरत्नाकर-कृत्यरत्नाकर-स्मृतिमहोदधि-मनुस्मृत्यादिग्रन्थेषु विद्यार्थिनियमाश्च तत्र तत्र सविस्तरं स्पष्टीकृताः।

८ यथा च उपर्युक्ताध्याये विद्यार्थिनां दण्डाहारादिनियमाः उल्लिखिताः तथैव अस्मिन्नध्याये विद्यार्थिनां व्यवहारः कथं भवेदित्यत्र विषये श्रुतिस्मृत्यादि-प्रमाणपुरस्सरं प्रपंचीक्रियते। एवमेव गुरुं प्रति विद्यार्थिनां व्यवहारः, मातृवत्परदारेषु इत्युक्तदिशा स्त्रीणां विषये विद्यार्थिनां कर्त्तव्यं वृक्षगुल्मपुष्पादीनामनुच्छेदः, तैलमर्दनं, मांसभक्षणं, परस्त्रीप्रेक्षणं,-सुगन्धद्रव्योपसेवनादीनां निषेधः, भिक्षाचरणं, गुरोरनुगमनं-अधश्शयनादि व्यवहारः तत् तद्वर्णानां तत् तत्तद्गोत्राणां कृते सामान्यविशेषप्रमाणपूर्वकं धर्मशास्त्रावलम्बनं मर्यादया स्पष्टीक्रियते।

९. **पुरा युगेषु नारीणां मौंजीबन्धनमिष्यते**
**अध्यापनं च वेदानां सावित्रीग्रहणं तथा** इत्यादि स्मृतिश्लोकपर्यालोचनया पवित्रेऽस्मिन् भारते देशे स्त्रीशिक्षा प्राचुर्येण प्रचलति स्म। एवं उपनिषदि गार्गी-मैत्रेयी-आदीनां स्त्रीणां धर्मकर्मात्मज्ञानादिविषये उत्कृष्टं ज्ञानमासीदिति ज्ञायते। ऋग्वेदे शतपथब्राह्मणे च उर्वशी-पुरुरवसोः कथा अस्ति। तस्यां कथायां उर्वश्याः ज्ञानम् पाण्डित्यं च दरीदृश्यते। एवमेव ब्राह्मणग्रन्थेषु पुराणोपपुराणादिषु स्त्रीणां पाण्डित्यविषये नैकान्युपाख्यानानि सन्ति। स्त्री-शिक्षाः उन्नतिः अवनतिश्च कथं संबभूव इत्यस्मिन् विषये वेदब्राह्मणारण्यको-पनिषद्पुराणेतिहास-प्रमाणैः विशदीक्रियते।

१०. पुरा भारते प्रायः जनाः वेदैकशरणाः वेदार्थज्ञानतत्पराः वेदविहितकर्मानुष्ठा-तारश्चाभवन्। "शिक्षा-कल्प-व्याकरणं निरुक्तं ज्यौतिषं तथा छन्दश्चेति षडंगानि वेदस्य आहुः मनीषिणः इत्युक्तदिशा षडंगाध्ययनाध्यापने निरता आसन्। कालक्रमेण वेदविहितकर्मणि केचन पराङ्मुखा भूत्वा उपनिषदर्थ-प्रतिपादने आत्मज्ञानविषये च श्रद्धालव आसन्। परंतु ते वर्णाश्रमधर्म-सुसंबद्धाः आसन्। तत्र तत्र विद्याध्ययनार्थं पाठाशालाः, गुरुकुलानि विचारगोष्ठीसभाः, च आसन्। अस्मात् हेतोः विद्या सर्वत्र सर्वदैव विराजमाना आसीत्। शास्तारः केचन राजपुरुषाः अर्थकामभोगलोलुपाः बभूवुः। "राजा राष्ट्रकृतं पापं" इति वचनानुसारेण यदा राजा स्वार्थलोलुपः अभवत्, "यथा राजा तथा प्रजा" इति मर्यादया जनाः अपि तमेव राजानं अनुसरन्ति स्म। एतेन विद्या निम्न-मुखी बभूव। कालचक्रानुसारेण पवित्रेऽस्मिन् आर्यावर्ते पुण्ये क्षेत्रे भारते विदेशीयानां आधिपत्यं संजातम्। भारतीयविद्यानां वेदादीनां च निम्न-गतिरभूत्।



# श्री अरविन्दसूक्तम्

(गायत्री)

धियेषितं त्वमा गहि यज्ञं मे यज्ञवित्तम।
अरविन्द पुरुष्टुत ॥१॥

ऋभवश्चित्पुरा युगे यथाऽमृतत्वमानशुः।
युगेऽस्मिँ उ तथा त्वम् ॥२॥

मनीषया परां चितिं स्वपस्यया यदाऽगमः।
तमसस्पारमा तिरः ॥३॥

पथस्त्वं मे सुगान्कृधि हिरण्ययेन भानुना।
अमृतत्वाय गन्तवे ॥४॥

मर्त्तासस्त्वा अमर्त्यं धीभिर्नूत्नाभिरीमहे।
अस्माकं तच्छ्रुधी हवम् ॥५॥

पूतदृक्षं गातुविदं त्वां यज्ञस्य सप्ततिम्।
इयं मे धीतिरा नशत् ॥६॥

उषर्बुधास एतन दिवश्चिद्रोचनादिह।
मर्तो युष्मान्नमस्यति ॥७॥

देवासः प्रत्नथा पुनर्मानुषीषु समा गमन्।
चर्षणीषु त्वयेषिताः ॥८॥

अजयस्त्वं यदोजसाऽरविन्दोत्तमं स्वः।
उ लोकमकृणोरिह ॥९॥

अन्नात्प्राणमुदक्रमं प्राणादु मन आ रुहम्।
गमानि धीतिभिः स्वः ॥१०॥

तव क्रत्वा जयामसि वाजंवाजं भरम्भरम्।
तव सख्ये गविष्टिषु ॥११॥

रजनीकान्तस्य मोदिनः।



# भारतगौरवगाथा

अनन्तकृष्ण हरिकृष्ण दवे*

युद्धे प्रवृत्ते कुलनाशभीतस्त्यक्त्वा जिघांसां कुलबांधवानाम् ।
संन्यस्य शास्त्राणि विषण्णपार्थो न योत्स्य इत्येवमुवाच कृष्णम् ॥७९॥

स वासुदेवः करुणार्द्रचेतास्तं प्राज्ञभाषं बहुभाषमाणम् ।
बुबोधिषंतं कृपणं सखायं कर्तव्यमार्गं हितमादिदेश ॥८०॥

वधात् पराजेष्ट यतः स शोकाद् व्यलोपि मूढेन च जातिधर्मः ।
व्यामोह एनं परिबाधतेऽतोऽप्यपोहितुं तं भगवानुवाच ॥८१॥

वधो न कस्यापि भवेत् कदाचित् केनापि जंतोः पतितेऽपि देहे ।
यतोऽयमात्मा ह्यविनाशधर्मा पंचत्वमेवैति विनाशिदेहः ॥८२॥

देहे विनष्टेऽपि न चात्मलोपो देहांतराणि श्रयते पुनः सः ।
जातस्य देहस्य ध्रुवे च मृत्यौ मोहस्य शोकस्य कुतोऽवकाशः ॥८३॥

आत्मा त्वजन्मा न च तस्य नाशो देहादिवन्नास्य दशांतराणि ।
अतः स नित्योऽव्यय एकरूपः शरीरमेतद्विपरीतधर्मम् ॥८४॥

विवेकमाश्रित्य विचार्यमाणे हंतृत्वदृष्टिर्न विचारमर्हा ।
अतः स्थितप्रज्ञ उपेक्षते तां रागादियुग्मेषु समत्वबुद्धिः ॥८५॥

स ज्ञानयोगः समतैव बुद्धेरन्यश्च शास्त्रोदितकर्मयोगः ।
उभौ हितौ तौ तदपि द्वितीयः सौकर्यहेतोः प्रथमात् प्रशस्यः ॥८६॥

राजर्षयो ये जनकादयश्च गृहीतवंतः खलु कर्मयोगम् ।
फलाभिसंधिं च विहाय चक्रुः प्रारब्धयोगापतितं स्वकर्म ॥८७॥

---

*निवृत्ताचार्य; सगरामजी हाईस्कूल, गोंडल ।

कार्यं भवन्नास्य तथापि लोके प्रवर्तयेत् कर्म च तदर्थम् ।
कर्मप्रसक्तावपि ह्यात्मनः स निमित्तमात्रत्वमवैति योगी ॥८८॥
कर्माखिलं यः कुरुते तथापि फलेष्वसक्तोमपिसंनिविष्टः ।
कर्तव्यबुद्धिं न निषेवमाणो भक्तो हि बद्धो न स कर्मपाशैः ॥८९॥
प्रोतं स्वरूपे भज वस्तुमात्रं विभूतयो मेऽत्र पृथग्विकीर्णाः ।
लोकोत्तरं यद् गुणवच्च दृष्टं निबोध तन्मे विभवं विराजः ॥९०॥
संश्रावितो विस्तरतो विभूतीः परं च विश्वेश्वररूपमेव ।
दिदृक्षमाणं तमदृष्टपूर्वं प्रदर्शयामास स वासुदेवः ॥९१॥
दृष्टवाऽद्भुतं तत्परमेशरूपमाश्चर्यमूढः परमं च भीतः ।
सौम्यस्वरूपाय पुनश्च पार्थः क्षमापनैः प्रार्थितवान् परेशम् ॥९२॥
संदर्श्य पार्थाय मनुष्यरूपं निवार्य भीतिं च विमूढभावम् ।
कालस्वरूपस्य विवर्ण्य भावं प्रवर्तितो गंतुमिमं शरण्यम् ॥९३॥
अतस्तमेवं भगवत्प्रपत्तिरव्यक्तयोगाद्वरमाशशंसे ।
अथेश्वरस्य प्रियपात्रताया भक्तस्य चख्यावुपलक्षणानि ॥९४॥
क्षेत्रस्य तज्ज्ञस्य विभेदमुक्त्वा ज्ञानस्य रूपं विशदीचकार ।
गुणत्रयं तस्य च लक्षणानि गुणात्ययेऽदर्शि च भक्तनिष्ठा ॥९५॥
संसारमश्वत्थमिवोपवर्ण्य निःसंगताशस्त्रविदारणार्हम् ।
ऊर्ध्वं निनीषन्ननिवृत्तिमार्गं स्वात्मानुगीतः पुरुषोत्तमेति ॥९६॥
श्रद्धादिकं सत्त्वरजस्तमोभिस्त्रेधाप्यवेवेग्गुणसंविभागे ।
व्याचष्ट तस्मै हितभक्तियोगमेकांततस्तद्व्यधिकारयोग्यम् ॥९७॥
प्रपत्तियोगात्तु करिष्यमाणं वाक्यं प्रतिज्ञापितवान् सुमेधाः ।
स्वांतः स्थितं संतमसं स तस्य प्राचूचुरच्चित्तचकोरचन्द्रः ॥९८॥
स पांडुपुत्रो भगवन्मुखाब्जान्निर्यन्मरन्दस्तुतिगाहतृप्तः ।
निशम्य बोधे प्रकृतिं प्रपेदे वव्रे जयश्रीः कृतकृत्यमेनम् ॥९९॥
किंकार्यमूढस्य भवाटवीषु भ्रान्तस्य हेतोर्द्वंद्वमोहरात्रौ ।
धाम स्वमीप्सोः पुरुषोत्तमेन गीता धृतः स्नेहमयः प्रदीपः ॥१००॥



# राष्ट्रभाषा

सप्तर्षिदीक्षितः

राष्ट्रभाषामधिकृत्य गतप्रजातन्त्रदिनादारभ्य अस्मद्देशे महान् व्यामोहः समुपलभ्यते। तस्यैतस्य व्यामोहस्य निवर्तनोपायः, राष्ट्रभाषात्वे युक्ततमभाषाभ्युपगमद्वारा भवितुमर्हतीति यथावदत्र उपपाद्यते।

कस्याश्चन भाषायाः राष्ट्रभाषात्वेन स्वीकरणे द्वे योग्यते भवतः, क्लृप्ता कल्प्या चेति।

शिक्षितेषु तत्तत्प्रान्तजनेषु मध्ये अधुना आङ्गलभाषैव ऐकरूप्येण राज्यशासनादिव्यवहारेषु पाश्चात्यविज्ञानादिविषयविनिमयेषु च उपयुज्यमाना क्लृप्तां योग्यतां वहति। एवं, समग्रेऽस्मद्देशे विदेशषु च आङ्गलभाषयैव प्रयोजने सिद्धे यथोक्त व्यवहारेषु इतः परमेव कल्प्यायाः कस्याश्चन प्रान्तभाषायाः राष्ट्रभाषात्वेन स्वीकरणमन्याय्यमेव।

स्वतन्त्रभारते प्रान्तभाषास्वन्यतमां स्वकीयभाषां विहाय परकीयां पारतन्त्र्यकलङ्काङ्कितां च आङ्गलभाषां राष्ट्रभाषापदमधिरोपयितुं न साम्प्रतम् इति केचन अभिप्रयन्ति।

अधुना भारतस्य जीवनयात्रायां आहारव्यवहारेषु च पाश्चात्यप्रथा स्वैरप्रविष्टा प्रतिदिनं स्वप्रतिष्ठां द्रढयन्ती च परिदृश्यते। सेयमवस्था (कलि) कालप्रवाहबलेन दुर्वारा अतएव अन्यथानुपपत्या अङ्गीकार्येति अभिज्ञा अपि आमनन्ति। न कोऽपि तत्र विप्रतिपत्तिं पारतन्त्र्यकौलीनं वा प्रतिपद्यत इव। सति चैवं, पाश्चात्यभाषया केवलं किमपराद्धं, येन तत्तिरस्करणं सङ्गच्छतां?

विना कालावधिं परकीयभाषायाः भारते सदास्थितिः नोचिता, भाषामूलकत्वाच्च स्वसभ्यतादिसंरक्षणस्य, स्वकीया काचन भाषा राष्ट्रभाषात्वेन अभ्युपगन्तव्या इति केचन मीमांसन्ते। तेषामेषा मीमांसा सरससँल्लापनिर्विशेषा, कार्यांशे तु विरसा दरीदृश्यते।

हिन्दीभाषायाः बहुजनभाषितत्वलोभ हेत्वाभासेन कथञ्चित् स्वकीयत्वं परिकल्प्य, राष्ट्रभाषात्वं चाभ्युपगम्य, किमस्माभिरधुना साधितम्? दक्षिणापथे कोलाहलः, समग्रे भारते अनिर्वचनीयो व्यामोहः, एतदुभयप्रयुक्तं मिथः ऐकमत्यशैथिल्य, इत्यादिकमेव साधितमिति यथार्थज्ञा जानीयुः। विना जनैकमत्यं, राष्ट्रभाषायाः स्वसभ्यतादिकस्य वा सम्यक् प्रतिष्ठापनं वन्ध्यासुतवत् अलीकदुर्विलसितमेव।

अथ, "सर्वः स्वार्थं समीहते" इति रीत्या भारतस्य ऐकमत्यापेक्षया हिन्दीभाषाया एव राष्ट्रभाषात्वं केषाञ्चिदिष्टं, तर्हि अस्तु नाम तत्तथा। नात्र प्रकृतं समग्रभारतस्य राष्ट्रभाषाप्रयुक्तं विचारं विहाय, पक्षपातादिभयभूयिष्ठस्य अप्रकृतविषयस्य औचित्यविचारं कर्तुमुंचितं।

वस्तुतस्तु, सर्वप्रान्तबाह्यायाः कस्याश्चन भाषायाः राष्ट्रभाषात्वाभ्युपगमे, अधुनास्माभिरनुभूयमानस्य व्यामोहस्य ध्वंसः सुकरः। "सर्वनाशे समुत्पन्ने अर्धं त्यजति पण्डितः" इति न्यायेन भारतस्य ऐकमत्यसिद्धये लौकिकव्यवहारसौलभ्याय च आङ्गलभाषैव यथापूर्वं अस्मद्देशे अनुवर्तताम्। भारतीयसभ्यतादिप्रत्युज्जीवने परमार्थतः यदि श्रद्धा तर्हि "मात्सर्यमुत्सार्य विचार्य कार्यं" संस्कृतभाषायाः, सर्वेषां शास्त्राणां वेदानां च सम्यक् शिक्षणार्थं तत्तद्विषयगौरवानुसारं यथेष्टं वित्तं व्ययीकृत्य भूयान् प्रयत्नो विधीयताम्।

"कर्मण्येवाधिकारस्ते मा फलेषु कदाचन" इति भगवतो वासुदेवस्य वचनानुरोधेन फलेग्रहित्वे माध्यस्थ्यमवलम्ब्य सर्वजनसाधारणानुकूलं शासकैः स्वनियोगोऽनुष्ठीयतां, येन सर्वप्रान्तभाषाणां समाना प्रतिष्ठा, अविच्छिन्नः ऐहिकाभ्युदयः, आमुष्मिकश्रेयस्सिद्धिश्च भगवत्कृपया भूयासुः, इति शम्॥

*

श्मशानं परित आवरणभित्तिर्निरर्था। कुतः? येऽन्तर्गतास्ते बहिर्नागच्छन्ति, ये च बहिष्ठाः तेऽन्तर्गन्तुं नेच्छन्ति।

*

तस्मिन् नगरे मया वर्षमेकं व्यतीतं, एकस्मिन्नेव दिने।

*

# पद्मिनीपरिणयम्

[अनुवर्तमानम्]

पंचमः सर्गः

तिरुक्कण्णपुरम्
श्रीनिवासाचार्यः

तत्राहुतं नैव हि किञ्चिदासीत्
तथैव नैवापहुतं च किञ्चित्।
कृत्वाप्रवर्ग्यं विधिवद्द्विजास्ते
चक्रुस्तथैवोपसदो विधिज्ञाः॥ ३१॥

प्रातस्तनं तत्सवनादिकर्म
तथैव सोमाभिषवं च चक्रुः।
माध्यन्दिनीयं सवनं, तृतीयं
अन्यच्च चक्रुर्द्विजसत्तमास्ते॥ ३२॥

अग्निश्चितश्शिल्पविधानविद्भिः
चित्योऽस्य राज्ञः कनकेष्टकाभिः।
गरुत्मतो विस्तृतपक्षभाजः
समाकृतिस्तत्र विनिर्ममे तैः॥ ३३॥

तत्तत्समुद्दिश्य तु दैवतं, ये
सञ्चोदिताः पक्षिवृषोरगाद्याः।
तांस्तान्ययुञ्जंश्चयने कृशानोः
पशून्द्विजाः कल्पविदः क्रमात्त॥ ३४॥

तस्याश्वरत्नं परिचर्यं राज–
पत्नी कृपाणेन शशास चैतत्।
वपां समुद्धृत्य ततो हि ऋत्विक्
समाहितस्तां श्रपयांचकार ॥ ३५ ॥

भूपः किलाघ्राय स धूमगन्धं
अस्या जहौ पापततीः क्षणेन।
विपच्य चाङ्गानि तुरङ्गमस्य
वह्नावथर्त्विङ् निकरा अहौषुः ॥ ३६ ॥

आदौ चतुष्टोममथो द्वितीयं
उक्थ्यं तृतीयञ्च तथातिरात्रम्।
इतिक्रमेणात्र तुरङ्गमेधः
त्र्यहो यथाकल्पमकारि तेन ॥ ३७ ॥

सदक्षिणात्वेन महीमदात्स्वां
दिग्भिश्चतुर्भिः खलु संविभक्ताम्।
अध्वर्युहोतृप्रभृतिभ्य एष
भूपश्चतुर्भ्यस्त्वथवाजिमेधे ॥ ३८ ॥

ते तां प्रगृह्याथ नृपं तमूचुः
नार्हा वयं तापसधर्मनिष्ठाः।
वोढुं भुवं तेन हि किञ्चिदस्या
मूल्यं भवान्यच्छतु नो मुनिभ्यः ॥ ३९ ॥

इतीरितं तद्वचनं निशम्य
राजापि तेभ्यः खलु रत्नहेम्नाम्।
राशीन्ददौ गाश्च तथा द्विजेभ्यः,
सर्वेभ्य एव त्वमितं धनादि ॥ ४० ॥

नानर्चितः कश्चन विप्र आसीत्,
नामानिता वात्र परेऽपि वर्णाः।
अहर्निशं षड्रसयुक्तमन्नं
जग्ध्वा न चासीत्क्षुधितश्च कश्चित् ॥ ४१ ॥

इत्थं मखं तं विरचय्य भूपो
दत्वा हिरण्यादि समागतेभ्यः।
द्विजेभ्य एतान्प्रणनाम मूर्ध्ना
जग्राह तेषां विविधाशिषश्च ॥ ४२ ॥

यज्ञे समाप्ते द्रुहिणस्य सूनुः
वसुं सुतेप्सुं तव वंशवृद्ध्यै।
अथर्वदृष्टविधिभिश्च मन्त्रैः
इष्टिं करिष्यामि नृपे"त्यवादीत् ॥ ४३ ॥

ततो विधिज्ञस्स हि पुत्रियेष्टिं
कुर्वन्नहौषीदनले हवींषि।
ततस्समिद्धात्खलु हव्यवाहात्
तेजोमयः कश्चनदिव्यरूपः ॥ ४४ ॥

पुरो नरः प्रादुरभून्नृपोऽस्य
तेजस्वि तद्भास्करतुल्यवर्ष्म।
निरीक्ष्य, पप्रच्छ गुरुं "कुतोऽयं
को वा कुतस्त्य"स्त्विति विस्मितस्सन् ॥ ४५ ॥

"अपां पतेस्सूनुरयं महात्मे–"
त्युक्ते वसिष्ठेन, स भूपहस्ते।
पत्न्यास्समक्षं रुचिरे सुगन्धे
कल्हारपुष्पे तु शुभे प्रदाय ॥ ४६ ॥

"आघ्रापयन्त्वां महीषीं नरेन्द्र!
पुत्रीञ्च पुत्रञ्च सहाप्नुयास्त्वम्।
इत्येवमुक्त्वा स तु तत्र वह्नौ
विशन्हि नेत्राविषयो बभूव ॥ ४७॥

भूपोऽतिहृष्टो महिषीकरेऽदात्
कल्हारपुष्पे किल यज्ञलब्धे।
आघ्राय ते पुत्रफले वरिष्ठे
सा सुन्दरी गर्भमधत्त तूर्णम् ॥ ४८॥

प्रादुर्बभूवे ह्यथ गर्भचिह्नैः
देव्याश्शरीरे क्रमशः प्रवृत्तैः।
तच्चूचुकेऽचूचुरतां प्रसून–
गुच्छाग्रवर्तिभ्रमरस्य शोभाम् ॥ ४९॥

देव्यास्सुसूक्ष्मापि च मध्ययष्टिः
आसीत्तदा नेत्रयुगस्य पात्रम्।
अगाधताभागपि नाभिरस्याः
देव्या बभूव क्रमशस्सुगाधः ॥ ५०॥

प्राप्यापि भोग्याखिलवस्तुजातं
मृद्भक्षणेऽस्या रतिरुद्बभूव।
स्वतोऽवरोधाखिलकार्यजात–
व्यग्रापि, साऽऽलस्यमवाप तन्वी ॥ ५१॥

हंसीगतेर्हि स्वयमेव मन्दा,
गतिः पुनर्मन्दतरा बभूव।
स्वतोऽतिसौन्दर्यनिधेरमुष्याः
कान्तिश्शरीरे द्विगुणीबभूव ॥ ५२॥

अन्तस्थसत्वा ह्यवनीपपत्नी
शोभामपूर्वां वपुषा दधाना।
शालेर्हि सान्तः कणिशस्य रम्यां
पुष्टस्य शोभामधरीचकार॥ ५३॥

एतानि चिह्नानि विलोकयन्स
भूपस्तु तस्याः खलु दोहदानाम्।
संपादने व्यग्रमनाः, प्रसूतेः
प्रतीक्षमाणस्समयं बभूव॥ ५४॥

सा सुन्दरी मासि शुभे हि चैत्रे
रोहिण्यभिख्याजुषि मङ्गलर्क्षे।
प्रासूत कन्यामयपुत्रमन्यं
अपत्ययुग्मं प्रभया सुदीप्रभ्॥ ५५॥

श्रुत्वा प्रसूतिं तनयद्वयस्य
नृपो दिदृक्षुः कुतुकादरिष्टम्।
स प्राविशत्पूर्णघटश्च चूत-
पत्रैर्वितानैस्समलङ्कृतं तत्॥ ५६॥

प्रविश्य पूर्वं नृपतिस्स्वदेह-
कान्त्याखिलं वेश्म विभासयन्तीम्।
तेजोमयीमप्यथ दृश्यरम्य-
विभक्तसर्वावयवां ददर्श॥ ५७॥

सुशैशवेऽप्याननरम्यकान्त्या
राकोद्भवं चन्द्रमसं हसन्तीम्।
स्वनेत्रदीप्त्या परिभावयन्तीं
दळानि रम्याणि नवोत्पलानाम्॥ ५८॥

न्यक्कुर्वतीं ताम्ररुचाऽधरस्य
भग्नप्रवाळप्रवरस्य शोभाम्।
तिलप्रसूनस्य मदं स्वनासा–
दण्डेन सर्वं परिमृन्दतीं च ॥ ५९॥

ग्रीवाश्रिया शङ्खरुचिं हरन्तीं
दृग्भ्यां द्विरेफाञ्चितपद्मकान्तिम्।
नीलालकैर्ध्वान्तचयस्य शोभां
भ्रूभ्यां नताभ्यां स्मरचापदर्पम् ॥ ६० ॥

तां पल्लवाताम्रतलैस्तु पाणि–
पादैर्विभान्तीं मृदुलाङ्गुलीभिः।
फुल्लारविन्दैर्मुकुलैश्च पूर्णां
नव्यामिवान्यां नलिनीं मनोज्ञाम् ॥ ६१ ॥

आनन्दसन्दोहदुघामरिष्टं
उपेयुषामुत्तमरूपभाजाम्।
"जन्मान्तरं प्राप्तवती किमु स्यात्?
अनङ्गपत्नी"ति धियं ददानाम् ॥ ६२ ॥

ददर्श पुत्रीं, तदनु प्रजात–
सुतं च तस्यास्सदृशं हि रूपे।
"हरप्रदग्धो मदनश्शिशुत्वं
प्रापे"ति संशीतिकरं प्रहृष्टः ॥ ६३ ॥

सोऽपत्ययुग्मे विनिविष्टदृष्टिः
तृषा हि पश्यन्न तु तृप्तिमाप।
प्रपां तृषार्तः प्रविशन्सुशीताः
अपः पिबंस्तान्न जहाति तूर्णम् ॥ ६४ ॥

तयोस्स कुर्वन्किल जातकर्म
भूपस्स्वकीयस्य कुलस्य वृद्धयै।
ददौ द्विजेभ्यो बहु नैचिकीर्गाः[1]
वासोहिरण्याविकरूप्यकाणि ॥ ६५ ॥

आपृच्छतः पुत्रजनिं स्वभृत्यान्
सम्पूर्णकामान्विदधत्प्रहृष्टः।
धृतानि सर्वाण्यपि भूषणानि
दत्वाऽवतस्थे स तु जातमात्रः ॥ ६६ ॥

स द्वादशेऽह्न्यनयोस्तु नाम
विधातुकामस्सुतयोर्नरेन्द्रः।
वसिष्ठमभ्यर्थयति स्म, सोऽपि
चिकीर्षुरस्येप्सितमाजगाम ॥ ६७ ॥

सोऽपत्ययुग्मं किल दिव्यरूपं
दृष्ट्वा मुनिर्हृष्टमना विचिन्त्य।
तां पद्मपत्रायतलोचनत्वात्
पद्मिन्यभिख्यां तनयां चकार ॥ ६८ ॥

तथैव पद्मिन्यनुजाततायाः
स पद्मकाख्यं तनयं चकार।
यथाविधानं कृतनामधेयौ
महर्षिणा तावधिकं व्यभाताम् ॥ ६९ ॥

यथा सुतावङ्गविवर्तनेषु
क्षमौ, तदा पार्थिव एष भद्रे।
जन्मर्क्षयुक्ते दिवसेऽनयोस्तत्
औत्थानिकं मङ्गलमाततान ॥ ७० ॥

---

१. उत्तमा गोषु नैचिकी इत्यमरः।

नृपस्तयोरर्भकयोर्हि तत्तत्-
प्रत्यङ्गसौन्दर्यनिमग्नचित्तः।
तास्तानवाः प्रेक्ष्य च रम्यचेष्टाः
स्वं धन्यजन्मानममंस्त हृष्टः॥ ७१॥

यदा तु पद्भ्यां किल चक्रमाहा
तदा स आरात्स्थित एष भूपः।
आश्लेषमभ्यर्थ्य, तयोस्तु गात्र-
स्पृष्ट्या नवं स्पर्शसुखं ह्यविन्दत्॥ ७२॥

मुग्धार्धजल्पान्स तयोर्निशम्य
रम्या "न्प्रिये! श्रोत्रमिहास्मदीयम्।
धन्यं यतस्तोक[1]गिरो ह्यपूर्णाः
श्रुता अनेने"ति बभाण कान्ताम्॥ ७३॥

हिरण्यपात्रे परिविष्टमन्नं
भुञ्जान एषोऽधिपतिः प्रजानाम्।
स्वतोकपिष्टं सुरलोकलभ्यात्
मेनऽमृतादभ्यधिकं तदानीम्॥ ७४॥

तैस्तैरर्भकचेष्टितैर्बहुविध रम्यैस्तयोस्सस्मितैः
अम्बामातुलताततशब्दबहुलैर्मुग्धैर्नवैर्जल्पितः।
रूपेणाप्यतिमानुषेण सततं संप्रीयमाणो नृप-
स्त्वासीच्छ्रोत्रमनोदृशां प्रविधत्पूर्णां नवां पारणाम्॥ ७५॥

इति श्रीपद्मिनीपरिणयकाव्ये श्रीकृष्णनगरीयश्रीनिवासाचार्यविरचिते पञ्चमस्सर्गः।

---

अस्मिन्सर्गे आदितः ७४ श्लोकावधि उपजातौ निबद्धाश्श्लोकाः। अन्त्यस्तु शार्दूलविक्रीडिते। (१) अपत्यं।

# ॥ अथ षष्ठस्सर्गः ॥

अथ तयोस्सुतयोः खलु पद्मिनी
पितुरभूत्प्रथमं प्रियभाजनम्।
गुणवती रुचिरा प्रियभाषिणी
स्वजनमानससौधविहारिणी ॥ १ ॥

विहरणे निरतापि च शैशवे
न तु जहावुपकण्ठमसौ पितुः।
नृपतिरङ्कगतां स विधाय तां
निरवहन्महतीं पृथिवीधुराम् ॥ २ ॥

प्रियसुता सकलासु कलास्वपि
व्यरचयन्निपुणां गुरुभिर्नृपः।
निशितधीस्सुधियामपि मेधया
मुदमदात्परमां वसुकन्यका ॥ ३ ॥

सहभुवा जनने तुलसी यथा
घनसुगन्धभरेण महीयते।
सहजभक्तिभरेण हरौ तथा
नृपसुता भुवि सा महिताऽभवत् ॥ ४ ॥

सकलसात्वततन्त्रविदः पितुः
हरिपदार्चनसाधनसंभृतौ।
हिरपदार्चन-तत्परपूजने
हरिकथाश्रवणे चरता सदा ॥ ५ ॥

पितुरवेक्ष्य च शौरिपदाब्जयोः
असदृशीं परभक्तिमिहोत्तमां।
तदुपवर्णितदिव्यतनुं हरेः
उपनिशम्य तदर्पितमानसा ॥ ६ ॥

---

श्लोकाः ६. अवधि द्रुतविलम्बिते ग्रथिताः।

सततभावितशौरिपदाम्बुज-
द्वयसमर्पितचित्तसमुन्नता।
शमदमादिभृतां भुवि सत्तमा
प्रवरवर्ष्मगुणैश्च रराज सा॥ ७॥

शुक्ले हि पक्षे कलयेव चन्द्रः
दिने दिने सा ववृधे कलाभिः।
रम्यैः प्रतीकैश्च गुणैश्च सेयं
इत्थं व्यतर्किष्ट वयस्थ[1]यूथैः॥ ८॥

सा रामणीयकनिधिर्भवनं कलानां,
विद्यानिकेतनमथो निलयं दयायाः।
वैदग्ध्यवासभवनं सुजनत्वसीमा,
दाक्षिण्यमूर्तिरतुलो हरिभक्तिसिन्धुः॥ ९॥

किम्मानसी सृष्टिरियं विधातुः
वसन्तमित्रस्य किमु स्मरस्य।
सर्गः, किमन्यस्य नवस्य सृष्टिः
स्रष्टुर्नवास्याद्रमणीयरूपा ?॥ १०॥

भ्रमरनिकरशोभाहारिनीलालकेयं
मुषितमदनचापश्रीविराजन्नतभ्रूः।
स्फुरितशफरशोभाहारिनेत्रा मृगाक्षी
विकचविशदकुन्दश्रेणिनी काशदन्ता॥ ११॥

विमलमुकुरबिम्बश्रीविराजत्कपोला
क्षपिततिलसुमत्विड्रम्यनासा शुभाङ्गी।
अरुणमृदुलभास्वत्पक्वबिम्बाधरोष्ठी
विमलमुखशशाङ्का कम्बुकण्ठी मनोज्ञा॥ १२॥

गिरिशृङ्गतुङ्गनिविडस्तनी सरित्–
प्रवरभ्रमिभ्रमदनाभिगह्वरा।

---

श्लोकः ७. द्रुतविलंबिते, ८. उपजातौ, ९. वसन्ततिलके, १०. उपजातौ
११–१२. श्लोकौ मालिन्यां च ग्रथिताः। (१) तरुणः।

करमुष्टिमेयतनुमध्यमा स्त्रिय
वटपत्रसोदरपिचण्डलासुरा ।। १३ ।।

कुचवर्त्मगामिपदवर्तनी सदृङ्-
मृदुलोमराजिलसिताऽसितेक्षणा ।
गुरुणा नितम्बिजघनेन राजती
सुरसिन्धुरम्यपुलिनावलासिना ।। १४ ।।

हैमेन दाम्ना कुचभारधृत्यै
मध्यं व्यवेष्टिष्ट किमु त्रिवारम्" ।
इत्थं विशङ्क्या जनकेन रम्य-
वलित्रयेणाञ्चितमध्ययष्टिः ।। १५ ।।

रम्भातिगम्भीरतरोरुयुग्मा
श्रीपुत्रतूणीरविकल्पिजङ्घा ।
रक्ताब्जशोभाहरहस्तपाद-
तलाऽर्धचन्द्राभनखप्रभे"ति ।। १६ ।।

इत्थं शुभैरवयवैरुपचीयमान-
शोभान्वहं नृपतिभिस्स्मरतुल्यरूपः ।
वीरैस्सदाहृदयसद्मनिवेशिता सा,
नाजीगणद्धरिनिविष्टधिया तदन्यान् ।। १७ ।।

शौरिमहागुणवर्णनजन्य
प्रेमरसा भुवि तद्गतभावा ।
प्राच्यं गुरूनितरैर्दुरवापं
प्रेमभरं खलु साऽलभताशु ।। १८ ।।

प्रवृद्धकामा किल सा कृशाङ्गी
तद्गात्रसंस्पर्शसुखैकलोला ।
अलाभतस्तस्य नितान्तखिन्ना
भृशं निश्वास जहौ च निद्राम् ।। १९ ।।

---

१३–१४. श्लोकौ मञ्जुभाषिण्यां, १५–१६. श्लोकौ उपजातौ, १७. श्लोकः वसन्ततिलके, १८–१९ श्लोकौ दोधकेच ग्रथिताः (१) कुक्षिः

सङ्कल्पसङ्कल्पितदिव्यरूपं
देवं हि शौरिं हृदये निधाय।
शशाक नान्यत्र मनो निधातुं
भृशानुरक्ता सुभगाऽतिमुग्धा ॥ २० ॥

शय्या न वा पुष्पमयी कृशानु-
कल्पा, मृदुर्गन्धवहोऽग्निकल्पः।
सुधांशुरप्यर्यमघृष्टितिग्मः,
तस्याः किलासन्विपरीतरूपाः ॥ २१ ॥

अजानती सा तदवाप्त्युपायं
निध्याय तं चाश्रुनिरुद्धदृष्टिः।
निषिच्य चास्त्रैर्मृदुपुष्पशय्यां
निशामनैषीत्परितो लुठन्ती ॥ २२ ॥

एवं विनिद्रा किल सा ह्यनेका
क्षपा अनैषीन्मृदुसर्वगात्रा।
सन्तप्तसर्वावयवा स्वतापं
निश्वासधूमैरिव दर्शयन्ती ॥ २३ ॥

समानदुःखेन सखीजनेन
पृष्टा तु सा हृद्गतमाधिहेतुम्।
पिधाय मौनेन कथं कथञ्चित्
आश्वस्य निद्रामपि चान्तराऽगात् ॥ २४ ॥

पद्मिन्याः खलु तामनन्यविषयां भक्तिं परामद्भुतां
स्वाप्राप्त्यातिविवृद्धदुःखमतुलं संवीक्ष्य शौरिस्स्वयम्।
तस्याः खेदनिवृत्तयेऽथ कृपया स्वप्ने स्वमत्यादरात्
दिव्यं रूपमदर्शयत्सहृतया लीलाः कृताः काश्चन ॥ २५ ॥

सा पद्मिनी तत्र हि शौरिराजं
कन्दर्पकोटिप्रतिमानरूपम्।

---

श्लोकाः २४–२९ उपजातौ निबद्धाः।

ददर्श लीलाविहृतीर्विचित्राः
स्वमानसोल्लासकरीश्च तस्य ॥ २६ ॥

स्वप्ने हि हृदयचोरं शौरिं सर्वाङ्गसुन्दरं देवम् ।
तेजोमयं गुणाढ्यं दृग्भ्यां साक्षान्निपीयेयम् ॥ २७ ॥

तद्दर्शिताश्च लीलाः तन्वङ्गी काश्चिदनुभूय ॥
हृदयेन मोदमाना पतिमेनं गाढमाश्लेष्टुम् ॥ २८ ॥

हस्तौ प्रसारयन्ती यदा न यातिस्म तत्तनुस्पर्शम् ।
सा हि विबुद्धा, हृदये तापं पूर्वाधिकं भेजे ॥ २९ ॥

नेत्रेऽश्रुपूर्णे ह्यधरश्च कृष्णः,
स्रस्ताः कराभ्यां वलयाश्च तस्याः ।
श्वासा भृशोष्णा अधिका निरीयुः,
क्लान्तानि पुष्पाणि शरीरतापात् ॥ ३० ॥

बाष्पपूर्णनयनां भृशतप्तां
सन्निरीक्ष्य मुहुरुच्छ्वसतीं ताम् ।
प्राह तत्प्रियसखी हरिणाक्षी
तत्प्रिये व्यवसिता रहसीदम् ॥ ३१ ॥

क्लृश्नासि तन्वि ! नितरां मानिनि ! नो वक्षि हेतुमाधेस्त्वम्
स्निग्धजनसंविभक्तः तापो हि भुवि भवति सोढव्यः ॥ ३२ ॥

एवं प्रोक्ता सख्या सालिं गाढं समालिङ्ग्य ।
सर्वं स्वाप्नं वृत्तं न्यवेदयद् धृदयचोरस्य ॥ ३३ ॥

स्वप्नेऽद्राक्षं सखि ! कलभमारुह्य मित्रप्रकाण्डैः
हस्त्यारूढैः परिवृत इहायाति शौरिर्हि देवः ॥
इत्यौत्सुक्यात्पुरवरमिदं भूषितं तोरणाद्यैः
मोचापूगीविटपिततिभिः पूर्णकुम्भैश्च सान्द्रम् ॥ ३४ ॥

---

शार्दूलविक्रीडिते, २६ श्लोकः उपजातौ, २७-२८-२९-३२ श्लोकौ आर्यायां, ३०-३१-३४ श्लोकौ इन्द्रवज्रायां च निबद्धाः ।

स्वप्नेऽद्राक्षं सखि ! सुवदने ! भाविनि स्वोद्विवाहे

पूगीरम्भातरुभिरभितश्चित्रमाल्यैश्च जुष्टम् ॥
रम्यैश्श्लाघ्यैर्मणिभिरमलैर्मण्डपे द्योतमाने
देवं शौरिं वृषभमतुलं सानुगं तं विशन्तम् ॥ ३५ ॥

स्वप्नेऽद्राक्षं सह मुनिगणैः ब्रह्मरुद्रेन्द्रमुख्यैः
देवैश्शौरेस्समुचितवधूं मां विनिश्चित्य, कार्यम् ।
सम्मन्त्र्यास्मत्परिणयविधौ शोभनैः क्षौममाल्यैः
भूषाभिर्मामधिकरुचिरां कुर्वतीं तत्र दुर्गाम् ॥ ३६ ॥

स्वप्नेऽद्राक्षं प्रवरसरसां ह्लादिनीनां च तीर्थैः
पूतैर्मन्त्रैर्द्विजगणवरैः प्रोक्षितां स्वस्तिवाकैः ।
साकं तेन प्रवरकुसुमोद्दामदाम्ना तु भर्त्रा
मामाबद्धप्रतिसरयुतां शौरिणा ह्यच्युतेन ॥ ३७ ॥

स्वप्नेऽद्राक्षं कलशनिवहान्भास्करार्चिर्विदीप्तान्
धृत्वा दीपान्मदनतरुणीतुल्यभाभिर्वधूभिः ।
प्रत्युद्यातं कनकरुचिरे पादुके न्यस्य कोणे
देवं शौरिं कलकलरवैर्मण्डपं तं विशन्तम् ॥ ३८ ॥

स्वप्नेऽद्राक्षं पटहनिनदैश्शङ्खभेरीनिनादैः
वंशीघोषैर्मुरजकलशीनिस्वनैश्चापि पुष्टे ।
तस्मिन्वेद्यां सवलयकरं मामकीनं करेण
गृह्णन्तं तं मधुरिपुमहं स्विन्नहस्ता विमुग्धा ॥ ३९ ॥

स्वप्ने दृष्टश्श्रवणमधुरैर्मन्त्रघोषैर्द्विजेन्द्रैः
दीप्ते वह्नौ परिधिलसिते विष्वगास्तीर्णदर्भे ।
वेद्यां शौरिः कलभगमने हव्यवाहं समन्तात्
गृह्णन्हस्तं मम सुवदने ! दक्षिणेन प्रसर्पन् ॥ ४० ॥

---

श्लोकप्रभृति ४३ पर्यन्ता स्वप्नदर्शनपराः श्लोकाः श्रीगोदादेवीद्राविड-गाथासच्छायाः "गोदागाथानाम्ना" प्रतिभायां संस्कृतअकाडमिना प्रकाशिताः ॥ प्रेषिताश्च तत्र ।

स्वप्ने दृष्टस्सखि ! जनिमतां संसृतौ मज्जतां न–
स्वस्मिन्जन्मन्यखिलजनने यश्शरण्योऽखिलात्मा ।
सोऽयं शौरिःकमलमृदुना पाणिना मामकीनं
पादं गृह्णन्दृषदि विदधत्सप्तपद्यां प्रियो मे ॥ ४१ ॥

स्वप्ने दृष्टस्स खलु सुभगः पद्मको मामकीनः
भ्राता वह्नेः परिसरगतां मां नयंस्तत्र शौरेः ।
हस्तस्याग्रे मम करतलं न्यस्य होमार्थलाजान्
आदायास्मत्करतलपुटे प्रक्षिपन्संप्रहृष्टः ॥ ४२ ॥

स्वप्नेद्राक्षमहम्मतङ्गजगतावावां प्रतोळ्यां पुरः
साकं शीतसुगन्धिवारिकलशैर्यान्तौ पुरं दक्षिणम् ।
लिप्तौ कुङ्कुमकर्दमेन सदनं संप्राप्य संस्नापितौ
माङ्गल्येन सुगन्धिचन्दनरसोन्मिश्रेण शीतांबुना ॥ ४३ ॥

व्यपेतनिद्रास्मि ततो वयस्ये ।
स्वप्ने प्रभाते किल शौरिणेत्थम् ।
निर्वृत्तपाणिग्रहणोत्सवास्मि,
सत्यं भवेत्कच्चिदिदं मदिष्टम् ? ॥ ४४ ॥

अलभ्यवस्तुन्यपि मेऽद्य तृष्णां
उत्पाद्य हन्त ! व्यथयन्ननङ्गः ।
प्रियो न किं, यत्सखि ! शौरिराजं
उद्दिश्य सन्तापयति त्रिसन्ध्यम् ॥ ४५ ॥

एवं विविक्ते बहू सल्लपन्त्योः
तयोर्नृपस्स्वां तनयां दिदृक्षुः ।
निशान्तमापत्परिचारिकाभिः
सखीजनैरावृतमात्मजायाः ॥ ४६ ॥

सा पद्मिनी हन्त ! निरीक्ष्य तातं
सन्तप्तसर्वावयवापि तूर्णम् ।

---

पूर्वस्मिन्पत्रे श्लोकः ३३ आर्यायां, श्लोका ३४ प्रभृति एतत्पत्रे ४२ पर्यन्ता मन्दाक्रान्तायां, ४३–४५ श्लोक शार्दूलविक्रीडिते, श्लोका ४४ उपजातौ च ग्रथिताः ।

शय्यां विहायात्मपितुः पुरस्तात्
स्थिताऽभवन्नम्रमुखी कृशाङ्गी ॥ ४७ ॥

निर्वर्ण्य भूपस्तनयामवादीत्
"भद्रेऽद्य को वा तव तापहेतुः।
तापः प्रवृद्धो हि करोति वर्ष्म-
कार्श्यं ह्रियालं वद निर्विशङ्का ॥ ४८ ॥

यद्वा मया ज्ञायत एव हेतुः
तापस्य ते पुत्रि! निगूहितोऽपि।
भद्रे कृशाया अपि गात्रशोभा
न हीयते यत्समुपैति वृद्धिम् ॥ ४९ ॥

ध्रुवं युवा कश्चन चित्तसौधे
त्वया निगूढं निहितोऽनुरूपः।
प्राप्तुं पतेस्सङ्गमिहार्हसि त्वं
द्रुसङ्गमं पुष्पवती लतेव ॥ ५० ॥

सहस्व तन्वि! कानिचिद्दिनानि तावदाश्वहं
पथा नृपोचितेन ते स्वयंवरं प्रकल्पये।
नृपेषु तत्र सङ्गतेषु सत्तमेषु हि त्वया
प्रियोऽनुरूप आदरात्पतिः प्रगृह्यतां स्वयम् ॥ ५१ ॥

इत्थं वदति नरेन्द्रे, साभृशमश्रूणि विसृजन्ती।
यत्किमपि वक्तुकामा प्राक्रमतेयं न चाशक्नोत् ॥ ५२ ॥

तदा तु हरिणेक्षणा नृपमुवाच तस्यास्सखी
"पितः प्रियमियं पतिं भुवनदुर्लभं काङ्क्षती।
स्वयञ्च दधती क्लमं निखिलमाळिवर्गं तथा
निरन्तरमहर्निशं विमनसं करोत्युत्सुका ॥ ५३ ॥

श्रीमति कृष्णपुरेशे देवे शौरौ निबद्धभावेयम्।
नान्यं कमपि युवानं द्रष्टुं वा मनुजमत्रेष्टे ॥ ५४ ॥

---

श्लोकाः ५०, ५१ पञ्चचामरे ५३ श्लो. ५२-५४ पर्यन्ता उपजातौ ग्रथिताः।

तातातीते कलये स्वप्ने देवेन शौरिणा साकम्।

निर्वृत्तपाणिपीडनमहोत्सवास्मी"ति मां ब्रूते॥ ५५॥

नान्यं नरं स्पृशेयं सखि चरणेनापि सव्येन।
इत्थं निर्णीतार्था कथन्न्वहं कामयेय नरं॥ ५६॥

यदि मे मनोरथोऽयं साफल्यं नोपयातीह।
प्रविशेयमब्धिमग्निं खादेयं कालकूटं वा॥ ५७॥

सर्वाङ्गसुन्दरतनोः शौरेर्देवस्य वक्षसाश्लेषम्।
कुचयुगलीयं यदिमे नोपेयात्तर्हि भाराय॥ ५८॥

अचीमूर्तेस्सुतनु देवस्य श्रीशौरिराजस्य।
कथमुद्वाहस्सुघट इत्येतन्नो विचारयति॥ ५९॥

सत्यं यदि मे भावो देवे शौरौ द्रढीयान् स्यात्।
स्यामहमङ्गीकार्या वरणीया प्रियतमा हि तेनापि॥ ६०॥

कर्तुमकर्तुं ह्यन्यत्कर्तुं वा प्रभवतश्शौरेः।
किंवा कर्तुमशक्यं त्वघटितघटनापटीयसो मुग्धे! ॥ ६१॥

सौलभ्येन च कृपया लसतस्सौशील्यपूर्णस्य।
यदि मयि करुणा प्रवहेत् तां शक्तः को निवारयितुम्॥ ६२॥

तस्माद्दयाप्रपूर्णे सौशील्यादिगुणाकरे शौरौ।
न्यस्तसमस्तात्मभरा नाहं शोच्येति मां वदति॥ ६३॥

इत्थमालिवचसा सुताशयं
ज्ञातवानवनिपो जगाद ताम्।
ते सुते! नरभुवः कथं पतिः
स्याच्छिवेन्द्रविधिपूजितो हरिः॥ ६४॥

अथ स शौरिरिहाद्भुतशक्तिमा-
नपि, समाधिमहो कृतमर्चया।
तव कृते व्यतिलङ्घ्य करग्रहं
कथमसौ तनुयात्तनयेऽनघे! ॥ ६५॥

---

श्लोकः पृथ्वीवृत्ते अन्ये ५५-५६-५७-५८-५९-६० तः ६३ आर्यायां, ६४ इन्द्रवज्रायां, ६५ आर्यायां प्रथिताः।

अथ रुचिं तव लोकविलक्षणां
कथमहं घटयेय पितापि सन्।
जहिहि दुर्लभवस्तु-मनोरथं
पुनरपीह विचिन्तय मद्‌गिरम्॥ ६६॥

इति वदन्तममुं नृपसत्तमं
चरणयोः प्रणिपत्य तु पद्मिनी।
विदधती भुवमश्रुपरिप्लुतां
अचकथद्वचनं स्खलिताक्षरम्॥ ६७॥

शौरिं स्वयम्मोहनदिव्यरूपं
लावण्यदीप्रावयवं हि तात!।
तं पूर्णचन्द्रप्रतिमानवक्त्रम्
रक्तप्रवालाग्र्यनिभाधरोष्ठम्॥ ६८॥

वक्त्रेन्दुनिर्गत्वरचन्द्रिकाभ-
स्मितेन चित्तानि विलोभयन्तम्।
प्रफुल्लपङ्केरुहचारुनेत्रं
नीलालकस्पृष्टललाटरम्यम्॥ ६९॥

आदर्शतुल्याम गण्डयुग्म-
संस्पर्शिकर्णोज्ज्वलकुण्डलाग्र्यम्।
शाखानिभैः कल्पतरोश्चतुर्भिः
दोर्भिर्दधानं पविशङ्खकादि॥ ७०॥

श्रियञ्च विद्युत्सदृशीं दधानं
श्रीकौस्तुभं वक्षसि दिव्यरत्नम्।
नानाविधैराभरणैः किरीट-
मञ्जीरमुख्यैर्मणिनिर्मितैर्हि॥ ७१॥

देदीप्यमानं परितः पुरस्तात्
भुव्यन्तरिक्षे मम मानसे च।

---

श्लोकः ६६-६७ द्रुतविलंविते च निबद्धाः। श्लोकाः ६८ इन्द्रवज्रायां, ६९ उपजातौ, ७० इन्द्रवज्रायां, ७१ उपजातौ च ग्रथिताः।

सदा स्फुरन्तं कमनीयरूपं
शक्तास्मि विस्मर्तुमहं कथन्तम् ? ॥ ७२ ॥

निमीलितेऽप्यक्षिणि यो मदन्तः
विद्योतते स्वप्नदशासु चैव।
नानाविधान्यस्तनुते विहारान्
मया, कथं विस्मरणीय एषः ॥ ७३ ॥

इत्थं तु चेदिपतिरात्मजया किलोक्तां
श्रुत्वा गिरं हृदि विषादमगादगाधम्।
कर्तव्यमत्र किमिहेत्यविदन्विमूढः
प्रागात्सशून्यहृदयो वसतिं प्रियायाः ॥ ७४ ॥

सुन्दर्या सह भूपतिस्स्वतनयामुद्दिश्य संचिन्तयन्
तस्यास्स्वान्तमसौ निमग्नममले श्रीशौरिराजे दृढम्।
संवीक्ष्यात्मसुताशयस्सुघटतां गच्छेत्कथं वेति सः
प्रष्टुं ब्रह्मसुतं गुरुं मुनिवरं द्रष्टुं दधे मानसम् ॥ ७५ ॥

एतस्मिन्समये समं दितिसुतैर्नाके सुराधीशितुः
शक्रस्य त्वभवत्समीकमतुलं घोरं जगन्नाशनम्।
प्रेक्ष्यैतत्स शचीपतिस्सह दिशापालैस्तु सम्मन्त्रयन्
दूतैश्चेदिपतिं सहायमवृणोत्तस्मिन्महायोधने ॥ ७६ ॥

राजापि सख्युरमराधिपतेर्मृधे तु
साह्यं विधातुमनुगान्स्वबलप्रधानान्।
सज्जान्विधाय, सबलो विविधैश्च शस्त्रैः
पूर्णं विमानमधिरुह्य ययौ स नाकम् ॥ ७७ ॥

इति श्रीकृष्णनगरीयश्रीनिवासाचार्यविरचिते श्रीपद्मिनीपरिणयकाव्ये षष्ठस्सर्गः ॥

---

श्लोकः ७२-७३ उपजातौ च ग्रथिताः। ७४ श्लोकः इन्द्रवज्रायां, ७५-७६ श्लोकः शार्दूलविक्रीडिते, ७७ श्लोकः वसन्ततिलके च ग्रथिताः ॥



# ॥ ॐ नमः शिवाय ॥

एम्. डी. पंडित*

नमाम्यथो कृपालयं शिवालयं शिवङ्करम् ।
उमापतिं जगत्पतिं महेश्वरं नटेश्वरम् ॥ १ ॥

विकारजातसर्गकर्मणि प्रजापतेर्युजम् ।
विकारजातपालने त्रिविक्रमस्य साधनम् ॥ २ ॥

विकारजातनाशकारि शक्तिधारिणं विभुम् ।
महोग्ररौद्ररूपिणं भवं भवाब्धिपारिणम् ॥ ३ ॥

प्रजासृतौ रजोजुषं प्रजास्थितौ सदात्मकम् ।
प्रजालये तमःस्पृशं गुणात्मकं च निर्गुणम् ॥ ४ ॥

त्रिपुण्ड्रभालपट्टकं त्रिशूलपाणिमीश्वरम् ।
त्रिलोकपापहारिणं त्रिनेत्रकं त्रयीमयम् ॥ ५ ॥

घोरवीरदक्षयज्ञनाशकं विनाशकम् ।
जगद्विनाशकृत्तृतीयनेत्रवह्निसंयुतम् ॥ ६ ॥

जटाकलापलीनमीननेत्रजह्नुकन्यकम् ।
महार्णवोत्थितोल्लसत्सुधामयेन्दुचूडकम् ॥ ७ ॥

महार्णवोत्थितोल्लसद्गराशनीलकण्ठकम् ।
भुजङ्गराजवेल्लिताखिलात्मकण्ठवीरुधम् ॥ ८ ॥

---

* एम्. ए. प्रगतसंस्कृताध्ययनकेन्द्र, पूनाविश्वविद्यालयः, पूना ।

विभूतिभूषिताङ्ग[illegible]तम् ।

दिगम्बरं सखर्परं भुजङ्गमेखलं शिवम् ॥ ९ ॥

उमाविरागजातरोषप्राप्तचित्समाधिकम् ।
उमानुपूरशब्दवेधभग्नचित्समाधिकम् ॥ १० ॥

महाट्टहासनादितान्तरिक्षभानुमण्डलम् ।
स्वताण्डवे कृतोर्ध्वबाहुवारितोडुमक्षिकम् ॥ ११ ॥

धगद्-धिनन् मृदङ्गशब्दकारिभिः पदभ्रमैः ।
विधूत भूमिमण्डलं प्रकम्पिताहिकुण्डलम् ॥ १२ ॥

डिमड्-डिमड्-स्वडामरध्वनिप्रपूर्णरोदसम् ।
सुराङ्गनावितालिकाभिगीतशङ्करास्वरम् ॥ १३ ॥

मस्तकस्थबालचारुचन्द्रहासशोभितम् ।
निरामयं सुखालयं नमाम्यहं शुभङ्करम् ॥ १४ ॥

अतीतशब्दशक्तये सुशब्दशास्त्रकारिणे ।
गुणात्मने गुणात्मकं गिरञ्जलिं समर्पये ॥ १५ ॥



केचन दोषान् उदारबुध्दया क्षमन्ते, यदि ते आत्मीयाः स्युः ।



असत्यं पुरुषं प्रति अन्तिमोपायः,
नारीं प्रति तु प्रथमचिकित्सा ।



"गृहं, मधुरं गृहम्" इति तु केनाप्यनूढेनैव लिखितम् ।

# आञ्जनेयस्तोत्रम्

बी. एस्. नरसिंह अय्यङ्गार*



वीर्यवान् धृतिमान्वक्ता भक्तानां प्रवरो हरिः ।
आञ्जनेयश्चिरञ्जीवी पातु मां सर्वदा भयात् ॥ १ ॥

बाल्यात्प्रभृति यः सर्वैर्देवैरपि सुपूजितः ।
यश्च दत्तवरः श्रीमान् बभ्राजे कपिपुङ्गवः ॥ २ ॥

भास्करस्यान्तिके स्थित्वा यो विद्यामग्रहीत् पटुः ।
मारुतिः स महाबुद्धिश्चित्ते तिष्ठतु मे सदा ॥ ३ ॥

पालयन् ब्रह्मचर्यं यो नैष्ठिकीं वृत्तिमाश्रितः ।
वेदशास्त्रपुराणानां तत्ववेत्ता प्रकाशते ॥ ४ ॥

नूनं यस्य प्रसादेन कामवेगं जयेन्नरः ।
स नो दिशतु सद्बुद्धिं हनूमान्विजितेन्द्रियः ॥ ५ ॥

सुग्रीवसचिवः श्रीमान् तस्य प्रियहिते रतः ।
स्वामिक्षेमाय यो धीरो रामसख्यमकारयत् ॥ ६ ॥

यस्य सेवा च सुग्रीवं कृतकृत्यंसुसत्कृतम् ।
हर्षयुक्तं चाकरोत्सः मारुतिः पातु नः सदा ॥ ७ ॥

स्थित्वा रामस्य पुरतो दर्शयित्वाऽऽत्मनो धृतिं ।
नैपुण्यं सर्वविद्यासु लेभे तस्य कृपासुधाम् ॥ ८ ॥

स्वामिकार्यप्रसक्तः सन् धैर्यं बुद्धिं च साहसम् ।
दर्शयन् सहसा वीरो लंघयित्वा महोदधिम् ॥ ९ ॥

सीतां दृष्ट्वा ददौ तस्यै शोभनं चाङ्गुलीयकम् ।
तुष्टा या तस्य वीर्येण आशीर्वचनमग्रहीत् ॥ १० ॥

पुनस्तीर्त्वा महावेगः सलीलं लवणार्णवम् ।
दत्वा रामाय सन्तोषं कृतार्थो मुदितोऽभवत् ॥ ११ ॥

एवं त्यागविशुद्धात्मा मारुतिः पवनात्मजः ।
कामक्रोधविजेता च लोकक्षेमाय कल्पताम् ॥ १२ ॥

---

* जयनगरं, बेङ्गलूरु।

# लोकमान्यमहोदयानां पुण्यस्मरणम्

आ. गो. कुलकर्णी *

स्वतंत्रभारते स्वातन्त्र्यप्राप्त्यर्थं यैः वहवः यत्नाः कृताः तेषां मध्ये लोकमान्यतिलकस्य अग्रस्थानम्। यदा चिरपरकीयशासनपरिचयात् भारतीयेषु स्वातंत्र्यप्रेमभावना विस्मृतप्राया जाता, तथा च, अचिरफलदायिन्या सेवावृत्या जना विविधभोगैश्वर्यजनितसुखलाभ आसक्ताः अभवन्, तदा जनेषु स्वातंत्र्यप्रेमवृत्ति उत्पादयितुं लोकमान्यतिलकमहाशयेन महान् प्रयत्नः कृतः। अनेन महापुरुषेण अविरत राष्ट्रे लोकजागृतिः कृता। तस्यां सत्ताधारिणां परकीयाणां भेदनीतिः, पक्षपातित्वं स्वार्थपरायणता, म्लेंछधर्माभिमानः, आर्यधर्मस्य प्रच्छन्नद्वेषः, दांभिकत्वं च,' एते दोषाः अनेन अनेकदा प्रकटीकृताः। तथा च भारतीयानां संपत्तिद्वारा स्वदेशस्योत्कर्षप्रापणं एते कथं कुर्वन्ति इति दर्शयित्वा "इयं मातृभूमिः एतेभ्यः अवश्यं मोक्तव्या इति विचारः अनेन लोकेषु प्रसारितः। इयं लोकसेवा अनेन लेखनपटुना वर्तमानपत्रसंचालनेन कृता। "केसरी" इति अस्य वर्तमानपत्रस्य नाम अस्ति।

अस्य जन्म कोंकणप्रान्ते रत्नागिरीमंडले 'चिखली' नाम ग्रामे अभूत्। 'गंगाधरः', इति अस्य पितुर्नाम। संस्कृतविद्याविभूषितः सः सदैव सदाचारनिरतः आसीत्। मातुः सूर्योपासनया तयोरयं पुत्ररत्नलाभः अभवत्। अस्य तेजस्विनः बालकस्य

* काव्यतीर्थः, शिराकः सोपारा इंग्लिश स्कूल, सोपारा (ता. वसई)।

व्यवहारनामधेयं "केशवः" इत्यासीत्। किन्तु तौ स्नेहभावेन तं "बाळ" इति नाम्ना सम्बोधितवन्तौ, अतः एव अयं "बाळ" इति नाम्ना एव प्रसिद्धिं गतः। अयं प्राथमिकशिक्षणं चिखलीग्रामे कृत्वा माध्यमिकशिक्षणं मंडलस्थाने रत्नागिरीपुरे गृहीतवान्। ततः उच्चशिक्षणार्थं पुण्यपत्तनं प्राप्तः। तत्र फर्ग्यूसनमहाविद्यालये अनेन उच्चशिक्षण अन्त्यपदवी प्राप्ता। अनन्तरं आमरणं पुण्यपत्तने एव वास्तव्यं कृतम्। उत्तरायुः देशोद्धारार्थं अविरतं कार्यं कुर्वता अनेन सफलीकृतम्। महाविद्यालये आगरकरप्रभृतयः अस्य सहाध्यायिनः आसन्। प्रथमतः आगरकरमहाशयेषु अस्य अतीव स्नेहः आसीत्। किन्तु अनन्तरं उभयोः भिन्नभिन्नमतप्रणाल्या अयं स्नेहः संपुटीभूतः। "आदौ समाजसुधारणा, पश्चात् स्वातंत्र्यम्–"इति आगरकरमहाशयस्य मतं अस्य मान्यं नासीत्। अस्य मतं एतस्य विरुद्धं "आदौ स्वातंत्र्यं ग्राह्यं–पश्चात् समाजसुधारणा कर्तव्या"–एवमासीत्। परस्परयोः मतभेदेन उभयोः मार्गाः अपि पृथक् पृथक् जाताः। अस्तु। अनेन लोकजागृतिकार्ये बहवः क्लेशाः सोढाः, द्विवारं कारावासः स्वीकृतः। तेनायं सत्ताधारिणां सदैव द्वेषस्थानं जातः अपि स्वकार्यं न त्यक्तवान्। अस्य देशप्रेम, धर्मश्रद्धा, सदाचारता, अध्यात्मयोगजिज्ञासा, महनीयाविद्वत्ता, सत्यप्रियता, स्पष्टोक्तिः, निर्भयता, तेजस्विता इत्यादयो विविधाः गुणाः अस्मिन् महापुरुषे सदैव साहचर्येण अवसन् यैः अयं लोकेषु महात्मनां योगिनां च पदवीमारूढः। कालप्रवाहं रोधित्वा अनेन नवयुगस्य प्रारंभः कृतः। अतः असौ युगपुरुषतां प्राप्तः। कारावासे अनेन विशुद्धाध्यात्मज्ञानप्राप्त्यर्थं श्रीमद्भगवद्गीतासूक्ष्माभ्यासेन अस्मिन् ग्रंथे महाराष्ट्रभाषायां भाषांतरं कृतम्। तत् "गीतारहस्य"मिति प्रसिद्धम्। निष्कामकर्म एव अन्ते मोक्षसाधनार्थं श्रीमद्भगवद्गीतायाः रहस्यं अनेन प्रकटीकृतं यत् अखिलजीवानां सहजं उद्धरणक्षमम्।

अस्य महात्मनः गुणनिधिं आलोडयितुं को नाम समर्थः? अतः परलोकं गतस्य महात्मनः पुण्यपुरुषस्य स्मरणार्थं कृतप्रयत्नेन अलम्।

कृतार्थोऽयं महात्मा, कृतार्थं यस्य कुलं कृतार्थं च अस्य जन्म, येन सत्पुत्रवती इयं भारतभूमिः इति अस्याः धवलं यशः दिगन्तं नीतम्। चिरकालं स्वर्गसुखमनुभवतः अस्य पुण्यपुरुषस्य सततं आशीर्वृष्टिभिः सर्वे भारतीयाः नित्यं भद्रं पश्येयुः, नित्यं भद्रं पश्येयुः।





# रसगंगाधरे समस्यापूर्तिः

अनंतशास्त्री पिंगळे*

भागीरथीभक्तिविभूषितस्वान्ताः आलङ्कारिकचूडामणित्वेनाद्यापि विराजमानाः जगन्नाथपण्डितराजाः रसगङ्गाधराख्यमपूर्वं ग्रन्थं अपूर्णमेव निर्माय स्वयं स्वर्गमलङ्कृतवन्त इति प्रथिततरमेव समेषाम्। तत्रापि अन्तिमश्लोकस्य उत्तरालङ्कारेऽन्त्यश्लोकस्य पादत्रयार्थमेव अन्तकेनावकाशः प्रदत्तस्तेभ्यः। अतः स ग्रन्थराजः–

**किं कुर्वते दरिद्राः, का सारवती धरा मनोज्ञतरा ।**
**कोऽपावनस्त्रिलोक्याम्...................... ।।**

इति पादत्रयेणैव समाप्तिं प्रायात् ।

एतच्चोदाहरणं प्रतिपाद्यविषयीभूतोत्तरालङ्कारस्य विवरणेन स्पष्टीभविष्यति। "प्रश्नप्रतिबन्धकज्ञानविषयीभूतोऽर्थ उत्तरम्," इति उत्तरालङ्कारं लक्ष्यीकृत्य विषयीभूतोत्तरज्ञाने जाते पद्यान्तर्वर्तिज्ञीप्सानिवृत्त्या चमत्कारप्रत्यायनेन अयमलंकारो भवतीति तद्विवरणसंक्षेपः। प्रकारविवेचनान्ते च व्याख्यातम्– पद्यान्तर्वर्ति-बहिर्वर्तिनोर्द्वयोरप्युत्तरयोः सकृच्छ्रुतिपर्यायत्वेन, शब्दावृत्तिपर्यायत्वेन, अनेकेषां प्रश्नानामेकपदनिवेदितोत्तरत्वेन, प्रकारान्तरैश्च बहुप्रभेदत्वम्। दिङ्मात्रेणोदाहृतं च निर्दिष्टं पद्यम्।

तत्र 'किं कुर्वते दरिद्राः ?' इति प्रश्नः। उत्तरं च पद्य एव दरिद्राः किंकुर्वते नाम 'किंकरतां भजन्ते' इति। सारवती मनोज्ञतरा धरा का? इति प्रश्नः। कासारवती–तडागवतीत्युत्तरम् । त्रिलोक्यां पावनः कः ? यद्वा अपावनः कः ? इति प्रश्नयोश्च यः कोपं अवति–रक्षति स कोपावनः, कोपं दीर्घकालं रक्षन् 'अपावनः' अथवा कोपं संयच्छंश्च 'पावन' इत्युत्तरद्वयम्।

---

* डेक्कन्कालेज, पूना–६

एवं पादोनतया विकलं ग्रन्थराजं सत्यपि तादृश्यामायताभावेऽपि सेवाबुद्ध्या यथामति कृतयत्नोऽयं जनः। समस्यापूर्तिकरणे च उत्तरालङ्कारं साधयित्वा पण्डितराजस्य प्रकृतग्रन्थकर्तुरपि सभाजनं कर्तव्यमित्यस्ति ममोद्देशः। तदनुसार-मुपस्थाप्यतेऽयं चरण :–

**'को ज्ञोऽन्यो राजपण्डितो जयति।'**

अयं भाव :– हे पण्डितराज, अन्यः कः ज्ञः विद्वान् राजपण्डितः सर्वोत्कर्षेण वर्तते ? इति प्रश्नः। अत्र 'त्वमेव तादृशः पण्डितराज' इति पद्यबहिर्वर्ति आक्षेपलभ्यं उत्तरमत्रैव वर्तते। अन्यदपि प्रकृतालङ्कारसूचकं पद्यान्तर्वर्ति उत्तरमत्र विद्यते। तद्यथा– यः त्वदन्यः त्वमिव कोज्ञः नाम कं विष्णुं, उं शंभुं च जानातीति हरिहरस्वरूपज्ञः पण्डितश्रेष्ठः, स जयति। तथा चात्र उत्तरालङ्काररीत्या यत्र प्रश्नः, तत्रैवोत्तरम्, कविराजस्तुतिश्च संपद्यते। तेन अलङ्कारपूरणं भवति। रसङ्गागधरस्य रसगङ्गा चाखण्डिता प्रवहेत्।

एवं च पण्डितराजोत्तरग्रन्थस्य उत्तरालङ्कारप्रकरणे उत्तरालङ्कारपूरणेन उदाहरणीभूतोत्तरपद्यं ग्रन्थराजश्च एवमुत्तरितो भवति–

**किं कुर्वते दरिद्राः, का सारवती धरा मनोज्ञतरा।**
**कोऽपावनस्त्रिलोक्यां को ज्ञोऽन्यो राजपण्डितो जयति॥**



**क्वाकार्यं शशलक्ष्मणः क्व च कुलं भूयोऽपि दृश्येत सा**
**दोषाणां प्रशमाय नः श्रुतमहो कोपेऽपि कान्तं मुखम्।**
**किं वक्ष्यन्त्यपकल्मषाः कृतधियः स्वप्नेऽपि सा दुर्लभा**
**चेतः स्वास्थ्यमुपैहि कः खलु युवा धन्योऽधरं धास्यति॥**

# । भारतीयप्रतिज्ञा ।

के. केशवन् नायर्

गच्छास्मात्पुण्यदेशात्त्वं
चीने, दुर्मदगर्विते,
पदात् पदं न शक्यं ते
समागन्तुं दुराशये ॥१॥

इदं हैमवतं पुण्यं
सुन्दरं पक्षिसंकुलं
बहुवृक्षलताकीर्णं
बहुसन्यासिमण्डितम् ॥२॥

पद्ममालासमाविष्टैः
सरोवरशतैर्युतं
लडाखनेफयोः स्थानं
पावनं दूषितं त्वया ॥३॥

किं नु तेऽवकृतं चीने,
भारतेन निरङ्कुशे,
येनेदं समतिक्रान्तं
युद्धबद्धधिया त्वया ॥४॥

ऐक्यराष्ट्रसभायां तं
प्रातिनिध्याय भारतं
चकार यत्नं भूयोऽपि
तस्य किं नु कृतं त्वया ।।५।।

पञ्चशीलप्रतिज्ञायां
सहवर्त्तित्वभाषया
हस्तमुद्रापि विन्यस्ता
"तस्यापि किं कृतं त्वया ।।६।।

सर्वमेव समाक्रान्तं
धार्मिकं, नैतिकं, त्वया
राष्ट्रीयं च व्यवस्थानं
चीने, हीनासि दारुणे ।।७।।

नेतारो भारतीयानां
सत्यधर्मपरायणाः
अवश्यंभावि कल्याणं
तेषां नास्त्यत्र संशयः ।।८।।

मनसा कर्मणा वाचा
धनेन च यथाविधि
शत्रोरुत्सादनं कर्त्तुं
भारतीया वयं क्षमाः ।।९।।

कर्त्तव्यकालः संप्राप्तः
सर्वे वयमितःपरं
ऐक्यभावनया बद्धाः
कुर्महे शत्रुसादनम् ।।१०।।





# वाग्विदग्धो विनोदप्रियश्च जवाहरलालः

श्रीगणेशरामशर्मा*

दिवङ्गतोऽस्माकं भारतराष्ट्रस्य प्रधानमन्त्री जवाहरलालनेहरुमहाभागो महामनीषी प्रकाण्डविद्वान् कूटनीतिज्ञानां धुरन्धरो राजनीत्यामतितरां प्रवीणो नानाकार्यकलापेषु व्यस्तसमस्तोऽपि च प्राप्तकालमवसरानुरूपं हासपरिहासं मनोरञ्जनं विनोदलीलाश्च करोति स्म। एतदेव हि कारणं यत् स गुरुतरं शासनोत्तरदायित्त्वं, गुर्वीं कार्यधुरं वहन्नपि च सदा सर्वदा स्वस्थः प्रसन्नो हृष्टश्च तस्थौ। तस्ययं विनोदिनी प्रकृतिर्विनोदप्रियः स्वभावश्च न केवलं तस्यैव मनः प्रसादं विदधे परं चानन्यानपि तत्र तत्रोपस्थितान् मनुष्यान् हर्षनिर्भरमानसान् स्मेरमुखान् करोति स्म। सः स्वयं न्यायशास्त्रपण्डितो विधिविधानतत्त्वानां मर्मज्ञश्चासीत्। स विशिष्टः सभ्यः सामाजिकशिष्टाचारव्यवहारपटुर्वाक्प्रयोगपटुश्चासीत्। स चेदमपि च तत्त्वतो जजान यत् तत्सदृशस्य प्रामाणिकस्य वरिष्ठप्रशासकस्य मुखान्निर्गतानां वचनानां का नु खल्वनुकूला प्रतिकूला वा प्रतिक्रिया परिणतिश्च भवितुमर्हति स्मेति। सत्यप्येवं यदा कदा स तेषु तेष्ववसरविशेषषु सहृदयतया विनोदभावेन भावुकतया च तथा वाक्चातुर्यं, प्रत्युत्पन्नमतित्वं, विनोदप्रियतां, वाग्विलासनैपुणीं चात्मनो वितेने यन्न कोऽपि

* विद्याभूषणः झालावाडस्थः।

तस्य वाक्चातुर्यं प्रत्याक्षेपमभियोगं प्रत्याख्यानं वादविवादं वा कर्तुं पारयेन्नाम। यतः स किलैको महान् साहित्यकारो वरीयाँल्लेखकश्चाभूत्, ततः स विदग्धालापपेशला व्यङ्ग्यगर्भा मर्मस्पृशः सूक्तिसंलापा वाणीर्विनोदभङ्गीभिः सदा वक्तुं सन्नद्धस्तत्परश्च सन्तिष्ठतेस्म। तदत्रपाठकानां विनोदायानन्दाय तथा महामन्त्रिणो जवाहरलालमहोदयस्य विनोदप्रियतायाः सहृदयतायास्तस्य च प्रत्युत्पन्नमतेः परिचयाय केचन तथाविधाः प्रसङ्गा यथावसरं घटिता अवतार्यन्ते :–

अथैकदा सोऽयं नेहरुमहोदयो वाराणसीं जगाम तत्र च सः खल्वेकस्यां पाटशालायां छात्रवृन्दैराहूतः सन् ययौ। समाप्ते हि सोपचारिके तत्रत्य समारोहे महाभोजस्यायोजनं समभूत्। यत्र नेहरुमहाभागः समासीनोऽभूत्तत्र छात्राणां सम्मर्दो महान् बभूव। नेहरुमहोदयस्तदानीं छात्रैः सहात्मीयतया स्वच्छन्दहासपरिहासकथाविनोदरसनिर्भरा वार्ताश्च कुर्वाण आसीत्। सहसा तस्मिन् बालकवहुले वातावरणे बालसामान्यम् विनोदभावमुपगतो जवाहरलालः स्वहस्ते 'काजू' इत्याख्यं फलविशेषं गृहीत्वा छात्रान् पप्रच्छ–"अपि यूयं काजूफलं प्रोच्चैरुत्पात्य भक्षयितुं प्रभवथ?" सर्वे छात्राः काजूफलान्यूर्ध्वमुत्पात्य स्वमुखे निपात्य भक्षयितुं प्रयतिरे परं साफल्यं नावापुः। ततः स्वयं नेहरुमहोदयः काजूफलमेकं वहूच्चैरुच्चालयन्नूपलाय्यच तत् स्वमुखे जग्राह। तस्य तत् स्फूर्तिस्फारं पलायनं तस्य फलस्य सावधानं चातुर्येण स्वमुखे ग्रहणं च विलोक्य तत्रोपस्थिताः सर्वे छात्राः साट्टहासं जहसुः। इत्थं तेषां छात्राणां मनांसि विनोदयन् नेहरुमहाभागो मुहुर्मुहुस्तथैव स्वविनोदवृत्तिपरत्वं बालसुलभं प्रादर्शयत्। सर्वे छात्राश्च तद्विनोदचमत्कारं दृष्ट्वानन्दमन्वभूवन्।

अथ नेहरुमहाभागः सन् १९६२ वर्षे, फर्वरीमासे, बाराबङ्की-स्थानं जगाम। तत्र चैकस्मिन् महति खलूत्सवसमारोहे लोकैः समर्पितानां बह्वीनां पुष्पमालानां पुञ्जं सञ्चितं समभूत्।

स्वल्पसमयानन्तरं तत्र बालकाः स्नेहाधिक्यात् स्वतातरूपं नेहरुमहोदयं समन्तात् परिवाय तस्थुः। ततस्तेषां तातो नेहरुस्तेभ्यो बालकेभ्यः पुष्पमालां दातुमारभे। बालानां संख्यातिमहती समभूत्। मालाश्चापेक्षया न्यूना आसन्। क्षणादेव ताः सर्वा माला वितरणक्रमेण निःशषतामुपयातुमारेमिरे। मालानां समाप्तिमालोक्य नेहरुमहोदयोऽब्रवीत्–'अधुना सर्वाभावो ह्युपस्थितप्रायः।' तदृष्ट्वा

तत्रोपस्थिताः प्रबन्धव्यवस्थाकर्तारो लोकाः प्रपलाय्य विपणितोऽन्विष्यान्विष्य काश्चन

माला अन्याः क्रयं कृत्वानेतु सत्वरा बभूवुः। यावत्सुलभा मालाः समानीय नेहरोः पुरतः समस्थापयन्। नेहरुः पुनस्ताः सर्वा मालाश्चापि बालकेभ्यो दातुं प्रारेभे। अन्ततस्ताश्चापि मालाः सर्वा निश्शेषतां ययुः। तदा नेहरुमहोदयोऽन्तरिक्षे स्वकीयौ-रिक्तौ हस्तौ धुन्वन् समन्दहासमुवाच—"बालकाः! इदानीं तु सर्वाभावो बभूवो बभूवैव। अकिञ्चनता समुपतस्थे!! (दिवाला निकल गया!!!)

निखिलविश्वस्य महत्यो जटिलाश्च समस्या नेहरुमहाभागस्य पुरतो मुखं व्यादाय समुपतिष्टन्ते स्म। स्वदेशस्यापि च महोग्रा विषमाश्च नानाविधाः समस्या-स्तदानीमासन्ना एव। तस्मिन् समये पञ्चाम्बुप्रदेशस्यान्दोलनं महतो वेगात् सक्रियमुग्र-तरं च जायमानमभूत्।

तत्समये किलैकदा नियतकालिकपत्रप्रतिनिधिसम्मेलनाधिवेशनं जायमान-मासीत्। अथ प्रधानमन्त्री पञ्चाम्बुप्रदेशस्य प्रस्तावं स्वीकरिष्यति वान वेति विष-येऽच प्रश्नमुपस्थापयन् कश्चिदेकः पत्रसम्वाददाता नेहरुमहोदयं पप्रच्छ— "यदि च महाशयस्तारासिंहो भवदन्तिकमागच्छेत्तदा तस्मै किं प्रदास्यति भवान्?"

"चायचषकं वा कॉफी चषकं वा यत्किमपि तस्मै रुचिकरं स्यात्तदेवाहं दास्ये।" नेहरुमहाभागस्तत्कालमुत्तरं प्रददौ।

अथ देशस्यास्माकं भारतस्य स्वतन्त्रताप्राप्तेः पूर्वतनोऽसौ प्रसङ्गो वर्तते। दिनेषु तेषु नेहरुमहाभागो नासिककारागारे सार्वकारेण तदानीन्तनेन वैदेशिकेन स्वातन्त्र्या-न्दोलने निगृहीतो बन्दित्वेन निवसन्नभूत्। केचन बन्दिनः कथयामासुर्यत्तेभ्यः कारा-गारे भोजनार्थं या रोटिकाः प्रदीयन्ते स्म तासु मृत्तिका मिश्रिता भवति स्मेति। नेहरु महोदयस्तमिमभियोगं कारागारस्याध्यक्षायाभिदधे। स चाध्यक्षस्तदिदं प्रकरणं हास्य-लीलया महत्त्वशून्यमधिकारगर्वात् फल्गु च प्रमाणयन्नुवाच—"महाशयाः! यूयं सर्वे मातृभूमेः सेवासम्पादनायात्र कारागारमागताः स्थ न त्वेवंविधमभियोगं स्थापयितु-मथवा प्रबन्धमाक्षेप्तुमिहायाताः स्थ।"

श्रुत्वतन्नेहरुमहाभागः क्रोधाध्मातो बभूव तत्कालं तमधिकारिणं प्रत्युवाच— "महाशय! यथार्थमास्ते भवद्वचः! परमेतदपि भवता ज्ञातव्यमुचितम् यद्व-यमत्र करागारे मातृभूमेः सेवार्थमागताः स्मो न तु तां भक्षयितुमिहागताः स्मो वयम्।"

अथैकदा मिश्रदेशस्य राजदूतः श्रीकमालमहाशयो वार्तालापप्रसङ्गे नेहरु-

महाभागं पृष्टवान्–"भवतां देश भारते ननु खड्गेन युद्धं कथमिव युध्यते स्म भोः ?"


आकर्ण्यैतन्नेहरुमहाभागस्तत्कालं स्वासनादुत्थायैकां यष्टिकां कमालमहाशयस्य हस्तेऽग्राहयत् तथा स्वयं चैकामन्यां यष्टिकां स्वहस्ते गृहीत्वा योद्धेव व्यूहवन्वं विरच्य तेन सह योद्धुं तत्पर इव युद्धकौशलं प्रदर्शयंस्तथाविधिगतिभङ्गीक्रमाननाटयत् ।

तदेत् सर्वं कमालमहाशयो विभ्रान्त इव चकित इव परिपश्यंस्तस्थौ । तावदेव नेहरुः स्वहस्तं प्रसार्य स्वस्य यष्टिकाग्रं कमालस्य यष्टिकायामीषत्प्रजहार। दृश्यमिदं वीक्षमाणः कमालो दिग्भ्रान्त इव विभ्रान्त इव चकित एव संतस्थे ।

तदैव नेहरुमहाभागो विहसन्नुवाच– "अये, भवन्तस्तु तावद्यष्टेरान्दोलनमपि न जानन्ति तदाच खड्गयुद्धस्य चर्चया को लाभः ?"

अथ नेहरुमहाभागस्तदात्वे लन्दनयात्रां कुर्वाणोऽभूत् । तत्र च मनागवकाशे समासादिते सति स आंग्लभाषायाः सुविख्यातं साहित्यकारं महान्तं व्यङ्ग्यलेखकं च जॉर्ज बर्नार्डशामहोदयं प्रति साक्षाद्दर्शनाय जगाम तद्दर्शनं कृत्वा ततो निवृत्ते नेहरौ कश्चन पत्रकारस्तं पप्रच्छ–"उच्यताम्, शॉमहाशयस्य किं वस्तु को वा गुणो भवतेऽभ्यरोचत ?"

"तस्य बकवादः !" नेहरुमहोदयः प्रत्युदतरत् ।

"अथास्य कोऽभिप्रायः ?" पत्रकारः साश्चर्यमपृच्छत् ।

"अयमास्तेऽभिप्रायो यद्धि शॉमहाशयो यत्किमपि वक्ति तद्भवद्भ्यो बकवादो विक्षिप्तता वा प्रतीयते । परमहं तु तस्यास्या विक्षिप्तताया एव महाप्रभावं मन्ये । तामिमां विक्षिप्ततां बकवादं वा तस्य सर्वोत्कृष्टतमं गुणं भावयामि ।" नेहरुमहोदयेनोत्तरितम् ।

पत्रकारः पुनरपि अपृच्छत्–"अथ भवतश्च किं वस्तु को वा गुणस्तस्मा अरोचत ?"

"स एव मम बकवादः ।" नेहरुमहाभाग उत्तरं अयच्छत् ।

इत्थं तैरेतैः कैश्चिदुदाहरणैर्वयं स्पष्टं ज्ञातुं पारयामो यन्नेहरुमहोदयः कीदृङ्महामना विदग्धालापननिपुणो वाणीविलासविदग्धश्चतुरः प्रत्युत्पन्नमतिः सहृदयो विनोदप्रियश्चासीदिति ।

# स्वभाषा ब्राम्हणस्य का ?

**रामकृष्ण अनंत भट्ट. काशीकर***

अथ सर्वत्र स्वस्वमनोगतभावविशेषप्रकाशिनी मानवैर्भाष्यमाणा भाषा देशभेदे विविधवर्णपदध्वन्यादिरूपैरात्मानं भुवनेषु प्रथयन्ती जीवाभ्यन्तरतमःस्तोममपहृत्य भ्राजते। सा च प्रातिस्विकतया सर्वेषां स्वभाषात्वेन हिन्दी, मराठी, द्राविडी, कर्णाटी, हौणीत्येवं बहुधा प्रकाशमानापि किं तत्तद्देशीयानेव सा सैव भाषा तत्तद्देशीयानां स्वस्वमनीषितं फलं प्रापयत्याहोस्विदितरापीतरदेशीयान्यथायथं विशिष्टं फलं गमयतीति चिन्त्यते। उत्सर्गतो गीर्वाणानां गैर्वाणी, मानवेष्वपि हिन्दूनां हिन्दी, महाराष्ट्रीयानां मराठी, द्राविडानां द्राविडी, कर्णाटकीयानां कर्णाटी, हूणानां हौणीत्येवं तत्तद्देशानुरोधेन भाषा भिन्दती भासत इति सर्वविदितोऽयं विषयः। तत्र तत्र तत्तेषां सा सैव विद्यमाना स्वभाषेति प्रायोवादः। हिन्दवः खलु स्वदेशसम्प्रदायमनुरुध्य शरीरयात्रायै वेषमर्यादां यथाविधि पालयन्ति। तदुचितां हिन्दीमेव भाषां भाषन्ते। सर्वोऽपि लोकव्यवहारो न व्यतिरिच्यते। अन्यत्र विद्यमानानां तत्रागतानामपि विदेशीयानां हिन्दीभाषैव तादृशो वेषश्च विशिष्य गौरवपदं विदधाति। न हि क्वचिदप्यपरिचितहिन्दीभाषः स्वयं तत्र गत्वापि तेषां संमतो भवति। स्वदेशभाषाया वेषाचारयोश्च तत्रानुपयोगादप्रकाशाच्च। कदाचित्स्वोचितं प्रयतनं विसंवदेतापि। एवमेव हौणद्राविडादीनां विषयेऽपि। अतः स्वदेशात्परदेशं गतस्तदीयवेषभाषानुसरणेनैव महीयत इति निर्णीतं भवति। हिमगिरेर्दक्षिणत आर्यावर्तादिषु देशेषु स्वस्वदेशभाषाभिः साकं गीर्वाणभाषाऽपि व्यवहार्यतामेतीति प्रसिध्यति। शरीरयात्रा निर्वाहाय स्वोच्चनीचवर्णैः सह संव्यवहारे यथायथं स्वकीयैव भाषा स्वैः प्रतायते। गैर्वाणीतु उच्चवर्णैः स्वधर्माचरणाय स्वदेवस्तवनाय सङ्कल्पार्थं चोपयुज्यते। सनातनधर्मविश्वासप्रचितस्वकर्मप्रकाशाश्चैते सदातनं चाम्नायं संस्कृतमयं चाधीयते। एतेषां लौकिकव्यवहारे स्वस्वमातृभाषेवालौकिकव्यवहारेष्वभ्युदयनिःश्रेयसप्रापिकासु गैर्वाण्येव मुख्यं पदं प्राप्नोति। इति संस्कृतमातृभाषैव स्वकीयत्वेन प्रसिद्धिं प्राप्नुत इत्यर्थात्सिध्यति। यथा त्रैवर्णिकाः स्वोच्चनीचवर्णैः

* विद्याभूषण, होसाड. (उ. का.)

सङ्गत्य मातृभाषया स्वसङ्कल्पितानि साधयन्ति तद्वत् संस्कृतयापि महनीया

उभयत्र भवन्त्येव। पुरा मानवा एव सन्तः धृतमहर्षिवचनाचाराः संस्कृतादरा महर्षितुल्या मानवान्तरैश्च प्राशस्यन्तेति प्राचीननिगमागमानां संस्कृतशरीराणां मानवश्रेयोहेतुता स्पष्टमेव प्रतीयते।

अत्राधुना नवीनाः अनधिगतजन्मनो गैर्वाण्यास्तथा तन्मयागमादीनां फलोपगमे संशयपदावहाया अध्ययनेनालं, यतः प्रत्यक्षतो धनादिसम्पत्सम्पादकहौणीभाषाभ्यास एव नितरामिह श्रेयःप्रद इति कमप्याक्षेपमुत्क्षिपन्ति। अत्राक्षेपेणाक्षेपानुकूलेन पथा प्राप्य विपक्षपक्षममन्दाक्षेणैवाधिक्षिपन्ति धर्मकक्ष्यारूढानेव स्वपक्षान्। एतेन स्वपक्षहानपरपक्षप्रवेशाभ्यां प्रकृष्टं स्वस्थानादपकृष्य भ्रश्येयुरिति नाप्रत्यक्षं प्रेक्षावत्पक्षपातिनाम्। कथं तदिति चेद् ब्रूमः।

**स्ववेषभाषाचारैश्च स्वदेशेषु सदा बुधः।**
**उभयत्र शुभं विन्देदिति पूर्वानुशासनम्॥**

हिमाचलाद्दक्षिणत आर्यावर्तादिविभिन्नविषयवर्तिनां उच्चावचवेषाचाराणां देशभेदेन भाषाभेदेऽपि न गीर्वाणभाषायां मन्दादरता नापि स्वेषामाचारादीनां बहुलो भेदोऽस्तीति सर्वसंमतमेतत्। यत्र तु प्रागुक्तदेशवेषभाषाणां मनागपि न सम्बन्धः तथाचारा तादृशदेशस्थानां तद्देशीयभाषायाश्च नितरां विपक्षपातिता सर्वादृतेति तत्पक्षीय एवाधुना विशिष्य विचिन्त्य कोटिमाटीकन्ते। त एव हूणभाषाकुशला हौणा इति ख्याताः। ते खलु व्यापारिणः स्वार्जितानि वस्तूनि विक्रीय द्रविणसम्पादनेच्छया भवतो दक्षिणान् देशान् सद्रत्नोपचितान् अभ्याजग्मुः। सकलभूसारतामस्य विदन्त इमां च स्वाधीनीचिकीर्षया स्वभाषां सर्वत्र प्रथयित्वा हूणभाषाविदां विविधानि धनानि वितीर्य भूयसानेहसा स्वराट्पदेऽप्यलङ्कुर्वाणा व्यराजन्त। तथा तेषां भाषाया अपि महान् प्रकाशः समजनिष्ट। गच्छता गणरात्रेण तदितरभाषाणां न्यग्भावे समुद्भूते भाषावद्वेषाचारांश्चात्रत्या अनुसृत्य धनमात्रलोलुपाः हूणसदृशाः समापेदिरे। स्वदेशभाषावेषाचारान्विहाय परकीयेषु तेषु सश्रद्धं समाहितान्तरङ्गा तत्सङ्गत्या सनातना अपि मानवा धनगौरवेणातिरिक्ता इव प्राचोऽपि सुधियः काचायाप्यगणयन्तः सर्वतो बहुलीभूताः प्रदृश्यन्ते। आलोकयत धनपिशाचिकायाः सर्वतो महिमानम्। यो द्विजानेव सतः सनातनात्पथो निभृतं निर्गमयति। जात्या मुख्यानप्यमुख्यानवरांस्तानापादयति। स्वयं नष्टः परान्नाशयतीति प्रत्तोक्त्या

स्वयं नष्टांस्तानेवानुसारयति विशिष्टानेवेतरानपि सतः। विस्मृतमातृभाषा-नवगणितदैवभाषान् सम्पादयति। अधीताम्नायांस्तथागमपारगांश्चावधीरयति। प्राचीनशैल्या गुरुशिष्यक्रमजनाक्रम्याभ्यस्तसकलवेदाङ्गान् सत्पथे स्थितानपि सजातिभिरेवेषज्जिघ्रदपरभावैः साटोपं संन्हेपयति। इत्येवमुच्चावचप्रवृत्तिप्रणालिकया धनपिशाचिकावरुद्धा आधुनिकाः पुरुषधौरेयाः वारिवाहसंवृतं तपनमिव स्वेच्छाचारेण धर्माचारान्संवृण्वन्ति। नेषदपि भाषासु धर्माधर्मेषु सनातनेषु जातिविभागषु तरतमभावमुपपञ्चमानं चेतसाऽपि चिन्तयन्ति। तथा स्व एव स्वकीयभाषाया गौरवपदसंपिपादयिषया स्वेतरावरभाषोपोद्वलिताया एव महत्वमपि अभिमन्यन्ते। इत्यहो परप्रत्ययनेयधियां सुधीमानिनां कालानुकूलोऽनर्थशतसंपातः। पुण्यलेशवशादवाप्ताग्रिमजन्मानोऽपि स्वान्वयमार्षेयं विस्मरन्ति। आर्यावर्तान्पुण्यदेशान्कर्मयोग्यान् जिहासन्ति। अत्र न तादृशी विद्येति पारे समुद्रं परीत्य स्वानुचितामभ्यस्यन्ति। यथा कुलाचारविरुद्धमाचारमाचरितुमीहन्ते। द्विजन्मसम्पादकस्नानसन्ध्यादीनि धिक्कुर्वन्ति। मुण्डितमस्तका अनाच्छादितकौपीनकर्पटाः आपाद मस्तकं कवचान् धारयन्ति। खाद्यं पेयमन्यद्वा यथासमयं यत्र क्वापि कयापि विधया नीचजाति हस्तेनापि तिष्ठन्तो धावन्तो वा समनुभवन्ति। शौचाचारसन्दर्भेषु उत्तिष्ठन्त एव सन्तः विमोकस्थलं जलेनापि न क्षालयन्ति। ब्रूत इयद्भिरुपमानैः संसृष्टा एते के मानवा एव सन्तः प्रकृत्या गुणतः कर्मतश्च कतम इति। एवं सन्त एते कियतापि कालेन केनापि निमित्तेन त्यक्तपरभाषा अपि न पुनः कूटाचरितमार्गानवगन्तुमाचरितुं वोत्सहन्ते। काकहंसकथावदुभयतो भ्रष्टाः क्लिश्यन्ते। किं चात्रैवं विमृश्य परभाषासु विलुभ्य गर्तपतिता अपि नात्मना विरमन्ति धनलेशाशया पुत्रादीनपि विमार्गे प्रवर्तयन्तीति सांप्रतिकं वृत्तं स्मारं स्मारं कस्य वा चित्तं न चेखिद्येत। अमितधनव्ययेन नवीनपथे प्रवर्त्तमानाः सर्वेऽपि हौणपथानुगमेन न धनसम्पत्तौ प्रवर्त्तन्ते। धनव्यय एवोत्तरोत्तरं मनः प्रणिदधति। ब्राह्मणा इति हेतोः परैरेव धनागमेषु पदव्युपलम्भेषु च प्रतिबन्धहेतुतामेव प्राप्नुवन्ति। प्रतिगृहं वेदिकासु निषण्णाः करधृतवृत्तपत्रा रथ्याचरान् गतागतान् वीक्षं वीक्षं दुरवापं स्वजनुर्मोघी कुर्वन्ति। कयापि रीत्या जीविकाया अन्यथा पन्थानमविन्दाना अप्रभवश्च भवन्ति। किमधिकमियतोऽपेक्षणीयमस्ति व्रीडावहम्। इतीदं सर्वं दृष्टश्रुतचरमेव समेषां मनीषिवराणाम्।

एवं प्रतीचामाचारग्रहणेन न केवलं पुरुषाः स्वस्थानादत्त्यवन्त। स्त्रियोऽपि गृहीततदाचाराः प्रत्यपद्यन्त महद्वैषम्यं वेषभाषादिष्विति सर्वथा सनातनानां दुर-

ङ्कतां, तथा पुण्यदेशानां दुश्चिन्त्यं कलङ्कमप्यापादयन्ति। प्रवयसां गोष्ठीषु निःशङ्कं प्राप्तप्रवेशा विलज्जं भाषमाणाः नेत्रादर्शनासापुटकैरन्यैश्च सनाथयन्त आरूढोन्नतपदाः चरणोपरिचरणमारोप्य सदारश्चात्मानं कृतकृत्यं मन्यमानाः तथा साचि प्रेक्षन्ते। यथा स्व एवापरमानवावताराः अवगत परभाषा आरूढपदा अलङ्कारिण इत्येवमादिकं बोधयन्त इव। नष्टप्रायमिव स्वप्रयतितं सर्वं कार्यजातं स्वमणिबन्धबद्धघटीयन्त्रं समीपवृत्तिजनतासमक्षं समीक्षन्ते। सहासं भाषन्ते च तया यामेवाभ्यर्णवर्तिनोऽग्रवर्णाः सहजशीलाः सनातनमार्गावलम्बिनो न सम्यग्बोधन्ति। एवं दुरवस्थिताः हौण्याः समृद्धिमभिनिष्पादयन्तः कियन्तो जनिमन्तो भुवोऽङ्गणे चरन्तीति देवमातृभाषाणां सनातनानां पुण्यफलप्रदानामादरादानादप्रकाशमानानां तथा सनातनान्तं सुधियां विषयेषु चिन्तं चिन्तं सन्ततं तापयति मनस्तादृशां तपतां विपश्चिताम्।

इदं चात्र विमर्शनीयम्। सनातना एव पन्थानः श्रेयः प्रापकाः। नान्ये आधुनिका अचिरनाशशीला आभासाः इति सर्वानुभवविषयः। स्वमार्गे चिरं प्रवृत्त्या ज्ञातस्वाचाराः कियन्तः पश्चात्क्लिश्यमाना दृश्यन्ते। कियन्तोऽपि भ्रष्टाः स्वाचारं पुनरलम्भमानाः तप्तायःस्थाप इव विलीयन्ते। कियन्तश्च सव्रीडं लुप्तवेषा अदर्शनं गताः। एवमादि विदन्तोऽपि दत्तस्थानाः परभाषायाः प्रभावमुपर्यपि प्रसारयन्तः प्रेषयन्त्येव हौणाविद्याशालां स्वसुतान्। स्वकुलाचारान् गच्छता कालेन प्रमृजन्ति। प्रत्यक्षतः स्वेतरभाषा अनर्थपरम्परामनुभूयापि न विफलजनकादुत्पथाद्विरमन्ति। निवर्तन्ते च श्रद्धाविश्वासहीनतः च्युतस्वातन्त्र्याः यथेष्टप्रवृत्त्या प्रणष्टसन्मार्गाः अजसमजवद्दुरितगर्ते पातं पातं व्यसनिनो जायन्ते। अतो मानवेषु ब्राह्मणाः सन्तो वयं मतविमतानि संविज्ञाय वैदिकं धर्ममार्गं च प्रवयोभ्यो यथाविधि सम्पाद्य स्वानर्थमापयन्त्यां नैष्फल्यमपि संविद्य सर्वासामादिभूतां गैर्वाणीं वेदशास्त्राद्यध्ययनेन सम्पोष्य कृतार्था अभ्युदयनिःश्रेयसयोः प्रभवेमेति सर्वव्यापिनं भगवन्तं सनातनं विश्वेशं प्रह्लादवरदमस्मदिष्टदैवं नरसिंहं साञ्जलि प्रनाथामहे।

**धीरता आत्मन औदार्यस्य सङ्केतः।**

**—माता**

# स्वप्नविलसितम्

डॉ. सी. ग. देसाई



## प्रथमोऽङ्कः

नान्दी :—नूतनो मामको यत्नः स्वप्नरूपो महाकवेः
नाटयालोचनरूपेयं नाटिका प्रीणयेत्प्रभुम् ॥

(समय :—मध्याह्नकालः। स्थलम् :— उज्जयिन्याः नातिदूरे।)

माढव्य :—(स्वगतम्) हन्त भोः। स्थितो मध्याह्नः। दृढमस्मि परिश्रान्तः। कविकुलगुरुकालिदासस्य जयंत्युत्सवे तस्य सर्वाः मानसकन्यकाः जामातरश्च निमन्त्रिताः महोत्सवकार्यवाहैः। दुष्यन्तमहाराजस्य वयस्यः अहं माढव्यः। 'वयस्य माढव्य त्वमपि उज्जयिनीं आगच्छ कालिदास जयन्त्युत्सवं द्रष्टुम्' इति तेन मम वयस्येन संदेशः प्रेषितः। किन्तु मम यात्रार्थं न रथः। अत एव मम एषा पदयात्रा। अतः अत्र एव मार्गे स्थितः मुहूर्तकं विश्रान्तिसुखं अनुभविष्यामि। अयं शोभनः आम्रः। तस्य च्छायायां उपविश्य ब्राह्मण्या दत्तं पाथेयं भक्षयामि। बुभुक्षया पीडितोऽस्मि।

(माढव्यः भोजनं आरभते। तदानीं अन्यतः
माणवकः तत्रैव आगच्छति।)

माणवक :—(स्वगतम्) अधुना तु मध्याह्नः। उज्जयिनी न समीपतरा। मया पाथेयमपि न किमपि आनीतम्। किं करोमि। क्षुधातुरोऽहं किं वा खादामि।...अये अयं कोऽपि स्थविरः किमपि अत्ति। भवतु। एतद् मे भूर्जपत्रं अस्योपरि पातयित्वा एनं भाययिष्यामि। (तथा करोति।)

**माढव्य** :–(सम्भ्रान्तः) अविहा अविहा। किमिदं मम शरीरे पतितम्। काकोदरः वा स्यात्। अयि देवि चण्डिके रक्ष माम्। नाटके वयस्यः मम रक्षकः किन्तु अत्र कोऽपि मम भक्षकः संवृत्तः। कोऽधुना मम त्राता। अत्र वृक्षे भूतो वा भवेत्।

(माणवकः वृक्षस्य पृष्ठतः वदति।)

**माणवक** :–भोः पथिक। मा बिभीहि। वनदेवोऽहम्। यदि मिष्टान्नेन मां संतोषयिष्यसि तर्हि न कामपि ते पीडां करोमि।

**माढव्य** :–भो वनदेव मातलिः यथा अदृश्यरूपेण मां अपीडयत् तथैव त्वमपि सांप्रतम्। यत् त्वयोक्तं सर्वं तत् करिष्ये। किन्तु कुत्र मया एतद् मिष्टान्नं निवेशनीयम्।

**माणवक** :–(वृक्षस्य पृष्ठतः) अरे रे पान्थ तव पार्श्वे वृक्षोऽयम्। तस्य मूले सर्वं निवेश्य अक्षिणी निमील्य हरिनाम जपन् तिष्ठ। अहं ते भृशं प्रीतोऽस्मि। तव शरीरे न काकोदरः। भूर्जपत्रं खलु तत्। तदपि मिष्टान्नेन सह मह्यं यच्छ।

**माढव्य** :–भो वनदेव यथा आज्ञप्तं तथैव करोमि।

**माणवक** :–शोभनं मोदकत्रयमत्र। खादिष्यामि सर्वम्।

(माढव्यः नयनार्धेन पश्यति। माणवकं दृष्ट्वा वीररसपरः दण्डकाष्ठं हस्ते गृहीत्वा।) . . . रे नीच वृद्धशृगाल मां परिहससि। स्थविरः त्वम् इति न मार्यसे। कथय को वंशः समलंकृत आत्मनः कुटिलनीतिचातुर्येण त्वया। का वा ब्राह्मणी विरहपर्युत्सुका कृता स्वयात्रया। किमिति मम वंचना कृता एषा।

**माणवक** :–भो वीरपुरुष सर्वं अपि कथयिष्यामि किन्तु भोजनोत्तरम्। क्षुधार्तोऽहम्। क्षम्यतां मे परिहासविजल्पितं सखे। पुरुरवसः नृपस्य नर्मसचिवोऽहं माणवकः इति अलमेव मे परिचयः। अधुना कथय रे वृद्धवीर त्वमपि कोऽसि ! आगच्छ। अत्र उपविश। भोजनबन्धुः च भव।

**माढव्य** :–अहो आश्चर्यम्। माणवक, त्वं तर्हि मम मित्रम्।

माणवक :—कथमिदं शक्यम्। 

माढव्य :—शक्यमेव।

माणवक :—मृत्पिण्डबुद्धिना मया न अवगम्यते इदम् रहस्यम्।

माढव्य :—माणवक! प्रश्नं ते दास्यामि। कथय तावत् भासकविविरचिते स्वप्नवासदत्तनाटके पद्मावत्याः आगमनं श्रुत्वा प्रथमेऽङ्के वासवदत्तया किं उक्तम्।

माणवक :—तया उक्तम् राजदारिका इति श्रुत्वा भगिनिकास्नेहोऽपि मे अत्र संपद्यते।

माढव्य :—तथैव त्वां दृष्ट्वा भ्रातृस्नेहोऽपि मे संपद्यते।

माणवक :—आम्। अधुना ज्ञातम्। त्वमपि विदूषकः असि। सत्यं नु।

माढव्य :—मृत्पिण्डबुद्धिः अपि चतुरः त्वम्। अहम् दुष्यन्तमहाराजस्य पीठमर्दः नहि नहि प्रियवयस्यः माढव्यः। माणवक, मिष्टान्ने तव रुचिः स्यात् इत्यत्र न आश्चर्यम्। किन्तु भूर्जपत्रे किमिति तव आकर्षणम्।

माणवक :—माढव्य, अधुना अहं ते प्रश्नं दास्यामि।

माढव्य :—छन्दतः।

माणवक :—उर्वश्या प्रेमपत्रं कस्मिन् पत्रे लिखितम् आसीत्?

माढव्य :—न सम्यक् स्मृतं मया। किन्तु सुवर्णपत्रे लिखितं स्यात्। देवांगना सा इत्येवं मे तर्कः।

माणवक :—एषः तव तर्कः न समीचीनः। यतः न सुवर्णपत्रे किन्तु भूर्जपत्रे तया प्रेमपत्रं लिखितम् आसीत्।

माढव्य :—सुवर्णपत्रे न स्यात्। भूर्जपत्रे वा स्यात्। किन्तु किं तेन अत्र।

माणवक :—अरे मूर्ख। एतद् तदेव भूर्जपत्रम्।

माढव्य :—अये मे सुदिनम्। सुरांगनायाः प्रेमपत्रं पठिष्यामि अद्य। आनय तावत्। स्वामिन् संभाविता यथाहम्+ त्वया अज्ञाता तथानुरक्तस्य यदि नाम तवोपरि। ननु मम पारिजातशयनीये भवन्ति+ नन्दनवनवाता अप्यत्युष्णकाः शरीरके।

**माणवक** :–मूर्ख सुराङ्गनायाः प्रेमपत्रम् एतद्। न वेदाक्षरम्। कृतं त्वया उपवनं तपोवनं इति मन्ये।

**माढव्य** :–वयस्य अत्र श्लोके नवनवाताः इति लिखितम्। किन्तु कोऽयं नवनवातो नाम।

**माणवक** :–अरे महाब्राह्मण आधुनिका छात्रा इव त्वम् संवृत्तः। अत्र तु नन्दनवनवाताः इति पठितव्यम्। न पुनः नन्द नवनवाताः।

**माढव्य** :–आम्। नन्दनं नाम इन्द्रस्य उद्यानम्। तस्मात् ये वहन्ति ते वाताः अपि उर्वश्याः शरीरके शीतला अपि अति उष्णकाः संजाताः इत्येव सूचितार्थाः ननु। वयस्य माणवक त्वं इदं भूर्जपत्रं सदैव आत्मना सार्धं सर्वत्र नयसि किम्। च्यवनेन महर्षिणा यथा पुनरपि यौवनं उपलब्धं तथैव उर्वश्याः अप्सरसः प्रेमपत्रसान्निध्येन तवापि भविष्यति किम्।

**माणवक** :–रे मूर्ख नैतद् सत्यम्। अहं खलु कालिदासजयंत्युत्सवे एतद् भूर्जपत्रम् तस्य स्मृतिप्रीत्यर्थं उपहारत्वेन प्रदास्यामि।

**माढव्य** :–माणवक अहमपि तत्रैव गन्तुकामः। अहो अनुसंधानम्। नाटके इव दृष्टोऽसि।

**माणवक** : –माढव्य कस्तव उपहारः। दुष्यन्तस्य नामधेयाङ्कितम्।

**माढव्य** :–वयस्य पश्य इदम्। इदम् अंगुलीयकम् एव मम उपहारः कालिदासस्मृतिप्रीत्यर्थम्। पुनर्मिलनसमये वयस्येन शकुन्तलां प्रति उक्तम्–तेन हि ऋतुसमवायचिह्नं संपद्यतां लता कुसुमम्–इति। किन्तु 'नाहं अत्र विश्वसिमि' इति उक्त्वा शकुन्तलया न तद् स्वीकृतम्। अनन्तरं वयस्यः तद् मे अयच्छत्। अहो चण्डकिरणस्य तापः। माणवक कथं यदि अत्रैव शीतलायां छायायामस्यां विश्रान्तिसुखं अनुभूतं स्यात् कंचित् कालम्।

**माणवक** :–प्रथमः कल्पः।

**माढव्य** :–माणवक भोजनोत्तरं निद्रा मां बाधते यथा रात्रौ महाविद्यालयेषु छात्रान्। अतः कथय कांचित् कथाम्। अथवा कुटिलनीतिपरां आत्मनः जीवनगाथामेव श्रावय।

**माणवक** : –कथयिष्यामि। किन्तु हाँ इति करोतु अत्र भवान्।

माढव्य : -भवतु। तथा करिष्यामि।



माणवक : -माढव्य मम वयस्येन पुरुरवसा केशिनाम्ना दानवेन बंदिग्राहं गृहीता सा अप्सरा उर्वशी मोचिता। अनन्तरं स्वप्रीतिपाशेषु गृहीता। यदाप्रभृति सा दृष्टा तदाप्रभृति तामेव चिन्तयन् आसीत्। तेन च स्वरहस्यं मे कथितम् उक्तं चासीत् मम प्रियायाः नाम कस्मै अपि न आख्यातव्यम् त्वया ? किन्तु दास्याः पुत्र्या निपुणिकया एकदा वंचितोऽहम्। जिह्वानियंत्रणे कृतेऽपि बहिर्गतं तद् रहस्यम्।... अरे अयं माढव्यस्तु सुप्तः। अहमपि तावत् शयिष्ये मुहूर्तकम्। इदं मे भूर्जपत्रम् अत्रैव मम समीपे भवतु तद्।

( ततः प्रविशति गौतमः। )

गौतमः —अग्निमित्रनृपस्य प्रियवयस्यः विदूषकोऽहं गौतमः। उज्जयिनीं गच्छामि वयस्यस्य निमंत्रणानुसारम्। अत्रोऽयं आम्रः। बाधते मां सूर्यस्यातपः। शीतलायां च्छायायां क्षणं विश्रान्तः सन् गमिष्यामि। अये पुरुषद्वयं अत्र सुप्तम्। एषः कोऽपि स्थविरः सुप्तः अत्र। अस्य हस्तात् प्रभ्रष्टं इदं अंगुलीयकम् भूमौ। एषः अन्यः वृद्धः। तस्य पार्श्वे इदम् भूर्जपत्रं दृश्यते लेखांकितम्। मया कालिदासस्मृतिप्रीत्यर्थं न कोऽपि उपहारः आनीतः। अयं शोभनः अवसरः। चोरयामि तावत् इदं अंगुलीयकम् भूर्जपत्रं च। ब्राह्मणोऽहं अधुना चौर्यकर्म करोमि। अथवा परवंचनापरं हि मम जीवितं आसीत्। देवी धारिणी इरावती च वंचिते मया वयस्यस्य अग्निमित्रस्य कारणेन। भवतु। यदृच्छया चोपनीतं इदं उपायनं महत्।

कालिदासोपहारार्थं स्यादेतद् उपकारकम्।... भवतु। गृहीतं सर्वम्। अस्मिन् उत्तरीये सुनिबद्धं। अधुना एतौ भाययिष्ये यतः एतयोः संशयस्थानं न भविष्यामि। एतद् दण्डकाष्ठं एतयोः उपरि पातयामि।

माढव्यः —माणवक पश्य तावत्। किं इदं आपतितम्। सर्पः वा स्यात्। भृशं भीतोऽस्मि।

माणवकः— अहमपि तथैव। उर्वश्या यदा भूर्जपत्रं निक्षिप्तं आसीत् नाटके मम शरीरोपरि तदानीं इत्थमेव भीतः आसम्।

माढव्यः–अहमपि शकुन्तले राक्षसवृत्तान्तेन इत्थमेव आकुलीभूतः।

माणवकः –वयस्य न भेतव्यम्। अयं न सर्पः। दण्डकाष्ठमिदम्।

माढव्यः –कस्येदं दण्डकाष्ठम्।

गौतमः –(पुरतः गत्वा) मम।

माढव्यः –कस्त्वम्। सत्यं तवैव इदम् दण्डकाष्ठम्।

गौतमः –सत्यमेव।

माढव्यः –माणवक अनेन तर्हि आवां परिहसितौ।

गौतमः – क्षम्यतां मे अपराधः। उज्जयिनीं गन्तुकामोऽहम्। अग्निमित्रनृपस्य प्रियवयस्यः गौतमः।

माणवकः –माढव्य अयमपि आवयोः बन्धुः। गौतम अयं दुष्यन्तसखो माढव्यः।

माढव्यः –अयं च पुरुरवसः नर्मसचिवः माणवकः।

गौतमः –सर्वे वयं उज्जयिनीं गच्छामः शीघ्रतरम्। सूर्यास्तस्य समयः एषः।

माणवकः –वयस्य तथैव कुर्मः।

## द्वितीयोऽङ्कः।

(समयः–प्रातःकाले। उज्जयिनी–राजप्रासादस्य
समीपे उद्याने। माढव्यो माणवकश्च प्रविशतः।)

माढव्यः–माणवक, सुप्रभातम्।

माणवकः–तवापि मम तथैव। वयस्य गौतमः कुत्र वर्तते। उत्सवः मध्याह्ने प्रारब्धः स्यात्। तावत्कालं उद्यानशोभां द्रष्टुं आवाम् अत्र आगतौ।

माढव्यः–माणवक, गौतमेन विना अग्निमित्रः न किमपि कर्तुं शक्नोति। अत एव तस्य प्रसक्तप्रयासः। भवतु।.. माणवक, अद्य अहम् अवाप्तचक्षुःफलोऽस्मि संजातः।

माणवकः– कथमिव।

माढव्यः– अद्ययावत् मया केवलं शकुन्तलायाः चित्रमेव दृष्टं आसीत्। न सा। किन्तु अद्य तस्याः स्त्रीरत्नसृष्टेः अपरायाः साक्षात् दर्शनं अद्य संजातम्। सा उद्यानं अत्र आगन्तुं प्रस्थिता। अपि दृष्टा त्वया।


माणवकः– न खलु तावत्।

माढव्यः– अये इयं आगच्छति शकुन्तला।

माणवकः– इयं उर्वशी अपि आगता।

माढव्यः– सुदूरं तर्हि गच्छावः।

माणवकः– वयस्य तथा कुर्वः। (निष्क्रान्तौ विदूषकौ।)

शकुन्तला– उर्वशि स्वागतं ते पुरुरवसः प्रियायाः।

उर्वशी– सखि शकुन्तले अनुगृहीतास्मि अनेन बहुमानवचनेन।

शकुन्तला– तातकालिदासस्य मानसकन्ये आवाम्। अस्मिन् तातस्य जयंत्युत्सवे परस्परपरिचयः संजातः इति मोदते मे चेतः। सखि उपविश अत्र शिलातले।

उर्वशी– तथा करोमि।

शकुन्तला– सखि, इयं मालविका अपि अत्रैव आगच्छति।... मालविके स्वागतं ते। अत्र उपविश।

उर्वशी– सखि, एषा मालविका किमिति दुर्मनायमाना इव संलक्ष्यते।

शकुन्तला– अग्निमित्रमहाराजः कार्यव्यग्रः इति विरहव्याकुला स्यात् एषा मालविका।

मालविका– सख्यौ किमिति उपहसथः मां वराकीम्। उर्वशी त्वं अप्सराः। शकुन्तले त्वं अप्सरस्संभवा। अहमेव एका मानुषी नायिका तातकालिदासेन मनसा विनिर्मिता। बालभावे अहं शप्ता केनापि ऋषिणा। अत एव राजदारिका सती अपि दासीत्वम् आपन्ना। देव्याः धारिण्याः बन्धनागारे भृशं दुःखं अनुभूतं मया।

उर्वशी– मालविके मा खलु मंगलावसरे रुदित्वा। परिहासविजल्पितं सखि।

शकुन्तला– मालविके, गतं न शोच्यम्।

मालविका– सखि कथं खलु विस्मरिष्यामि। सर्वं मे गतजीवनं दृष्टिपथं आयाति।

शकुन्तला– स्वजनसंविभक्तं हि दुःखं सह्यवेदनं भवति इति सत्यमेव उक्तं आसीत् सखीभ्याम् अनसूयाप्रियंवदाभ्याम्। मालविके न केवलं त्वया एव किन्तु आवाभ्याम् अपि दुःखं बहुतरं सोढम् आवयोः जीवने।

उर्वशी– सत्यं खलु शकुन्तला वदति। भरतमुनिकृते नाटके लक्ष्मीस्वयंवरे यदा वारुणीभूमिकायां वर्तमानया मेनकया अहं पृष्टा-सखि समागता एते त्रैलोक्य सुपुरुषाः सकेशवाः लोकपालाः। कतमस्मिन्ते भावाभिनिवेशः इति। तदा 'पुरुषोत्तमे' इति भणितव्ये पुरूरवसि इति निर्गता मे वाणी।

तदा गुरुणा भरतेन अहं शप्ता स्वर्गभ्रष्टा संजाता । प्रियस्य मिलनाशया शापः अपि सः प्रियः मेऽभवत् ।

**मालविका**– किन्तु देवी इरावती इव न देवी औशीनरी उद्धतस्वभावा आसीत् इति श्रूयते किं सत्यम् एतद् ।

**उर्वशी**– मालविके सत्यं तद् तया तपस्विन्या स्वपतिःसुखी भवतु इत्यर्थं प्रियानुप्रसाद-व्रतमिषेण मम तेन राज्ञा सह संगमः अनुमतः महानुभावतया।

**शकुन्तला**– ततः परं तव जीवनं सुखमयं स्यात् ।

**उर्वशी**– न हि न हि। सखि दुःखमपि अनुकूलम् तदंतरम्। एकदा गन्धमादनपर्वते विहर्तुं गता अहं तेन राजर्षिणा सह। तदा खलु मन्दाकिन्याः पुलिनेषु गता पर्वतकेलीभिः क्रीडन्ती विद्याधरदारिका उदयवती नाम तेन चिरं निध्याता इति कुपिता अहम् ।

**शकुन्तला**– दूरारूढः खलु प्रणयः असहनः इति सत्यमेव वचः ।

**मालविका**– उर्वशी। त्वया तर्हि स्त्रीस्वभावसुलभमात्सर्यदोषेण एव सुखं लब्धमपि प्रणष्टम्।

**उर्वशी**– यद्यपि एतद् सत्यम् तथापि दोषेऽपि गुणोऽत्र। तदा कुमारवने लताभावमापन्नया मया मम प्रियस्य ममान्वेषणपरस्य विलापः स्वयं श्रुतः। दृष्टं च तस्य मयि दृढं प्रेम। सहस्राक्षस्य आज्ञानुसारं यदा प्रथमं राज्ञः पुत्रमुखदर्शनं भविष्यति तदा मम स्वर्गं प्रत्यागमनं अवश्यंभावि इति विचार्य आपन्नसत्त्वत्त्वमात्मनः स्वर्गीयसामर्थ्येन मम तस्मात् अपि निगूढम्। आयोः मम पुत्रस्य दर्शने ममापि उत्कण्ठा हृदयस्य आसीत्। किन्तु प्रियस्य सौख्यहारकं पुत्रमुखदर्शनम् । इति पुत्रविरहं अपि अनुभूतवती अहम्। इत्थम् मया अनया मालविकया च भृशं दुःखं सोढम् जीवनसंग्रामे। शकुन्तले त्वयापि दुःखं अनुभूतं इति मतेऽपि प्रश्नोऽयं मे पीडयति। किमर्थं सखि शकुन्तले सर्वे त्वामेव कालिदाससाहित्ये श्रेष्ठां नायिकां कथयन्ति। अहो ते सम्मानः। तव शैशवं यौवनं प्रणयकथां पातिव्रत्यं मातृस्नेहश्च सर्वं खलु स्त्रीजीवनस्य सारभूतं सम्यक् दर्शितं तातेन अभिज्ञानशाकुन्तले। मम व्यक्तिरेखा न तादृशी सुस्पष्टा कृता इति मे प्रतिभाति। पुत्रस्नेहशून्या क्रूरहृदया विषयसुखासक्ता उर्वशी इति मे ख्यातिः। भाग्यवती

शकुन्तले त्वमेव । मुनितेजः संयमः मनोबलं, अप्सरसः तु सौन्दर्यं लालित्यं च इत्येषां गुणानां दुर्लभः संगमः त्वयि एव ।

**शकुन्तला**– सखि सत्यमेव तव वचनम् । नाहं स्तुतिपात्रं श्रेष्ठां वा आत्मानं मन्ये । किन्तु दुःखविषये यदि विमर्शः क्रियते चेत् तर्हि ममैव व्याकुलतमा अवस्था संजाता आसीत् इति मे मतम् । मालविके त्वया देव्या धारिण्याः मत्सरः सोढः । किन्तु अग्निमित्रः सदैव तव साहाय्यमकरोत् । उर्वशीत्वं खलु भाग्यशालिनी यतः त्वया सपत्न्याः औशिनर्याः द्वेषः न अनुभूतः । भरतस्य महामुनेः शापः अपि प्रियमिलने परिणतः तव विषये । किन्तु मया च कठिनतमं दुखं सोढम् । दुर्वाससः शापेन ममोपरि वज्राघातः इव कृतः । यस्मिन् मम स्नेहः स एव मां न स्मृतवान् । परिणये एव राजर्षेः दुष्यन्तस्य संदेहः आसीत् । ततः कुतः तदानीं मे दूराधिरोहिणी आशा । आपन्नसत्त्वा तदानीं अहं परित्यक्ता आसम् । उर्वशी त्वया दिव्यबलयुतया आत्मनः आपन्नसत्वत्वम् कथमपि सुगोपितं प्रियतोऽपि । मम किन्तु असहाया अवस्था जीवन्मृतिः एव मया अनुभूता तदा ।

**मालविका**– सखि उर्वशी सत्यं वदति इयं साध्वी शकुन्तला । शकुन्तले कथय तावत् आत्मनः प्रणयगाथाम् । न आवाभ्यां संपूर्णतया ज्ञाता तव जीवन-कथा । आवयोः आनन्दः तव च पुनःप्रत्ययानन्दः संजायेत ।

**उर्वशी**– प्रथमः कल्पः । सखि शकुन्तले सच्चरित्रश्रवणे ममापि अस्ति उत्कण्ठा ।

**शकुन्तला**– युवयोः नियोगः इति कथयामि ।

**उर्वशी**– शकुन्तले, विश्वामित्रमहर्षेः मेनकायाः च प्रेमसंगमफलम् तव जन्म इति श्रुतं मया । बाल्ये मात्रा उज्झिता त्वं शकुन्तैः लाता नाम वर्धिता इति अपि प्रसिद्धम् । शकुन्तला इति अस्तु सार्थं नाम तव ।

**मालविका**– कण्वेन महर्षिणा स्नेहवशात् संवर्धिता इति तातकाश्यपस्य दुहिता, इति अपि श्रुतं सर्वैः ।

**शकुन्तला**– सत्यमेतत् सर्वम् । तातस्य जीवितसर्वस्वं अहम् आसम् । एकदा मम प्रतिकूलं दैवं शमयितुं अतिथिसत्काराय मां नियुज्य तातः सोम-तीर्थं गतः आसीत् ।

**उर्वशी** – तदा किं अभवत्।



**शकुन्तला**– आश्रमवृक्षकाः न केवलं तातस्य किन्तु ममापि प्रियाः। मम सोदर-स्नेहः तेषु आसीत्। सखीभ्यां सार्धं जलसिञ्चनपरा अहम् एकदा आसम्। तदानीं यदा नवमालिका मया जलेन प्रोक्षिता तदा तां उज्झित्वा सलिलसेकसंभ्रमोद्गतः कोऽपि मधुकरः मे वदनं अभ्यवर्तत। तदा केनापि भ्रमरः सः अपसारितः मदनसदृशेन राज पुरुषेण। भ्रमरेण सार्धम् मम हृदयमपि दूरं नीतवान् असौ। कामेन पञ्चेषवः ममोपरि तदैव पातिताः। मम जीवनवृत्तान्तः सखीभ्याम् तस्मै कथितः। अप्सरसः कन्या अहं इति ज्ञात्वा सः भृशं प्रीत इव अलक्ष्यत। मां प्रति तेनापि राजर्षिणा स्वप्रीतिः चातुर्येण सूचिता। तपोवनविरोधिनः भावस्य प्रथमं एव अहं गमनीया संवृत्ता तदानीम्। अनन्तरं आश्रमरक्षणार्थं ताते असंनिहिते उषिते राजर्षौ तस्मिन् मम प्रेम-व्यथां परिज्ञाय सखीभ्याम् प्रेमपत्रलेखने नियुक्ता अहम् शुकोदर-सुकोमले नलिनीपत्रे तद् अलिखम्।

**मालविका**– श्रावय तत् आवयोः।

**शकुन्तला**– मया तदा लिखितं आसीत्।

**तव न जाने हृदयं मम पुनः कामो दिवापि रात्रावपि।**
**निर्घृण तपति बलीयः त्वयि वृत्तमनोरथायाः अङ्गानि ॥**

**उर्वशी** – अतः परं ज्ञायते एव। यतः 'लभेत वा प्रार्थयिता न वा श्रियं। श्रिया दुरापः कथमीप्सितो भवेत्' इति उक्तमेव तातेन।

**मालविका**– सखि यदि गान्धर्वेण विधिना स राजर्षिः त्वाम् परिणीतवान् तर्हि कथं विस्मृतः त्वाम् अनन्तरम् सः इति न ज्ञायते।

**शकुन्तला**– तदेव कथयामि। राजधानीं प्रति निवृत्ते तस्मिन् राजर्षौ अहं आत्मानं अपि विस्मृतवती। तस्य चिंतनपरा सदैव विमनस्का आसम्। तदानीमेव अतिथिविशेषाः दुर्वासः तपोवनं अस्माकं आगताः। मया आतिथ्यम् तेषां न कृतम् यतः आगमनं अपि तेषां न मया ज्ञातमासीत्। तदा तैः शप्ता अहं (नेपथ्ये) विचिन्तयन्ती यमनन्यमानसा तपोधनं

वेत्ति न मां उपस्थितम्। स्मरिष्यति त्वां न स बोधितोऽपि सन्
कथां प्रमत्तः प्रथमं कृतामिव।

उर्वशी – कोऽन्यः पावकात् दग्धुं प्रभवति। प्रकृतिवक्रः सः महर्षिः।

शकुन्तला– यदा पतिकुलं प्रस्थिता अहम्, तदानीं आर्यपुत्रदर्शनोत्सुकायाः अपि आश्रमपदं परित्यजन्त्याः दुःखेन मे चरणौ पुरतः प्रावर्तताम्। तदानीं स्नेहात् अरण्यौकसः अपि तातस्य कण्वस्य वैक्लव्यं चेतसः संजातम्। तेन मे यः उपदेशः तदा कृतः आसीत् अमरसंदेशः सः पतिव्रताभ्यः।

मालविका– श्रावय तं उपदेशम्।

शकुन्तला– तातेन कथितम् :–

शुश्रूषस्व गुरून् कुरु प्रियसखीवृत्तिं सपत्नीजने
भर्तुर्विप्रकृतापि रोषणतया मा स्म प्रतीपं गमः।
भूयिष्ठं भव दक्षिणा परिजने भाग्येष्वनुत्सेकिनी
यान्त्येवं गृहिणीपदं युवतयः वामाः कुलस्याधयः।

उर्वशी– एतावान् एव वधूजनस्य उपदेशः। न खलु धीमतां कश्चित् अविषयो नाम। वनौकसोऽपि लौकिकज्ञा अपि ते भवन्ति।

शकुन्तला– यदा अहं प्रस्थिता अनन्तरं तदा

**उद्गलितदर्भकवलाः मृगाः परित्यक्तनर्तनाः मयूराः।**
**अपसृतपांडुपत्रा अमुञ्चन् अश्रूणि इव लताः॥**

ततः निवसने मे कोऽपि असज्जत। श्यामाकमुष्टिपरिवर्धितको मम पुत्रकृतकः मृगशिशुः एव आसीत् सः। आश्रमात् नगरं प्राप्तेषु अस्मासु यत्र सः राजर्षिः दृष्टः तदा वृत्तान्ते मद्विषयके शार्ङ्गरवेण कथिते यदा सः 'किम् इदम् उपन्यस्तं' इति उक्तवान् तदा प्रणष्टा मे दूराधिरोहिणी आशा। आर्यस्य परिणये एव सन्देहः आसीत्। दैवदुर्विपाकेन प्रत्यभिज्ञानार्थं अङ्गुलीयकम् अपि मे अंगुल्यां नासीत्। शचीतीर्थसलिले तद् प्रभ्रष्टं आसीत्। तदा मया आश्रमे भूतपूर्वः वृत्तान्तः अन्यः कथितः।

मालविका– कः सः वृत्तान्तः।

**शकुन्तला–** मया दुष्यन्तमहाराजाय कथितम्—ननु एकस्मिन् दिवसे नवमालिकाश्रमे नलिनीपत्रगतं उदकं तव हस्ते सन्निहितं आसीत्। तत्क्षणे स मे पुत्रकृतकः दीर्घापाङ्गः नाम मृगपोतकः उपस्थितः। त्वया अयं तावत् प्रथमं पिबतु इति उपच्छन्दितः उदकेन। न पुनः ते अपरिचयात् हस्ताभ्याशमुपगतः। तदा त्वं इत्थं प्रहसितोऽसि। सर्वः सगन्धेषु विश्वसिति। द्वावप्यारण्यकौ इति।

**मालविका–** तदा तेन राज्ञा किं उक्तम्।

**शकुन्तला–** एवम् आदिभिः आत्मकार्यनिर्वर्तीनीनाम् अनृतमयवाङ्मधुभिः आकृष्यन्ते विषयिणः। अन्यच्च।

स्त्रीणां अशिक्षितपटुत्वममानुषीषु
संदृश्यते किमुत यत् प्रतिबोधवत्याः।
प्रागन्तरिक्षगमनात् स्वमपत्यजातम्
अन्यैर्द्विजैः परभृताः खलु पोषयन्ति॥

तदा अहमपि क्रोधेन ज्वलन्ती तं अवदम्—अनार्य आत्मनः हृदयानुमानेन प्रेक्षसे। कः इदानीं अन्यः धर्मकञ्चुकप्रवेशिनः तृणच्छन्नकूपोपमस्य तवानुकृतिं प्रतिपत्स्यते।

**उर्वशी –** शकुन्तले नाहं दुष्यन्तः। उर्वशी खलु अहम्। अन्यच्च गतवृत्तं एतद्।

(अपटीक्षेपेण)

**माढव्यः–** भवति शकुन्तले, त्वर्यतां त्वर्यतां। वयस्येन त्वं आहूता। उत्सवः प्रारब्धः अपि। अन्यच्च तत्र सभागारे बहवः मृगनयन्यः उपस्थिताः। पुनरपि नवीनं शाकुन्तलं न भवेत् इति कथयामि लघु लघु गच्छ तत्र।

**माणवकः–** अयि भवति उर्वशी।

**गौतमः–** अयि मालविके।

**उभौ–** वयस्यः तव आगमनं प्रतीक्षते। लघु लघु गच्छ तत्र।

**शकुन्तला–** सख्यौ गच्छामः तावत् सर्वा शीघ्रमेव तत्र।

(सर्वाः गच्छन्ति)

**गौतमः–** माढव्य गताः एताः। अधुना कथय कस्तव उपहारः कालिदासस्मृतिप्रीत्यर्थम्।

**माढव्यः**– मया खलु अंगुलीयकम् आनीतम्। पश्य एतद्। आऽऽअहो अंगुलीयकशून्या मे अंगुलिः।

**माणवकः**– माढव्य, यथा शाकुन्तले शकुन्तलायाः हस्तात् प्रभ्रष्टं तत् शचीतीर्थे तथैव तव हस्तात् उद्याने पतितं स्यात्।

**माढव्यः**– दर्शितमत्र विधिना प्रभुत्वम्।

**माणवकः**– मया उपाहरत्वेन भूर्जपत्रमेव उर्वश्याः प्रेमपत्राङ्कितं आनीतम्। पश्य एतद्। अरे मम तद् भूर्जपत्रम् न दृश्यते। कुत्र विनष्टम्।

**माढव्यः**– उर्वशीं दृष्टवा अवाक् स्थितेन त्वया यथा विक्रमोर्वशीये नाटके स्वहस्तात् प्रभ्रष्टं असीत् तथैव मार्गोद्याने विश्रान्तिसुखं निद्रासुखं च अनुभवता त्वया विस्मृतं स्यात्।

**गौतमः**– अहं आदेशिकः। यदि मे चरणौ संवाहयथः तर्हि सर्वेषां प्रश्नानां उत्तरं दास्यामि।

(तथा कुरुतः)

**गौतमः**– माढव्य इदं तवाङ्गुलीयकम्। माणवक इदं ते भूर्जपत्रम्। गच्छतम् अग्रतः। अनुपदं आगतोऽस्मि।

**माणवकः**– गौतम त्वं किं चिरायसे।

**गौतमः**– अरे मूर्ख न गच्छेत् ब्राह्मणत्रयं इति प्रसिद्धा उक्तिः।

**माणवकः**– तर्हि गच्छावः आवाम्।

(तौ गतौ)

**गौतमः**– मया चौर्यकर्म कृतम्। किन्तु पश्चात्तापदग्धचेतसा परिमार्जनं अपि कृतम् पापस्य तस्य। अधुना को मम उपहारः स्यात्। अरे अयं नातिदूरे अशोकः प्रफुल्लः वर्तते। तस्य पुष्पाणि एव उपहारः स्यात् मे कालिदासस्मृति प्रीत्यर्थम्। ( गच्छति )

**( भरतवाक्यम्। )**

प्रवर्ततां प्रकृतिहिताय नागरः
सुवीरता श्रुतमहतां महीयताम्।
यवनशत्रुपराजयो भवेत्
शास्त्रिणां सुविनयो हि जयेत्॥

# उणादिसूत्राणि पाणिनिश्च

अनन्तशास्त्री फडके

अष्टाध्याय्याः पाणिनिकर्तृकत्वे न संशेरते केचन। परन्तूणादिसूत्राणां संप्रति विद्यमानानां पाणिनिः कर्ता शाकटायनो वेति विषयममुमधिकृत्य बहवः संदिहन्ति। तथाहि–

(१) वार्त्तिककारस्तत्र तत्र पाणिनिसूत्रविहितप्रत्ययादीनामुणादिसूत्रविहित-प्रत्ययेष्वतिव्याप्त्यादिदोषनिवारणार्थं तत्र तत्र वार्तिकानि रचयति स्म। तेन ज्ञायते स पाणिनिमेवोणादिसूत्रकर्तारं मन्यते। नो चेदुणादिसूत्राणां शाकटायनकर्तृकत्वे तत्प्रत्ययेषु समागतातिव्याप्त्यादिदोषवारणार्थं वार्तिक-प्रणयनं तस्य व्यर्थं सम्पद्येत। न हि शास्त्रकाराः स्वशास्त्रीयकार्यनिर्वा-हार्थं रचितानां स्वाभिमतानां संकेतानां पारिभाषिकशब्दानां वान्यत्र शास्त्रान्तरविहितसंकेतादिष्वतिव्याप्त्यादिदोषवारणार्थं प्रयतमाना दृश्यन्ते।

(२) तथा भाष्यकारोऽपि वार्तिककारप्रदर्शितदोषवारणार्थं विशेषतश्चेष्ट-मानः "भगवतः पाणिनेः प्रातिपदिकविज्ञानाच्च सिद्धम्" "उणादयोऽ-व्युत्पन्नानि प्रातिपदिकानि" इत्यादिकं तत्र तत्र भाषते। तेन सोऽपि वार्तिककार इवोणादिसूत्राणि दोषरहितानि पाणिनिकर्तृकाणीति मन्यते। नो चेदुणादिसूत्राणामन्यकर्तृकत्वेन व्याकरणान्तरत्वेन तत्र दोषदानमनु-चितं "अपाणिनीयं भवति" इत्यादिकं किमपि वार्तिककारकृतौ कथयेत्परन्तु स तथा किमपि न कथयति स्म।

(३) कैयटमतमेतद्विषये सुस्पष्टं नास्ति यतस्तेन कुत्रापि स्पष्टं न लिखितम्। तथापि नागेशभट्ट इव सोऽप्युणादिसूत्राणां शाकटायनकर्तृकत्वं मनुते इति प्रतिभाति।

(४) नागेशभट्टस्तु सुस्पष्टं सुविस्तरं च प्रत्यपादयदुणादिसूत्राणि शाकटायन-कर्तृकाणीति। एतत्त्वग्रे सविस्तरं समालोचयामः।

(५) "पाणिनिस्तथा तस्य संस्कृतसाहित्ये स्थान" लेखकः थियोडरगोल्डस्करो लन्दननगरवास्तव्यः पृष्ठे १७६ स्वमतं लिखति पाणिनिकर्तृकाण्युणादि सूत्राणीति

(६) थियोडर आफ्रे—लेखकः बानजर्मदेशीयः ईशवीय १८५९ तमे वर्षे उणादिसूत्रेपूज्वलदत्तस्य टीकायाः—प्रस्तावनापृष्ठे ८ संख्याके सुस्पष्टं लिखितवान् शाकटायनकर्तृकाण्युणादिसूत्राणीति।

(७) "पाणिनेरुणादिसूत्रेषु पुनश्चर्चा" लेखकः—के. वी. पाठकः B.A. आदिपदवीभाक् पुण्यपत्तनवास्तव्यः, चतुर्थभागे १११–१३६ पृष्ठेषु तथा एकादशभागे ९२ पृष्ठे लिखति पाणिनिकर्तृकाण्युणादिसूत्राणीति।

(८) श्रीमान् जी. एस्. पदे एम्. ए. बडोदावास्तव्यो लिखति ताम्बूलमञ्जिरिसंज्ञके महानिबन्धे प्रसङ्गतः शाकटायनकर्तृकाण्युणादिसूत्राणीति। अत्र विषयेऽनेन महोदयेन नूत्नानि कानिचित्प्रमाणानि प्रदर्शितानि। तथान्येषां मतानां खण्डनं कृत्वा नागेशभट्टमतं सुविस्तरं साधु च समार्थ्यत।

एवं च विवादग्रस्ते सन्देहबहुले विशेषविद्वत्पराक्रान्तेऽस्मिन् विषये किमपि निश्चयोत्पादकं वक्तुं वयं प्रवर्तामहे।

विवेचनप्रारम्भात्पूर्वं सर्वमान्या निश्चिताश्च केचन विषयास्तथा सन्देहजनकाश्च यथाक्रमं पाठकानां पुरत उपस्थाप्यन्ते। येन विषयज्ञानं सुसुखेन तैर्ग्रहीतुं शक्येत।

(१) शाकटायनो वैयाकरणः पाणिनि-यास्क-वार्तिककार-भाष्यकाराणां मान्यः तेभ्योऽतिप्राचीनश्च।

(२) निरुक्तकाराद् यास्कात्पूर्वं पाणिनिर्जातो यास्कस्य मान्यश्च, यतः स "वैयाकरणानां चैके" अत्रत्य 'एके' पदेन पाणिनिं परामृशति, एवं संहितायाा लक्षणं कथयता यास्केन "परः संनिकर्षः संहिता" इति पाणिनेः सूत्रमेवोद्धृतम्। पाणिनिना तु कुत्रापि यास्कस्य तन्निरुक्तस्य वा संकेतोऽपि न कृतः। केचन "यस्कादिभ्यो गोत्रे" इतिसूत्रं कुर्वन् पाणिनिर्निरुक्तकारं यास्कं सूचयतीति मन्यन्ते। तत्तु यस्ककुलजयास्कानां बहूनांसंभवान्नोचितम्।

(३) व्युत्पत्तिपक्षोऽव्युत्पत्तिपक्षश्चोभौ पाणिनिः संमनुते, स चाभिप्रैति केचन शब्दा अतिरूढा निर्वक्तुमशक्याः, केचन प्रकृतिप्रत्ययौ प्रदर्श्य निर्वक्तुं शक्यन्त इति। यास्कस्तु सर्वान् शब्दान् निर्वक्ति, शब्दगतमेकं वर्णमप्यवलम्ब्य तद्वर्णयुक्तधातुतः स तं शब्दं व्युत्पादयति यथा निघण्टुशब्दः।

(४) उणादिप्रत्ययविधायकमेकं सूत्रं पाणिनिर्मनुते, यतस्तेन "उणादयो बहुलम्" इति सूत्रं रचयित्वा "कृवापाजि" इति सूत्रमुण्प्रत्ययविधायकं समसूच्यत।

(५) प्रचलितेषु कर्तृविषये संदिग्धेषूणादिसूत्रेषु पाणिनिरचिताः 'प्रत्याहार-अनुबन्ध-अनुबन्धनिमित्तककार्य-गुणवृद्धिसंप्रसारणप्रभृतयः संकेता अङ्गीकृताः समुपलभ्यन्ते।

(६) अष्टाध्यायीस्थितसूत्राणां रचनायां यादृशं कौशलमुपलभ्यते तादृशमुणादिसूत्रेषु नोपलभ्यते प्रत्युत तत्रालाघवपुनरुक्तिप्रभृतयो दोषाः समुपलभ्यन्ते "अर्धमात्रालाघवेन पुत्रोत्सवं मन्यन्ते वैयाकरणाः" एषोक्तिरष्टाध्यायीस्थसूत्राणांकृते सुफलति, नोणादिसूत्राणां कृते।

(७) वार्तिककारभाष्यकारतः पूर्वं अष्टाध्यायीसूत्रैःसहोणादिसूत्राणां परस्परं कश्चन सम्बन्धविशेषः प्रचलति, यतः पाणिनिसूत्रेषूणादिसूत्रेषु वा परस्परसम्बन्धेन समागतातिव्याप्त्यादिदोषजातं वारयितुं वार्तिककारभाष्यकारौ चेष्टेते। आस्ताम्। संप्रत्युणादिसूत्रविषये पाणिनिः कर्ताऽन्यो वा शाकटायनः कर्तेति सन्देहजनकं कारणजातं किञ्चित्प्रदर्श्यते :—

(१) अष्टाध्यायीसूत्रसिद्धशब्दसिद्ध्यर्थमप्युणादिसूत्राणि विद्यन्ते। यथा पलितादिशब्दसिद्धौ। "अतः कृकमि०" सूत्रे कमेः पृथक् कंसशब्दग्रहणं पाणिनिः कृतवान्। परन्तु कंसशब्दसिद्ध्यर्थमप्युणादिषु "कमेः सः" इतिसूत्रमास्ते, एवमन्यत्रापि।

(२) पाणिनिव्याकरणे केचन प्रत्ययविशेषाः समुपलभ्यन्ते, येषां फलान्युणादिसूत्रैरेव सिध्यन्ति यथा "तितुत्रतथस०" "अयामन्ता०" इति।

एवमादीनि सन्देहजनकानि कारणानि समालोच्य विद्वांसः संदिहन्ति उणादिसूत्राणि पाणिनिना कृतानि शाकटायनेन वेति। सन्देहोऽयं न संप्रत्येव प्रचलितः, किन्तु नागेश-कैय्यट-भाष्यकार-वार्तिककारसमयतः

प्रचलति। परन्तु विषयेऽस्मिन् नागेशेनैवैकेन सुविस्तरं विविच्योणादिसूत्राणि शाकटायनेन तदनुसारिभिर्वैयाकरणैर्विरचितानीति सिद्धान्तितम्। एतं विषयमग्रे समालोचयामः।

अत्र प्रकृतविषयोपकारकमेकं निवेदनमस्ति तद्यथा–

(१) अष्टाध्याय्यां बहूनां वैयाकरणानां नामनिर्देशपूर्वकं मतभेदप्रदर्शनमुपलभ्यते; यथा शाकटायन-गार्ग्य-भारद्वाज-शाकल्य-सेनकादीनाम्। एतेषां ग्रन्थाः संप्रति नोपलभ्यन्ते। यतः सर्वसंग्राहकपाणिनिकृतव्याकरणेन गतार्थत्वात्ते प्रायो विलुप्ता एव। परन्तु तेषां सर्वेषां ग्रन्था एकस्वरूपा एवासन्निति वक्तुं न युज्यते। यतः संप्रत्युपलब्ध-कातन्त्र-मुग्धबोध-जैनेन्द्र-सारस्वत प्रभृतिव्याकरणानां स्वरूप-सूत्र-प्रत्याहार-संकेत-परिभाषादीनां भिन्नतयोपलभ्यमानत्वेन पूर्वत्रापि दृष्टानुसारिकल्पनायाः कर्तुमुचितत्त्वेन केवलं तैर्व्याकरणैः सिद्धानि शब्दरूपाणि समानान्येव। क्वचनाल्पस्थलेषु मतभेदो दृश्यते। तं च मतभेदं पूर्ववैय्याकरणानामग्रिमवैयाकरणाः स्वरचितव्याकरणग्रन्थेषु प्रादर्शयन् यथा पाणिनिः प्रादर्शयत्। तत्प्रदर्शनार्थं पाणिनिना विभाषा, वा, अन्यतरस्यामितिशब्दाः प्रयुक्ताः। अत्रविषये संप्रति सर्वेषां रूपद्वयं मान्यमेव। परन्तु पाणिनेः समये ये प्रयोगाः लोके न प्रचलिताः परन्तु प्राचीनव्याकरणेषूपलभ्यन्ते स्म, तेषां कृते तत्तद्वैय्याकरणानां नामग्राहं तत्तत्प्रयोगप्रदर्शनं पाणिनिः करोति।

यत्र शब्दसिद्ध्यर्थमनुगमकनियमकरणमशक्यं एकस्य शब्दस्य रूपाणामनेकविधत्वं तत्र बहुलशब्दप्रयोगं कृत्वा लोकाश्रयत्वमस्मिन् स्थलेऽवलम्बनीयमिति सूचयति।

(२) पाणिनिसूत्रेषु येषां वैयाकरणानां नामान्युपलभ्यन्ते तेषां व्याकरणानि सन्धि-नाम-क्रिया-कारक-कृत्प्रकरणेषु स्युरिति प्रतिभाति। यथा शाकटायनव्याकरणं–"त्रिप्रभृतिषु शाकटायनस्य" "लङः शाकटायनस्यैव" "व्योर्लघुप्रयत्नतरः शाकटायनस्य" इमानि सूत्राणि दृष्ट्वा शाकटायनव्याकरणं सन्धि-वर्णोच्चारतिङ्प्रकरणादिषु स्यादिति संभाव्यते। आस्तामिदम्। प्रकृतं प्रोच्यते–नागेशेनात्र विषये उक्तम् "अत्र वदन्ति कृवापेत्यादिसूत्राणि सर्वं नाम धातुजमिति नैरुक्तमतानुसारिशाकटायनादिप्रणीतव्याकरणा-

न्तरादभियुक्तैः संगृहीतानि" इति उणादिसूत्रशेखरे, तथोद्योते (३,३,१) "एवं च कृवापेत्यादिसूत्राणि शाकटायनस्येति सूचितम्" इति।

पुण्यपत्तननिवासी के. बी. पाठकमहोदयः "पाणिनिकृतोणादिसूत्रविषये चर्चा' (भाग ११ पृ. ९२) इतिसंज्ञके स्वनिबन्धे शङ्कते 'पाणिनेः पूर्ववर्तिना शाकटायनेन पाणिनिकृत-संकेत-परिभाषा-अनुबन्ध-तत्प्रयुक्त-कार्यजातमवलम्ब्य कथं सूत्राणि रचितानि भवेयुरिति संदिह्य नागेशोक्त-कथनमसङ्गतमिति निर्णीतवान्।

परन्त्वत्र विषये बडोदा (वरोदर) निवासिना प्रसिद्धेन संशोधकेन विदुषा श्रीयुतेन जी. एस्. पदे एम्. ए. महोदयेन श्रीमत्पाठकप्रभृतीनां मतान्यालोच्य श्रीमन्नागेशकथनं सप्रमाणं साधयितुं प्रायत्यत। यद्यपि तन्मतं सर्वांशेन स्वीकर्तुं नाहं प्रभवामि तथापि नागेशकथनस्य विवेचनं सप्रमाणं सविस्तरं चाद्य यावत् केनापि न कृतमित्यपि सुस्पष्टम्। तेषां कथनस्येदं तात्पर्यम्— "सर्वं हि नाम धातुजमिति निर्दिष्टमतावलम्बिना शाकटायनेन कानिचिदुणादिसूत्राणि पाणिनेः पूर्वं रचितानि। येषां त्यागं कर्तुं पाणिनिर्नं-प्राभवत्, अतः सर्वसंग्राहके स्वव्याकरणे तेषां संकलनं "उणादयो बहुलम्" इत्याकारकेणैकेन सूत्रेण संसूच्य स्वव्याकरणं सर्वाङ्गपरिपूर्णं कृतवान्। पञ्चपादी दशपादीसूत्राणीत्याकारकाणि संप्रत्युपलभ्यमानानि तु भिन्ने भिन्ने समये शाकटायनानुकारिभिरनेकैर्वैयाकरणैर्विरचितानि। तेषा-मेककर्तृकत्वाभावेन तद्रचनायां शैथिल्यपुनरुक्तिप्रभृतयोऽनेके दोषाः समुपलभ्यन्त इति तु समुचितमेव" इति।

नागेशोऽपि "उणादयो बहुलम्" इतिसूत्रविवरणे प्राय इत्थमेव लिखति "वैदिकानां रूढानां संज्ञाशब्दानां च प्रातिस्विकरूपेण साधुत्व-बोधनस्याशक्यत्वाच्छास्त्रान्तरे प्रायः समुच्चयनादि कृतं तेषां सर्वेषां साधुत्वाभ्यनुज्ञानाय चानेनाचार्येण बहुलग्रहणं कृतं तेनात्र व्याकरणे सर्वेषा-मसंग्रहेऽप्यसंदिग्धं साधुत्वं बोधितं, पाणिनिशास्त्रबोधितानामेवेदानीं साधुत्वात्" इति।

एवंरीत्या पाणिनेः पूर्वं जातस्य शाकटायनस्योणादिसूत्राणीति-पक्षमवलम्ब्य समागतशङ्कानां निवारणे सामान्यतो जातेऽपि काश्चन शङ्का मनस्यवशिष्यन्त एव। तथाहि—

(१) यस्य शाकटायनस्य पक्षः "शाकटायनो नैरुक्तसमयश्चेति यास्कवचने" सर्वं हि नाम धातुजम्" इति भाष्यवार्तिके च निर्दिष्टः शाकटायनः, स एव "त्रिप्रभृतिषु शाकटायनस्य" इत्यादिषु सूत्रेषु पाणिनिना निर्दिष्ट इति कथने न किञ्चित्प्रबलं प्रमाणमुपलभ्यते नामसादृश्यं विना। कदाचित् शाकटायनद्वयं भवेदेकः पाणिनिना निर्दिष्टः, अपरश्च यास्कभाष्य-वार्तिकनिर्दिष्टः पाणिनेरनन्तरं जातः। वस्तुतः शाकटायनचतुष्कं शाक-टायनत्रयं वा प्राचीनग्रन्थेषूपलभ्यते द्वौ तु विद्येते एवेति निश्चप्रचम् एतदग्रे प्रदर्शयामः।

(२) "उणादयो बहुलम्" इदं सूत्रं पाणिनेरस्तीति निर्विवादम्। तत्र निर्दिष्ट उण्-प्रत्ययः तथा आदिपदेन सूचिता अन्ये केचन प्रत्ययाः पाणिनेः पूर्वं स्थितेन शाकटायनेन रचितव्याकरणस्था इति कथनेऽपि न किमपि प्रबलं प्रमाणम्। "भूसत्तायाम्" इति स्वरचितधातुपाठस्थं प्रथमधातुमादिपदबोध्यानन्यांश्च अवलम्बनीयान् धातूनादाय "भूवादयो धातवः" इति सूत्रं पाणिनिः प्रणि-नाय, एवं "स्वरादिनिपातमव्ययम्" इत्यादिषु गणनिर्देशयुक्तसूत्रेषु समाना गतिः। तथा पाणिनिनैव "कृवापाजि०" इत्यादीनि कानिचिद् गणस्था-पनयोग्यानि सूत्राणि विरचय्य तेषां केषांचन सूत्राणां गणं विधाय सर्व-थैतत्करणमशक्यमयोग्यं चेति मत्वा कथंचित्प्रदर्शितदिशा लोकाश्रयत्व-मवलम्ब्य कार्यं निर्वोढव्यमिति सूचयितुं बहुलग्रहणयुक्तम् "उणादयो बहु-लम्" इति सूत्रं कृतं स्यादित्यपि संभाव्यते। एवंच स्वव्याकरणं सर्वाङ्गपरि-पूर्णं तेन समपादि।

(३) एवं नागेशोक्तदिशा "तितुत्रथ०" इत्यादिषु केषुचित्सूत्रेषु विद्यमानानां प्रत्ययानां पाणिनिरचिताष्टाध्याय्या साफल्यं न भवति, तेषां विधानं केवलं शाकटायनव्याकरणस्य मान्यतां प्रदर्शयितुमिति समाधानं न रोचते विद्वद्भ्यः। भाष्यकारेण सर्वत्रोणादिप्रत्ययेषु समागतविचारे सूचिता-व्युत्पत्तिपक्षवत्क्वचिद् व्युत्पत्तिपक्षोऽपि सूचित आस्ते, तद्विषयेऽग्रे विवे-चयामः।

(४) भाष्यकारेणानेकस्थलेषु पाणिनिसूत्रबोध्यप्रत्ययानां विवरणे उणादिसूत्रबोध्यप्रत्ययेषु दोषः समापादितः, यथा "आयनेयीनी०" "ठस्येकः" इत्यादिषु, तमुद्धर्तुम् "उणादयोऽव्युत्पन्नानि प्रातिपदिकानि" इत्याद्युक्तम्। अत्रैकाशङ्का समुदेति। पाणिनेः पूर्वं सप्ताष्टौ वा शाकल्यप्रभृतिवैयाकरणा जातास्तेषां व्याकरणानि आसन् तद्बोध्यप्रत्ययेषु दोषमप्रदर्श्य केवलं पाणिनेः पूर्वं जातत्वेन संभाव्यमानशाकटायनेन रचितेषूणादिसूत्रेषु दोषप्रदर्शनमनुचितं प्रतिभाति। अतो निश्चितो विचारो मनसि प्रादुर्भवति पाणिनेरुणादिसूत्रैः सह कश्चन दृढः सम्बन्धः स्यादिति। दोषपरिहारकरणसमयेऽपि "अपाणिनीयं तु भवति" इतिवत्किञ्चिदनुक्त्वा "उणादयोऽव्युत्पन्नानि प्रातिपदिकानि" इति भाष्यकारः कथयति।

(५) किञ्च पाणिनेः पूर्वं जातः शाकटायनः सर्वथाऽनन्तरजातस्य पाणिनेः संकेतपरिभाषा-अनुबन्ध-अनुबन्धजकार्याणि चावलम्ब्योणादिसूत्रजातं कुर्यादिति संभावना न कथमप्यौचित्यं भजते, प्रत्युत पाणिनिरेव शाकटायनविरचितसंज्ञादीन् गृहीतवानिति कल्पयितुं शक्येत, परन्तु कल्पनाया अस्याः स्वीकारे न किञ्चिद् भाष्यकारोक्तमन्यद् वा प्रबलं प्रमाणमुपलभामहे केवलं महतीनां प्रातिपदिक–सर्वनामस्थानप्रभृतीनां संज्ञानां विषये प्राचामनुसरणं 'आङ इति टासंज्ञा प्राचाम्' इत्यादिकं आधुनिकविचारकप्रोक्तस्थलसूत्रजातं वर्जयित्वा। अस्तु।

अनेन विचारजातेनेत्थं निष्कर्षः समुपलभ्यते :—

(क) पाणिनेः पूर्वं जातस्य शाकटायनस्योणादिसूत्रपाठो नासीत्। पाणिनिविरचितसूत्रत्रयं "त्रिप्रभृति०" "लङः शाकटायनस्यैव" "व्योर्लघुप्रयत्नतरः०" इत्याकारकं दृष्ट्वा सन्धि-तिङप्रभृतिसकलव्याकरणविभागेषु शाकटायनव्याकरणमासीदिति कल्पयितुं शक्यते।

(ख) पाणिनेर्गणपाठ-धातुपाठादेरपेक्षयाल्पीयानुणादिसूत्रपाठः स्यादिति निश्चयेन वक्तुं शक्यते।

(ग) द्वितीयशाकटायनः (भृगुगोत्रजो भवत्वाङ्गिरसगोत्रोत्पन्नो वा भवतु) पाणिनेरनन्तरं भाष्यकाराद् वार्तिककाराद्यास्काच्च पूर्वं जातः। येन पाणिनिरचितसंकेत-परिभाषा-अनुबन्धादिजातमवलम्ब्य "उणादयो बहुलम्" इति

सूत्रगतबहुलग्रहणार्थं समनुचिन्त्योणादिसूत्राण्यधिकानि कानिचित्पाणिनिप्रदर्शितप्रकारं ज्ञात्वा विरचय्य पाणिनिरचितोणादिसूत्रैः सह संयोजितानि। अस्य द्वितीयशाकटायनस्यैव निर्देशः "तत्र नामान्याख्यातजानीति शाकटायनः" इति यास्केन, "सर्वनाम धातुजमाह व्याकरणे शकटस्य च तोकं" इति भाष्यवार्तिकेन च कृतः।

(घ) भाष्यकारः पतञ्जलिः पाणिनेरुणादिपाठं तत्संयुक्तद्वितीयशाकटायनरचितोणादिसूत्रपाठं च परम्परया जानाति स्म। परन्तूणादिसूत्रपाठे पाणिनेर्विरचिनानि शाकटायनेन च रचितानि कानि सूत्राणीति सुनिश्चितज्ञानाभावादष्टाध्यायीस्थपाणिनिविरचितसूत्राणां विवरणे उणादिसूत्रबोध्यप्रत्ययेषु समागतदोषवारणार्थं "उणादयोऽव्युत्पन्नानि प्रातिपदिकानि"-इत्यादिकं तत्र तत्र कथितवान्। तस्यायमभिप्रायः 'एतत्सूत्रबोध्यप्रत्ययेषु दोषो नास्ति, यतः पाणिनिरेतद्बोध्यशब्देष्वव्युत्पत्तिपक्षं स्वीकृत्य नैतत्सूत्रबोध्यशब्दसिध्यर्थमुणादिसूत्राणि रचितवान्' इति, एवं च यत्र यत्र दोषं समुद्घाट्य भाष्यकारो विचिकित्स्याव्युत्पत्तिपक्षं स्वीकरोति तानि न पाणिनिरचितोणादिसूत्राणीति मन्तव्यम्।

(ङ) द्वितीयशाकटायनेन संपादितां रीतिमवलम्ब्य तदनुयायिभिर्भाष्यवार्तिककारादनन्तरजातैर्बहुभिर्वैयाकरणैर्द्वितीयशाकटायनेन संयोजितेषु केषुचित्पाणिनिरचितेषूणादिसूत्रेषु स्वरचितोणादिसूत्राणि प्रक्षिप्तानि, येन च संप्रत्युणादिसूत्रपाठः पञ्चपादी-दशपादीरूपः समजायत। शाकटायनद्वयस्य सत्तामज्ञात्वा पाणिनेः पूर्वं जात एव शाकटायनः, स एवोणादिसूत्राणां संपूर्णानां कर्तेति नामसादृश्याद् श्रीनागेशेन कल्पयित्वा कथञ्चित्कृतमुपपादनं न सर्वेभ्यो रोचते।

(च) किञ्च पाणिनिरचितेषु सूत्रेषु मात्रयापि विपरिणामो न कर्तुं शक्यत इति बोधयितुं "अर्धमात्रालाघवेन पुत्रोत्सवं मन्यन्ते वैयाकरणाः" इति सूक्तिर्विद्वत्सु प्रचलति। तेन स्वीयव्याकरणेन येषां साफल्यं न भवत्येतादृशा "तितुत्रथसि" प्रभृतयोऽनेके प्रत्ययाः कृताः, येषां केवलं विरचनं शाकटायनव्याकरणस्य स्वीयव्याकरणे मान्यतां प्रदर्शयितुमिति श्रीनागेशभट्टकृतसमाधानं नोचितं प्रतिभाति। किञ्च शाकटायनप्रणीतव्याकरणसिद्धशब्द-

मान्यताप्रदर्शनमिव पाणिनेः पूर्वं जातशाकल्यप्रभृतिप्रणीतव्याकरणसिद्ध-शब्दानां मान्यतां प्रदर्शयितुं कुतो न पाणिनिना तादृशः कश्चन प्रयत्नोऽकारीति शङ्का दुःसमाधेया भवति। अतः पाणिनिरेव केषांचनोणादि-सूत्राणां पाठं कृतवान्, तदर्थमेव "तितुत्रथ" प्रभृतयः प्रत्यया इति कल्पनं समुचितं प्रतिभाति।

अतोऽत्र उणादिसूत्राणां क्वचिद् भाष्यकारेण यद्विवेचनं कृतं तत्र कैयटेन नागेशेन च यदभ्यधायि तस्य समालोचनं किञ्चिन्मात्रं संपादयामः।

(१) "कृपो रो लः" अस्य सूत्रस्य विवरणे वार्तिककारः "वालमूल लध्वलमङ्गुलीनां वालोरमापद्यते इति वक्तव्यं" इतिवार्तिकं विधाय अङ्गुलिशब्दस्य लकारस्थाने रंकारं विकल्पयंति। अङ्गुरिरिति। अत्रैतत्कार्यसंपादनार्थं "अमेगुरिश्च-लो वा" इति सूत्रमुणादिषु कैयटमतेन विद्यते। अस्यां स्थितौ वार्तिककारस्य समये उणादिषु "अमेगुरिश्च०" इतिसूत्रे नासीदित्यॆव कल्पयितुं शक्यते। तत्तु न पाणिनेर्न वा द्वितीयशाकटायनस्यापि किन्तु शाकटानुसारिणः कस्य-चन वैयाकरणस्य। अतः कैयटेनोक्तं "यदुणादिसूत्रे बहुलवचनं किमर्थं-मिति संदिह्योणादीनां शास्त्रान्तरप्रतिपादितानां साधुत्वाभ्यनुज्ञानार्थं-मस्त्विति भावः"इति कथनं नोचितं प्रतिभाति। "संप्रति पाणिनिनानु-मोदितानामेव साधुत्वम्" इति नागेशोक्तमपि न समीचीनम्, यतो यास्केन निर्दिष्टानां बहूनां शब्दनिरुक्तीनां पाणिन्यनादृतानामपि शिष्टादृतत्वेन संप्रत्युपलब्धेः।

एवं नागेशेन "उणादयो बहुलम्" इति सूत्रं विवृण्वता 'उणाद्यन्ता ये शास्त्रान्तरे व्युत्पादिताः शब्दास्तत्र बहुलमिति वक्तव्यमिति सूत्रार्थः सूचितः इति कथनमपि नोचितम्। यतो भाष्यवार्तिकद्वारा नैतादृशार्थः फलति।

(२) "आयनेयीनीयी०" ७, १०२ अस्मिन् सूत्रे "शमेः खः" इत्याद्युणादिसूत्र-बोध्यप्रत्ययेषु खप्रभृतिषु ईनप्रभृत्यादेशानां प्राप्तिवारणाय" तत्रोणादिषु प्रतिषेधः" इति वार्तिकं वार्तिककारः करोति। तत्र भाष्यकारः 'प्राति-पदिकविज्ञानाच्च पाणिनेः सिद्धम्' प्रातिपदिकविज्ञानाच्च भगवतः पाणिने-राचार्यस्य सिद्धमुणादयोऽव्युत्पन्नानि प्रातिपदिकानि" इति भाषते। अनेने-

त्थं कल्पयितुं शक्यते फढलादिप्रत्ययानामुणादिसूत्रस्थानां विरचनं पाणिनिना न कृतमतस्तत्र विषयेऽव्युत्पत्तिपक्ष एव। एवं चैतानि सूत्राणि पाणिनिरचितोणादिपाठे नासन्। एवं च पाणिनिमते शङ्खः शण्ढः इत्यादिशब्दा रूढा एव न तु व्युत्पन्नाः। अत्रत्यभाष्यवार्तिकादि दृष्ट्वा सर्वथेदं फलति पाणिनिरचितोणादिपाठे भाष्यवार्तिकपूर्वजातेन द्वितीय-शाकटायनेन स्वनिर्मितानि कानिचित्सूत्राणि प्रक्षिप्तानि, इति पूर्वपर-म्परया भाष्यवार्तिककारयोर्ज्ञानमासीत्। परन्तु कानि तानीति विशिष्ट-ज्ञानाभावात्पाणिनिसूत्रस्थप्रत्ययादीनां द्वितीयशाकटायनरचितोणादिसूत्र-बोध्येषु प्रत्ययेषु समागतापत्तिं विविच्य तत्र तत्र तान्युणादिसूत्राणि न पाणिनेः किन्त्वन्यस्यातस्तद्विषये पाणिनेरव्युत्पत्तिपक्ष एवेति विवेचनं संभवति।

अत्र विशेषतयेदमपि ज्ञातव्यं सर्वथा पाणिनीयनियममनुसर्तुं द्वितीयशाकटायनस्यापि नैतानि 'शमेःखः" इत्यादिसूत्राणि नो चेत्स 'ईनं' इत्याद्यादेशान् वारयितुमवश्यं कञ्चनोपायं कुर्यादेव। किन्तु द्वितीय-शाकटायनमनुकुर्वतां तत्तत्काले भवानामनेकवैयाकरणानां स्युरथवा वार्तिक भाष्यकाराणां खादिप्रत्ययेषूणादिषु समापत्तिप्रदर्शनाद् 'उणादयो बहुलम् इतिसूत्रस्थबहुलग्रहणस्य "क्वचिदन्यदेव" इत्यन्यदेव पदेनोणादिप्रत्ययेषु 'खादिषु' सम्प्राप्तेनाद्यादेशवारणं भविष्यतीति मन्यमानस्य द्वितीयशाक-टायनस्य भाष्यवार्तिककारपूर्वजातस्यैव स्युरिति कल्प्यते।

(३) "उणादयोऽव्युत्पन्नानि प्रतिपादिकानि" इत्यादेर्भाष्यकारकथनस्येदं तात्पर्यमुणादिप्रत्ययान्तानि शब्दरूपाण्यन्येषां मते व्युत्पन्नान्यपि पाणि-नेर्मते कानिचिदव्युत्पन्नानि अल्पीयांसि कानिचिद् व्युत्पन्नान्यपि। अत' उणादि सूत्रकरणमुण्प्रत्ययबोधकक्वापाजिसूत्रकरणमर्थवदधातुसूत्रकरणं च पाणिनेः संगतं भवति। अत्यन्तरूढानां निश्चितार्थानां च शब्दानां कृते पाणिनिरव्युत्पत्तिपक्षमेव स्वीकरोति।

(४) सर्पिःशब्दः पाणिनिकर्तृकेण "अर्तिशुचिहुसृपि० (२६५) इत्युणादिसूत्रेणैव निष्पन्नोऽतः सर्पिषेतिरूपे षत्वं सुखेनैव भवेदतस्तदर्थं बहुलग्रहणस्यो-पयोगकरणं कैयटप्रभृतीनामयोग्यमेव।

(५) अयामन्ताल्वाय्येत्विष्णुषु (६-४-५५) इतिसूत्रस्थान्तप्रत्ययस्य 'गण्डयन्त' इति तथा 'आय्य' प्रत्ययस्य 'स्पृहयाय्यः' इत्युदाहरणं साधकप्रत्ययबोधकान्युणादिसूत्राणि पाणिनिकृतानि स्युरित्यवश्यं मन्तव्यमेव। नो चेदन्ताय्यपरयोः सतोर्णेरयादेशविधानं व्यर्थमापद्येत। एवं "इत्नु" प्रत्ययस्य स्तनयित्नुरित्युदाहरणसाधकं संप्रत्युणादिस्थं "स्तनि हृषि पुषिगदिमदिभ्यो-णेरित्नुच्" (३०९) इति सूत्रं पाणिनिकर्तृकमेव मन्तव्यम्।

(६) एवं "क्विब्वचिप्रच्छिश्रिस्रुद्रुप्रुज्वां दीर्घोऽसंप्रसारणं च" इतिसंप्रत्युणादिस्थं विद्यमानं सूत्रं पाणिनेरेव। क्विब्वचिप्रच्छ्यायतस्तु०" इत्यादि वार्तिककरणप्रयोजनं समर्थयता कैयटेनोक्तं 'क्विब्वचिप्रच्छिश्रि०' इत्याद्युणगादिसूत्रेण केषांचन शब्दानां रूपसिद्धौ तच्छीलार्थेन 'तृन्' प्रत्ययेन बाधो मा भूदिति तत्सर्वथोचितमेव

(७) एवं पाणिनिना "न्यङ्क्वादीनां च" (७-३-५३) इतिसूत्रेण 'न्यञ्चु' शब्दे चकारस्थाने ककारो विधीयते, अतोन्यञ्चुशब्दसाधकसूत्रं संप्रति "नावञ्चेः" (१७) इत्याकारकमुणादिषु विद्यमानं पाणिनिकर्तृकोणादिपाठस्थमेव मन्तव्यम्। सर्वत्र शब्दोच्चारणसामर्थ्यात्तादृशप्रत्ययकल्पनापेक्षया सूत्रस्योणादिस्थस्य पाणिनिकर्तृकत्वस्य कल्पनं वरम्।

(८) एवं "अजेर्व्यघञपोः" (२-४-५६) इति सूत्रस्थं तथा "वायौ" (२-४-५७) इतिसूत्रस्थं च भाष्यकारकथनं युप्रत्यये अजधातोःस्थाने 'वा' आदेशो भवति। तेन 'वायुः" इतिरूपं सिध्यतीति प्रौढिवादमात्रं, यतः 'कृवापा०' इति प्रथमेनोणादिसूत्रेण वाधातोरुणि प्रत्यये "आतो युक्चिण्कृतोः" इतिसूत्रेण 'युकि' आगमे वायुरूपस्य सुखेनैव सिद्धौ युप्रत्ययविधानं वादेशविधानं च व्यर्थं भवति। किञ्च युप्रत्ययस्थाने "युवोरनाकौ" इतिसूत्रेण प्राप्त 'अन' आदेशस्य वारणं कथं भवेत्। अतः "वायौ" इतिसूत्रस्य काशिकोक्तं 'प्रवणो दण्डः, प्राजनो दण्ड" इत्युदाहरणमेवोचितम्। किञ्च यदि "कृवापाजि०" इत्यादिप्राथमिकमुणादिसूत्रमेव पाणिनेर्नास्तीत्याधुनिकानां केषांचन कथनमथवा तत्सूत्रे वाधातुर्नास्तीतिकथनं न सर्वथा प्राचीनेभ्यो नवीनेभ्यश्च रोचतेतराम्।

(९) एवं 'विप्रतिषेध०' सूत्रे तथा येनविधिसूत्रे स्थितं 'स्योन' इत्युदाहरणं पाणिनिनिर्मितोणादिसूत्रेषु 'न' प्रत्ययबोधकस्य कस्यचन सूत्रस्य गमकमिति मन्तव्यम्।

(१०) तथा "विप्रतिषेध०" सूत्रे वैयाकरणशब्दादौ इकारौकारयोर्वृद्धिप्राप्तौ 'इयुवौ' इत्युणादिसूत्रप्राप्तावादेशौ न स्यातामितिभाष्योक्तशङ्काकरणमुचितमेव, यतस्तादृशं सूत्रमुणादिसूत्रपाठे पाणिनिकर्तृके स्यादेव। एवं प्रैयमेव रूपे उणादिपठितौ इयुवौ आदेशौ न भवतामेतदर्थमचीत्यनुवृत्तिकरणमुचितमेव।

(११) एवमेव "कर्मवत्०" (३-१-८७) सूत्रे भाष्यकारेण निरुक्तवत्तपः शब्दस्य निर्वचनकर्त्रा "किमिदं तप इति तपेरयमौणादिकोऽस्कारो भावसाधनः" इत्युक्तं तेन तादृशसूत्रस्य पाणिनिकर्तृकोणादिपाठे सत्ताऽनुमीयते।

(१२) एवमेव "ठस्येकः" इतिसूत्रभाष्ये 'ठ' इति संघातग्रहणे उणादिठप्रत्ययेन सिद्धेषु कण्ठादिशब्देषु स्थितठप्रत्यये इकादेशस्य शङ्कां कृत्वा तस्या वारणं "उणादयोऽव्युत्पन्नानि प्रातिपदिकानि" इतिरीत्या कृतम् तेनेत्थं प्रतिभाति कण्ठादिशब्दस्थ ठप्रत्ययविधायकान्युणादिसूत्राणि पाणिनिकर्तृकाणि न सन्तीति।

(१३) तथा "ऋलृक्" इतिसूत्रभाष्ये प्रतिपादितौ "ऋफिडौ" प्रत्ययौ पाणिनिरचितोणादिसूत्रेषु स्यातामित्यपि कल्प्यते।

(१४) एवं 'लस्य' (३, ४, ७७) इति सूत्रविवरणे भाष्यकारेण शालामालादिस्थलकारे आदेशप्राप्तिं संभाव्य 'उणादयोऽव्युत्पन्नानि प्रातिपदिकानीति स्वीकृत्य तस्य निवारणं कृतम्। एवं **'अथाप्युणादयो व्युत्पाद्यन्ते'** इति, उणादिषु व्युत्पत्तिपक्षं स्वीकृत्य शालामालादिशब्दानां संसाधकोणादिप्रत्ययानां पाणिनिरचितोणादिपाठस्थसंभावना प्रकटीकृता। कैयटेनचात्र "शालामालादिभ्य औणादिको लन् प्रत्ययः" इत्युणादिसूत्रं सूचितम्।

(१५) तथा "अतः कृकमिकंस्य०" इत्यादिसूत्रे कमिधातोः पृथक् कमिधातुतो निष्पन्नस्य 'कंस' शब्दस्य ग्रहणेन कंसशब्दसंसाधकं "कमेः सः" इति संप्रत्युपलभ्यमानं सूत्रं पाणिनिकर्तृकोणादिपाठे नास्तीति कल्प्यते।

(१६) तथा पृषोदरादिगणे कृदन्तसिंहहंसशब्दयोर्गणनया सिंहादिशब्दसंसाधकानि "सिचेः संज्ञायां हनुमोकश्च" (७४०) इत्यादीन्युणादिसूत्राणि पाणिनिपठितोणादिषु न स्युरितिकल्प्यते। एवमन्यत्रापि कल्पनीयम्।

निबन्धस्यास्यायं निष्कर्षः—

(क) पाणिनिना निर्दिष्टस्य [illegible]स्योणादिपाठो नास्ति।

( ख ) अष्टाध्यायीसूत्र[illegible]णादिसूत्रपाठोऽप्यासीत्, तस्य चादिमं सूत्रं "कृवापाजि०" इत्याकारकम्। अन्यच्च "उणादयो बहुलमिति। यथा वान्यत्र "स्वरादिनिपातमव्ययम्" "भूवादयो धातवः" इति स्वराद्यव्ययपाठं भ्वादिधातुपाठं च निर्माय तस्यादिममवयवं स्वरिति भ्वति च निर्दिश्य कार्याण्युक्तानि। एवमत्रापि "कृवापाजि०" इत्यादिभिरुणादिप्रत्ययान् विधाय सर्वथा तथाकरणमशक्यमयोग्यं चेति मत्वाऽऽदिममुण्प्रत्ययरूपमवयवं संयोज्योणादयो बहुलमिति सूत्रं कृतम्। बहुलग्रहणेन चैते प्रत्यया एतादृशाः प्रत्यया अन्यच्च कार्यजातं लक्ष्यानुसारि कर्त्तव्यमिति सूचितमस्यैव प्रपञ्चभूतमेतेनासिद्धमन्यत्कार्यजातं संपादयन् च पृषोदरादीनि यथोपदिष्टमिति मन्तव्यम्।

( ग ) अर्धमात्रालाघवार्थं प्रयतमानेन पाणिनिना तितुत्रेति, अयामन्तेतिस्वव्याकरणे निष्फलान् प्रत्ययान् विदधता केवलस्वपूर्वजातशाकटायनविरचितोणादिसूत्रसिद्धशब्दान् प्रमाणीकर्तुं तथा कृतमिति कथनं न सर्वथा शोभतेतराम्। किन्तु पाणिनिरचितोणादयोबहुलमितिसूत्रस्थबहुलग्रहणं दृष्ट्वा बहुलग्रहणार्थं च स्मृत्वा द्वितीयशाकटायनेन यास्कवार्तिकभाष्यकारतः पूर्वजातेन पाणिनिरीतिमनुसृत्य कानिचित्सूत्राणि कृत्वा पाणिनिकृतोणादिसूत्रेषु संयोजितानि।

( घ ) निरुक्तकारो यास्कः पाणिनेरनन्तरं जातः, यतस्तेन पाणिनेः "परः सन्निकर्षश्च संहित।" इति संहितालक्षणसूत्रमेवोपात्तमित्यादि पूर्वं विवेचितमेव। पाणिनिना तु परम्परयापि यास्कस्य निर्देशो न कृत एव।

( ङ ) वार्तिककारो भाष्यकारो निरुक्तकारश्च यं शाकटायनं निर्दिशन्ति स पाणिनेरनन्तरजातो द्वितीयः, अयमेवोणादिसूत्रेषु पाणिनीयेषु स्वरचितानि सूत्राणि संयोजयामास।

( च ) वार्तिककारो भाष्यकारश्च परम्परया द्वितीयशाकटायनरचितानि सूत्राणि पाणिनिविरचितोणादिसूत्रेषु संमिलितानि सन्तीति जानीतः, परन्तु कानि सूत्राणि शाकटायनस्य पाणिनेर्वा कानीति विशिष्य ज्ञानाभावात्तन्निर्णयार्थं च तत्र तत्र भाष्यकारेणाष्टाध्यायीसूत्रस्थकार्यजातं यत्रोणादिप्रत्ययेषु समागच्छत्सद् दोषं समुत्पादयति तदुणादि सूत्रं न पाणिनिना रचितं किन्तु तद्विषये पाणिनेरव्युत्पत्तिपक्षः, क्वचिच्च दोषनिराकरणेन व्युत्पत्तिपक्षश्च प्रदर्शितः। द्वितीयशाकटायनो बहुलग्रहणमवलम्ब्य पाणिनिर्निर्मित संज्ञा-अनुबन्ध-तत्कार्यजातं च स्वीकृत्य स्वीयसूत्राणि रचयित्वा तत्राष्टाध्यायीसूत्रैः समायातदोषजातं बहुलग्रहणेन वारयतीति कल्प्यते।

(छ) शाकटायनद्वयं ऋषिगोत्रावल्यामुपलभ्यते, एको भृगुगोत्रान्तर्गतः, द्वितीय आङ्गिरसगोत्रजः। तृतीयोऽपि शाकटायनः स्मृतिकर्तोपलभ्यते। एवं चतुर्थश्च ऋगादिप्रातिशाख्ये निर्दिष्टः (ऋ. प्रा. १७,७४७ अथर्व प्रा. २,३४ शुक्लयजुः प्रा. ३,८,९, १२,४,५०; १२७,१८९)

पाणिनिना स्वव्याकरणे त्रिवारं निर्दिष्ट एव शाकटायन ऋगादि प्रातिशाख्यनिर्दिष्टः संभवेत्। स्मृतिकर्ता च भिन्न एव स्यात्। अस्तु। द्वौ तु शाकटायनाववश्यं स्वीकर्तव्यावेवेति निश्चप्रचं भिन्नगोत्रजत्वात्। **एतयोः शाकटायनयोः उत्पत्तिकालविषये यद्यपि सुनिश्चितं किमपि नोपलभ्यते तथापि सत्यसमीपगर्यतया संभावनया संप्रतीत्थमस्माभिरुच्यते न तत्रागृह्णीमः किञ्चित्।**

(ज) कैयटनागेशप्रभृतीनां शाकटायनद्वयस्य ज्ञानाभावात्तथा पाणिनिनोणादिसूत्राणि कानिचिद्रचितानीति कल्पनाया अभावाद् यः शाकटायनः पाणिनिना सूत्रेषु निर्दिष्टः स एवोणादिसूत्रकर्तेति भ्रमेणोभयोरैक्यं मत्वा समागतदोषजातं वारयितुं कथंचित्तैः कैयटप्रभृतिभिः प्रायत्यत। स च प्रयत्नो न सर्वेभ्यो रोचतेतरामत एव बहुकालतोऽत्र विषये विवदन्ते विद्वांसः। एकः शाकटायनः पाणिनेः पूर्वं जातो द्वितीयो यास्कवार्तिकभाष्यकारप्रभृतिभ्यः पूर्वं पाणिनेरनन्तरं जातः, उभावपि वैयाकरणौ। प्रथमस्य पाणिनिनिर्दिष्टसूत्रत्रयं दृष्ट्वा सन्धिधातूपलक्षितसंपूर्णव्याकरणे ग्रन्थः स्यादिति संभाव्यते। द्वितीयस्य तूणादिसूत्राणां पाणिनिकृतिं बहुलग्रहणं च दृष्ट्वा तदनुसृतकृतिविशेषः सूत्रसमुदायः पाणिनिसूत्रैः सह मिश्रितः। यो भाष्यकारात्पूर्वत एव पार्थक्येन ज्ञातुं दुष्करः समजनि।

(झ) एवं च पूर्वोक्तपद्धत्या विचारे पाणिनिविरचितानि विंशत्यधिकान्युणादिसूत्राणि भवेयुरिति संभावयामः। येषां प्रारम्भस्य सूत्रं "कृवापाजि०" इत्याकारकमन्तिमं च 'उणादयो बहुलम्" इति।

(ञ) प्रसङ्गत एतदपि निवेदयामः। पाणिनिकृतिषु आष्टाध्यायी, अर्थसहितधातुपाठः गणपाठ; अल्पीयानुणादिसूत्रपाठः, अनुनासिकपाठश्च यः संप्रति नोपलभ्यते, परन्त्वनेकप्रमाणैः स पूर्वमासीदिति निश्चीयते। लिङ्गानुशानं, फिट् सूत्राणि शिक्षा च पाणिनिकृतिषु नान्तर्भवन्तीति निश्चितमेव। विषयेऽस्मिन् कदाचित्समयान्तरे विवेचयिष्याम इति शम्।




# संस्कृतभाषाध्यापनप्रकारः

प्रा. नलिनभट्ट*

इदानीन्तावत् संस्कृतभाषाध्यापनशैली परिवर्त्तनीया। देशकालौ निरीक्ष्य जीवनक्षोभं च सार्वत्रिकं वीक्ष्य शैलीयं प्राचीना पुनरवलोकनमर्हति। पुरा किल शान्तिमयं जीवनमासीत्। जनता च प्रायः सुखिन्यवर्त्तत। न वैदंयुगीनाऽशान्तिः सर्वव्यापिन्यासीत्। अधुना च सर्वमेव विपरीतं वर्त्तते। अतस्तत्कालिनी पद्धतिरधुना परिवर्त्तनीया। न हि बाल्ये यद्वासो परिधीयते तदेव यौवने वार्धक्ये वोपयोक्तुं पार्य्यते। अतः देशकालानुसारि परिवर्त्तनं नितान्तमावश्यकम्।

संस्कृतभाषा व्याकरणप्रधानाऽस्ति। व्याकरणविषये संस्कृतभाषा सर्वासां प्रजानां शिरोमान्या यतः तादृशव्याकरणशास्त्रसंपूर्णता न कस्यामपि प्रजायां भूतायां वर्त्तमानायां वा विद्यते। विना व्याकरणं भाषाया गौरवं दुष्यते, न वैकान्तिकी शुद्धिरकलङ्किता रक्ष्यते। व्याकरणशास्त्रं च भाषाभ्यासारंभे एव च शिष्यते प्राचीनपद्धत्यनुसारम्। नेदं साम्प्रतम्। प्रारंभ एव व्याकरणं कठिनं दुर्बोधं च न छात्रपुरतः उद्‌घाटचम्। यतो वराको छात्रः व्याकरणस्य व्याघ्रमुखप्रवेशं तस्य जटिलतां कुमारधीक्लेशदायिनीं वीक्ष्यैव प्रायो मूर्च्छति। न ह्योदनपाचनेऽप्यशक्तस्य पायसपाकः पुष्टिकरोऽपि मधुरोऽपि स्वारोग्याय कल्पते। अतो भाषाध्ययनारंभ एव छात्रं नोत्तापयेत् जटिलव्याकरणपुरस्कारेण। यद्यपि वयमंगीकुर्मो व्याकरणशास्त्रस्य नितान्ताऽऽवश्यकतां तथापि समयेऽस्मिन् चेत् संस्कृतभाषोद्धार इष्टस्तदाऽवश्यं व्याकरणमेव न प्रथमं छात्राय कुमारधिये समर्प्यम्। पूर्वं हि भाषा पश्चिमं च व्याकरणम्। यथाऽतिपरिचयवशात् व्याकरणमनभिलक्ष्यैव शुद्धप्रायमेव वयं ब्रूमः प्रान्तीयभाषायाम् व्यवहारं च निर्वर्त्तयामस्तथा संस्कृतेऽपि कर्तुं शक्यम्। अत आरम्भकक्षायां नातिभरो देयः व्याकरणे। यथा यथा बालकः उपरितनां कक्षां संपादयेत् तथा तथा तं क्रमशः व्याकरणविषये प्रवेशं कारयेत्। एवंकरणात् कुमारधीर्न कुण्ठिता स्यात् न वा तस्याः संस्कृतभाषायां प्रद्वेषो भवेत्।

---

* प्राध्यापकः, भवनीयकलामहाविद्यालये, मुम्बई–७.

किञ्च, संस्कृतभाषाशिक्षणात् प्राक् बालकस्य तस्यां रुचिमुत्पादयेत्। रुच्यभावे प्रेम्णोऽभावात् प्रयत्नसत्त्वेऽपि न फलप्राप्तिर्यथेष्टा भवति। अतः बालकं रसेनाभिषिच्य, संस्कृताऽभिमुखं कुर्यात् चेत् बालो जानीयात् यत् संस्कृतभाषायामस्ति ग्रहणयोग्यं लाभकरं जीवनोच्चालकं ललितं सुन्दरमात्मपोषकं किञ्चित् तदा तत्सं-पादनाय सः प्रवर्त्तेत। नो चेत् कथं तत्र तस्य प्रवृत्तिरुत्पद्येत? अतः संस्कृताध्यापनात् प्राक् बालमानसे संस्कृतभाषामहिम्नः संगानात् रुचिं जनयेत् जनितां चेतां मध्ये क्वचित् क्वचित् संस्कृतभाषासाहित्यचमत्कृतिप्रदर्शनेन पोषयेत्। संस्कृतपुष्टा रतिर्हि चिरस्थेमानं भजति। चिरस्थायिनी च भाषारतिः संस्कृतोद्धारे प्रबलं साधनं भविष्यति।

किञ्च, संस्कृते प्रवेशाय पाठ्यपुस्तकानि नूतनानि रचयेत्। रघुवंशं वा कुमारसंभवं वा नादित एवाध्यापयेत्। न हि तादृशगंभीरग्रन्थानामभ्यासाय सन्नद्ध-मस्य मानसमस्ति। हठात्पाठनेन नैषां चमत्कृतयोऽपि सम्यगास्वादिताः स्युः। भार-भूतं चैवं पठनं स्यात्। अतः क्रमशः बालकं गभीरग्रन्थेषु प्रवेशयेत्। तथा च पाठ्य-पुस्तकानि नूतनानि श्रेणीबद्धानि योजयेत्।

इदमप्यत्रानुसन्धेयम्। भाषा तावत् द्विविधा वर्त्तते। लोकभोग्या विद्वद्-भोग्या च। चेत् संस्कृतं लोकसुलभं दृष्टुमिच्छेम तर्हि सरलं सुबोधं लोकभोग्यं च संस्कृतं लेख्यम्। नोदारभाषाज्ञानं साधारणजनतायाः अपेक्षामहे। कर्षकोऽपि यथा लब्धा-क्षरज्ञानमात्रः संस्कृतं जानीयादनायासेन तथा भाषया भवितव्यम्। चेत् विद्वद्भो-ग्यैव भाषा स्यात् विरल एव तस्याः प्रचारो भूयात्। सर्वेष्वपि कालेषु विदुषां गणित-त्वात्। अतो यावच्छक्यं सुबोधं सरलमेव संस्कृतं लेख्यम्।

एवंकरणात् धारणाऽस्माकं सफला भविष्यतीति सहृदयं मन्यामहे। सफलयतु भावनामिमां भगवान् सर्वकामप्रदोऽन्तर्यामी क्षिप्रमित्याशास्महे।

## संस्कृतभाषायाः ऊनताः

अथाऽन्तिमेऽस्मिंल्लेखेऽस्मद्दृष्टया संस्कृतभाषासाहित्यस्योनताः प्रदर्शयामः। अपसरेयुश्चेदिमाः सर्वांगसुन्दरं संस्कृतसाहित्यं भविष्यति।

(१) संस्कृतभाषायां नास्तीतिहासः,
(२) ऐदंयुगीनार्थशास्त्रग्रन्थाः,
(३) विज्ञानपुस्तकानि,

(४) शिक्षणविषयकस्वतन्त्रग्रन्थाः,

(५) उपन्यासादीनामभावः।

अस्त्ययमाक्षेपः परेषां यत् सर्वांगसुन्दरेऽपि संस्कृतसाहित्येऽभाव एव सुसंगतस्यैकतानस्येतिहासस्य। सत्यमप्यस्ति अस्मिन्नाक्षेपे। यद्यपि प्रजाजीवनस्येतिहासः प्रजाशोणित एव वहति, यश्चेतिहासः प्रजाहृदयेऽवतीर्णः न तेन ग्रन्थात्मकतैवधार्य्या तथापि साहित्यदृष्ट्या त्रुटिरेवेयमिति स्पष्टम्। रामायणमहाभारते यद्यपीतिहासतया गण्येते तथापि धर्मदृष्टेः प्राधान्यं तत्र, न यथार्थतयेतिहासपदवीं ते भजेते। संस्कृतसाहित्यस्येतिहासोऽपि नैव दृश्यते। प्रजाजीवनस्य साहित्यस्य चेतिहासस्यातीवावश्यकता। इतिहासो हि भाविनिर्णायकः। इतिहासप्रदीपः भविष्यं भासयति वर्त्तमानं चोज्ज्वलयति। अतः पद्धतिपूर्वकस्य व्यवस्थितस्य योजनापूर्वकस्येतिहासस्य त्रुटिः पूरणीया तूर्णम्। वहूनि साधनानि तावदधुनोपलभ्यन्ते। चेत्कोऽपि विद्वान् कार्यमिदं कुर्यात् भाषाभगवतीं प्रीणयेत् सेवां चापूर्वां विदध्यात् देशस्य जातेश्च। अतः संस्कृतभाषायामितिहासो देशस्य साहित्यस्य च लिखेत्।

किञ्च, अर्थशास्त्रविषयकग्रन्था अपि भाषायां रचयितव्याः। संस्कृतभाषायामर्थशास्त्रविषयकसिद्धन्तानां सत्त्वेऽपि ऐदंयुगीनदेशकालपरिस्थिति विकासादिकमभिलक्ष्य नूतनाः ग्रन्थाः प्रमेयाः। यतः नितान्त भिन्नाद्देशस्यैदंयुगीना परिस्थितिः। पुरा किल देशः आत्मपर्याप्त आसीत्। न च तस्यावशिष्टभूगोलेन साकमतीव संबन्धः आसीत्। विज्ञानविकासेनाद्भुतेन देशकालावेवोपमर्दितौ। विहायसयानादिभिः साधनैः निखिलाऽपि मानवजातिः परस्परविदूरा अपि अदूरा एवान्योन्यतः कृता। षट्सहस्रक्रोशसम्मितमन्तरमपि दिवसद्वयेनैव विमानादिभिर्मीयते। एवं कालोऽपि क्षपितः विज्ञानाविष्कारैः। न ह्यधुना मेघः संदेशं वक्ष्यति। विपलस्य सप्तमभागेन भूगोलवर्तिनी निखिलाऽपि मानवजातिः संदेशविशेषं ज्ञास्यति। अतः अर्थशास्त्रमपि परिवर्त्तनमर्हति। सर्वमेव त्रैकालिकं संस्कृतेऽस्तीति प्रमादो हि प्रतिगतेर्लक्षणं न प्रगतेः। यक्षजडाऽपि पृथ्वी प्रचण्डवेगेन प्रधावति प्रतिक्षणं, तदा वेदे सर्वमेवास्ति न किंचिदपि अवशिष्टमिति कृतकृत्यताप्रदर्शनं मौर्ख्यमाविष्कुरुते चेतनायाः जालैः। भवतु सर्वं वेदे। किन्तेन ? या हि जातिः प्राचीनेऽयोग्यगौरवं मत्वा वर्त्तमाने पूर्णविरामं अवलम्बते न सा स्वप्नेऽपि महिमानमश्नुते। प्राचीनगौरवं हि प्रोत्साहकं न च पक्षाघातकम् स्यात्। अतः देशकालानुसारिणामर्थशास्त्रग्रन्थानां निर्माणं नितान्तमावश्यकम्।

इदमत्र बोध्यम्। इदानीं तावत् विज्ञानस्याद्भुतो विकासो दृश्यते। पार्थिव-विज्ञानविषयकग्रन्थानां संस्कृतेऽभाव एवास्ति। न चोपेक्ष्यो विज्ञानविकासोऽभ्युदय-मिच्छता। विज्ञानं हि साधनमभ्युदयस्य। लोकमिमं वर्त्तमानं त्यक्त्वा परलोक-संपादनेऽतीवोत्कण्ठाऽस्माकं हिन्दुजातिः नो चेदिदं मौढ्यं, विवेकशून्यत्वं त्वत्रास्त्येव। न खलु पूर्वजैः एवं कथितं यत् पुत्राः! हित्वैहिकमैश्वर्यं पारिव्राज्यमेव आश्रयन्तु। ऐश्वर्यहीने पारिव्राज्ये भिक्षुकत्वेऽपि किं न्यस्तम्? भगवतोऽपिभगवत्त्वम् ऐश्वर्याऽभावेऽपि गच्छेत् का वार्त्ता भगवत्पुत्राणं हिन्दूनां ऐश्वर्यविरहे परिभवस्य! अतः स्त्यानं विधूय, विज्ञानलभ्यमैश्वर्यं ऐहिकं सम्पादनीयम्। तच्च तद्विषयकसाहित्य-निर्माणेन संभवति। अग्न्यास्त्रं पाशुपतास्त्रं मोहास्त्रं ब्रह्मास्त्रं चास्माकं काल्पनिक-मेव वर्त्ततेऽधुना। इतराः प्रजाः काल्पनिकप्रायमपि वास्तवं वितानबलेन कुर्वते। वयन्तु कल्पनातुष्टा एव गौरवं मृषा दध्महे। अतः विज्ञानविषयकग्रन्थानां रचना कार्या।

अथ शिक्षणविषयकशास्त्राणं रचनमपि कर्त्तव्यम्। विप्रकीर्णमेतद्विषयकं बहूपलभ्यते तथापि स्वतन्त्रस्य शास्त्रस्य तु अभाव एव। अस्यां दिशि अस्माभिः कृतः प्रयत्नः। शिक्षणदर्शनस्य प्रणयनेन। प्रणीतान्यस्माभिः सूत्राणि रचितं च तेषु भाष्यम् गुर्ज्जर्याम्। संस्कृतभाषायां भाष्यरचनाया इच्छामपि भजामः। तथाप्य-त्यन्तोऽवकाशोऽस्मिन् विषये विदुषाम्। गंभीरः महत्त्वपूर्णश्चायं विषयः। अतः अन्यानि पुस्तकानि अपि लेख्यानि।

किञ्च, साहित्यं संस्कृतस्य स्तिमितं वर्त्तते। न च प्रवाहरूपेण वहति। स्तिमितं निस्पन्दीकृतं च साहित्यं न वेगं लभते। न वा विकासं भजते। नाऽपि पुष्टिं प्राप्नोति। अतः संस्कृतसाहित्यस्य सर्वतोमुखो विकासः साध्यः। तत्संपादनाय च लोकरुच्यनुरोधेनोपन्यासादीनां नवलिकादीनां चाधुनिकसाहित्यलक्षणानां लेखनं कर्त्तव्यम्। साहित्यविषयेऽद्भुतं परिवर्त्तनं संजातं इतरसंस्कृतिसभ्यतादीनां संघर्षेण। संघर्षणेन चानेन साहित्यस्रोतोगतिरेवान्यस्यां दिशि परिवर्त्तिता। अतः संघर्षणं लक्षीकृत्योपन्यासादीनां सर्जनं विधेयम्। आधुनिकलक्षणलक्षितः एकोऽपि उपन्यासः संस्कृतभाषायां नास्ति। वर्त्तमानलक्षणोपेतं साहित्यं हि प्रजां सृजति तस्याः प्रगतिं च साध्नोति। अतः भाषाहितैषिभि संस्कृते लेखनव्यवसायः उपन्यासादीनामादर्त्तव्य इति।

एवं लेखपञ्चकेन संस्कृतभाषोद्धारस्य दिक् अस्माभिः यथाभानं प्रदर्शिता। विचारयन्तु लेखपञ्चकमिदं विद्वांसो विमत्सराः भवन्तु च कटिबद्धाः तत्रभवन्तः संस्कृतदेव्या उद्धरणाय भाषाभिमानिनः पण्डितधौरेया निष्कामिनः मर्षयन्तु चास्माकं दोषान् औद्धत्यं चास्मिन्पञ्चके इति प्रार्थनापुरस्सरं निवर्त्तते।



# विश्वसमाजः

—डॉ राधाकृष्णन्

सर्वोऽपि मानवः सदसद्पिण्डरूपः। एकतः सः प्रहरति, अपरतश्च व्रणविरोपणाय शुश्रूषते। अस्य सेवासंस्थाः पश्यत, रुग्णालयान् निरीक्षत, अन्यतश्चास्त्रताण्डवं विलोकयत। उभयमप्येतत्परस्परं विरुध्यते। मानवस्य हृद्भूमौ विरुद्धानां वृत्तीनां संगरो नरीनर्ति। अत एवाद्य मनुष्यस्य रचनात्मिकाः सद्वृत्तीः परिपुष्य विनाशिकानामासुरीणां वृत्तीनां विशोधनं प्राप्तकालम्। शिष्टता, संयमः, मानवताया उदात्ता भावनाश्च मानवस्य सदंशान् प्ररूढान् करिष्यन्ति.....सांप्रतं समग्रं विश्वमावृण्वानो समष्टिधर्मो मानवचेतः स्पृशन्नस्ति; एकमविभक्तं च विश्वसमाजमारचयितु विचारप्रवणं भवति तच्चेतः। अविकलं परिपालिताः मनुजसद्वृत्तयस्तादृशीं समाजरचनां वास्तविकीं घटयिष्यन्ति। तादृशे विश्वसमाजे प्रत्येकं राष्ट्रं विश्वबन्धुत्वनिर्वाहाय स्वसार्वभौमतां अंशतो विश्वशासनायार्पयिष्यति। राष्ट्रव्यक्तयश्च विश्वावयवीभूय स्वशक्त्यनुसारं सांस्कृतिकमौद्योगिकञ्चाभ्युदयं निष्प्रत्यूहमाचरिष्यन्ति।

× × × ×

# दीर्घं पश्यत मा ह्रस्वम्

सत्यपि नैतिकानां मूल्यानां ह्रासे, सत्यामपि च वृद्धौ शिष्टताया नियमभङ्गानाम्, भारतीयजनताविषयो मे विश्वासोऽविचलस्तिष्ठति। आस्माकीना संस्कृतिरतिप्राचीना। यवन–शक-हूण-पठान-मांगोलादीनामनेकैराक्रमणैरपि साऽविहता वर्तते। न केवलं प्राचीनेयमपि तु मृत्युंजया वर्तते। अत एव सा कालप्रहारैरक्षुण्णा तिष्ठति। आत्मवत्सर्वभूतेषु दृष्टिः, सहिष्णुता चैतस्य रहस्यम्। ऋषयो मुनयश्चास्मत्समाजस्य संघटका अभूवन्। मनुष्यं संस्कृत्य खलु ते मानवसमाजं संस्कर्तुमयतन्त।

भारतीया संस्कृतिः किल शान्तिपूर्णेन सहयोगेन, पारस्परिकक्षेमचिन्तया च जगति साम्मनस्यं प्रतिष्ठापयितुमीहते। युगेभ्यः प्राप्तेयं शिक्षाऽस्माकं सङ्गिनी विद्यते। अद्य वयं शंकासंशयाभ्यामभिभूता वर्तामहे। किन्तु नैतदस्माकमितिहासेऽभूतपूर्वम्। धैर्येण दाक्ष्येण च कालमिममनुकूलयितुं प्रवर्तेमहि। अस्माकं पन्थानं नभोनक्षत्रैरुद्दीपयितुमर्हामो न रथ्यादीपैः।

अनु. भाईशंकर पुरोहितः





# राधाकृष्णसुधीः सदा विजयते

पण्डित सि. बै. कवलि*

वाग्देवीं समुपासते हि बहवश्चाध्यात्मविद्याविदः
वर्तन्ते विरलास्तथापि भगणे[1] भातींदुवत् तेष्वयम् ।
नूनं पश्चिमपूर्वतत्त्वविदुषां संवादिताम् साधयन्
राधाकृष्णसुधीः सदा विजयते यो भारतस्याधिपः ।। १ ।।

लब्धं जन्म हि यस्य पूर्वसुकृतात् सद्भ्यां पितृभ्यां परम्
प्रत्युत्पन्नधियाभवत् गुरुजनप्रीत्यास्पदच्छात्रकः ।
बाल्याद्यस्य च दैवभक्तिरधुनाप्यच्छं दरीदृश्यते
राधाकृष्णसुधीः सदा विजयते यो भारतस्याधिपः ।। २ ।।

प्राप्यांग्लेयकलाप्रभु (M. A.[2]) त्वपदवीं प्राध्यापकः सन् ततः
छात्रैश्चेति बुधैर्नुतोऽयमचिरात् वेदान्तवाचस्पतिः ।
वेदान्तेषु वदन्ति सिंह इति यं पाश्चात्यमीमांसकाः
राधाकृष्णसुधीः सदा विजयते यो भारतस्याधिपः ।। ३ ।।

दृष्ट्वा यस्य च राजकीयपटुतामन्यादृशीं वाग्मिताम्
धीरत्वं किल सत्यसाधनविधौ व्यक्तित्वमाकर्षकम् ।
स्वातत्र्योत्तरभारतस्य महितोपाध्यक्ष इत्यादृतः
राधाकृष्णसुधीः सदा विजयते योभारतस्याधिपः ।। ४ ।।

सम्यक् राज्यसभाविधानचतुरः सूत्राणि संचालयन्
सत्यं येन हि राज्यभारकृतसंधानैर्जिते स्तालिने[3] (Stalin)

---

* के. आर. इंजिनियरिंग कालेज दक्षिणकन्नड, मैसूर

रस्याप्यां चकितं जगत् तदखिलं यस्य प्रभावात् धियः
राधाकृष्णसुधीः सदा विजयते यो भारतस्याधिपः ॥ ५ ॥

एवं साधितराष्ट्रकार्यविजयैः संप्राप्य सर्वात्मना
प्रीतिं चाभिमतं च सर्वसुहृदामग्रेसराणाम् यथा।
काले राष्ट्रपतित्वमेत्य यतते यो भारतश्रेयसे
राधाकृष्णसुधीः सदा विजयते यो भारतस्याधिपः ॥ ६ ॥

सद्यो ये बहिरन्तरङ्गविषमाधिव्याधयो भारते
दृश्यन्ते तरसाप्ययम् शमयते धन्वन्तरिश्चापरः।
मेघान् वायुरिवान्यसत्त्वसुबलादागंतुकानातुरान्
राधाकृष्णसुधीः सदा विजयते यो भारतस्याधिपः ॥ ७ ॥

धत्ते दार्शनिकस्य कोमलहृदं मित्रैष्वमित्रैष्वयम्
धाष्टर्यं दंडधरस्य दर्शयति यद् दृष्टं परुत्[4] पाकिभिः[5]
पारं गच्छति सत्यमेव जयते नावा प्रसक्तोदधेः
राधाकृष्णसुधीः सदा विजयते यो भारतस्याधिपः ॥ ८ ॥

विद्याकैरवचन्द्रमाः सुरगुरुर्वाग्वैभवे राजके
चाणक्यो रसिकः कलासु विदुषां चिंतामणिः सर्वदः
प्राप्तो 'भारतरत्ननाम'पदवीं यो 'विश्वरत्नं' स्वयं
राधाकृष्णसुधीः सदा विजयते सत्यं शिवं सुन्दरम् ॥ ९ ॥

आर्या —पंडितकवलिविरचिता । या नवमणिमालिकार्प्यते भवते
डॉक्टर् राधाकृष्णन् । राष्ट्रपते ते नमोऽस्तु सुरगुरवे ॥



---

1 भगणे भातींदुवत् > भगणे भाति इंदुवत् (shines like a moon in the group of stars). 2 कलाप्रभु > Master of Arts. 3 स्टालिने > Over the dictator of Russia, stalin. 4 परुत् > Yester or last year. 5 पाकिभिः > by Pakistanis.



महामान्यानां विविधपदवीसमलङ्कृतानां
श्रीमुन्शीमहोदयानां जन्मदिनीयं
सोपायनमङ्गलाशासनम्

# एतन्महानाटकम्

## उपायनम्

लक्ष्मीरामशास्त्री*

शिष्यो यत्र गुरोः सुतो जनकतो नारी निजस्वामितः
ज्येष्ठात्सोदरतस्तथा तदनुजो देशाग्रणीर्देशतः।
एवं मान्यजनान्तरादपि जनः साधारणोऽपि स्वयम्
आत्मानं बहुमन्यते मतियुतं लज्जापि नो जायते ॥ १ ॥
युक्तं यन्न हि देशकालनियमैर्मुक्तञ्च शुल्कव्ययैः
निःशिक्षैरपि बालवृद्धयुवभिः पात्रैः स्वयं पूर्यते।
पश्यद्भिः क्षणशः प्रहृष्टहृदयैः खिन्नैश्च बोभूयते
नैवैतत्परिवर्तितुं प्रयतते कश्चिन्महानाटकम् ॥ २ ॥
काङ्क्षतेऽन्यतमः क्लिष्टो यदि वा परिवर्तनम्।
प्रोच्यतेऽत्रापि संक्षिप्तं तदैकान्तिकसाधनम् ॥ ३ ॥
अहंतां, ममतां, विद्याधिकारार्थकुलादिजम्।
मदं मानं तथा स्तम्भं दूरतः परिवर्जयेत् ॥ ४ ॥
एवं कृतेऽथ तन्नाट्यं लीलामेव हरेर्विदन्।
वसन्नपि गृहे क्लेशैर्मुक्तो भवति नान्यथा ॥ ५ ॥

## मङ्गलाशासनम्

कुलपतिरूपो भववद्भारं भवनस्य कुसुममिव शिरसा।
लीलामात्रेण वहन् विभाति मुन्शीमहोदयोऽत्र भवान् ॥ ६ ॥
विद्यालक्ष्म्योर्यौगपद्यं हि लोके तत्सापत्न्यात्प्रायशो नैव दृष्टम्।
सत्यप्येवं सद्गुणाकर्षणेन तयोर्यस्मिन् दृश्यते सन्निधानम् ॥ ७ ॥
एवं लब्धं दुर्लभं तत्सुयुग्मं लोकश्रेयःसिद्धये योजयन्तम्।
सर्वाधीशः सर्वथा स्वास्थ्ययुक्तं दीर्घायुष्कं संविधत्तां भवन्तम् ॥ ८ ॥
विद्यानां भारतीयानां कलानां संस्कृतेरपि।
जीवातवे हि वाङ्मयमिदं प्रेम्णा समर्पितम् ॥ ९ ॥

* 'पण्डितमार्तण्ड—शुद्धाद्वैतभूषण' अध्यापक ; भवनीयसंस्कृतमहाविद्यालये, मुम्बयी—७.

# विद्याधनः प्रा. वेलणकरः

## भाईशंकर पुरोहितः

अर्वाचीनपद्धत्या कृतविद्यासु श्रेष्ठाः **श्रीहरिदामोदरमहाभागाः** पाञ्चभौतिकं कलेवरं विहाय दिवं प्रस्थिता इति नूनं सरस्वत्या भाण्डागारो दरिद्रीकृतो लक्ष्यते।

इमे खलु अर्वाचीनरीत्या संस्कृतं प्रधानीकृत्य मुंबईविश्वविद्यालये एम्. ए. पदवीं प्रथमतयाऽलभन्त। समनन्तरमेव स्वविद्यासंस्थायां विल्सनमहाविद्यालये व्याख्यातृत्वमविन्दन्। तेषां गुरुणा पदत्यागात्समनंतरवर्षे च प्राध्यापकपदमलमकुर्वन्। ततः त्रिंशदधिकवर्षान् यावत् संस्कृतविभागाध्यक्षीभूय कार्यान्निवृत्ता भारतीयविद्याभवने संयुक्तनियामकत्वं संशोधनविभागाध्यक्षत्वं चोदवहन्। तदनु मुंबईविश्वविद्यालयेन सविशेषं प्रार्थिताः संस्कृतविभागस्य प्रथमाध्यक्षपदमगृह्णन्। तत्र च वर्षचतुष्टयं यावत् निपुणं विभागकार्यं कुर्वन्तः १३ जान्युआरी दिने दिवं प्रस्थिताः।

एते किल प्राचीनपद्धत्याऽपि शास्त्राण्यधीत्य संस्कृतवाङ्मयं गभीरमवागाहन्त। वेदविषयिणी तेषां संशोधनचातुरी न केवलं भारते वर्षेऽपितु समग्रे भूमण्डले वैदिकविद्वत्सु तेषां यशो व्यतनोत्। आहत्य तैस्त्रिंशतो ग्रंथानां संशोधनं प्रकाशनं च व्यधायि। भारतशासनानुबंधिन्या संस्कृत-एकादम्या च विक्रमोर्वशीयस्य विशुद्धसंस्करणाय प्रार्थितास्ते तत्कार्यं परमपाटवेन समपादयन्। तेषां संस्कृतवाङ्मयस्य बहुमुख्या सेवया परितुष्टा भारतराष्ट्रपतयस्तान् सम्मानितवन्तः १९६२ क्रिस्ताब्दे।



## अन्तेवासिनां प्रिया गुरवः

श्रीवेलणकरमहाशयस्य छात्रकुलमतिविस्तृतं वर्तते। तेषां शतशश्छात्राः सर्वत्र भारते प्राध्यापका विशिष्टाधिकारिणश्च विद्यन्ते। छात्रेषु पुत्रनिर्विशेषं स्निह्यत्सु

गुरुष्वमीषु श्रद्धाभारं दधतः प्राध्यापकाः एकं संशोधनलेखभूयिष्ठं ग्रंथं समार्पयन् ७५ तमे जन्मदिने। तदर्थमायोजिते महोत्सवे संगता अभिरूपास्तेषां कार्यजातं स्वभावसारल्यं विद्याप्रीतिञ्चाहमहमिकया प्राशंसन्।

एतेषां वैदुष्यमिव सारल्यमप्यनितरसाधारणमभूत्। एकदा गृहमुपगतेन मया ते सस्वरं वेदाध्ययनं कुर्वन्तोऽदृश्यन्त। एकं दरिद्रदर्शनं कुचेलं वेदपाठज्ञं पीठमारोप्य स्वयं च तत्पुरस्ताद् विनम्रभावेनाध उपविश्य सश्रद्धं ते वेदविकृतीरध्यगीषत। तादृशीं तेषां विद्यानिष्ठां त्रिद्वद्विषयिणीं विनम्रताञ्च दृष्ट्वा नूनमाश्चर्यस्य परां काष्ठामन्वभवम्।

यदि कश्चित्तानुपासर्पदाध्यक्ष्यं कर्तुं निवेदयितुं स्वयं योग्यतमा अपि ते विद्वदन्तरमसूसुचन्। सत्यपि सर्वत्र प्रभावातिशये ते स्वख्यातिभीताः स्वग्रंथानां मुद्रापणायापि न प्रायतन्त। अत एवानेकास्तेषां रचना अद्यापि हस्तलिखिता मञ्जूषाभूषणायन्ते।

प्राच्यविद्यापरिषदः कार्यकारिण्याः सदस्यता तैः सुचिरं धृता। किन्तु तदाध्यक्ष्यायानेकशः प्रार्थिता अपि ते न तदङ्गीकर्तुमैच्छन्।

एतेषां प्रयाणेन नूनं तेषु वत्सला माता सरस्वती रुदन्तीव सुचिरमुष्णाश्रूणि विमोक्ष्यति।



**प्रा. श्री वेलणकराणां सरस्वतीसेवाप्रसूनानि :—**

१. **ऋग्वेद-सप्तम-मण्डलम्** आंग्लभाषानुवादटिप्पण्यादिसहितम् : प्रकाशक— भारतीय विद्या भवन, बम्बई ७.
२. **ऋग्वेद-द्वितीय-मण्डलम्** प्रकाशकः—बम्बई विश्वविद्यालय.
३. **छन्दोनुशासनम्** प्रकाशकः—भा. वि. भवन.
४. **विक्रमोर्वशीयम्** प्रकाशकः— साहित्य एकादमी.
५. **जिनरत्नकोश** प्रकाशकः—भांडारकर इन्स्टिटयुट, पुना ४.
६. **स्वयम्भूछन्दस्** प्रकाशकः—राजस्थान प्राच्य मंदिर.
७. **कविदर्पण** ,, ,,
८. **वृत्तजातिसमुच्चय** ,, ,,
९. **सौप्तिक पर्व—महाभारतस्य** प्रकाशकः—भांडारकर इन्स्टिटयुट, पुना ४.
१०. **ऋक् सूक्त वैजयंती** प्रकाशकः—वैदिक संशोधन मण्डल, पुना.

# अस्मान् हित्वा दिवं गतः

अ. वे. सुब्रह्मण्यः

पण्डितेष्वपि विज्ञाता तेषूद्यमगुणोत्तमः।
तेषामपि शमप्रेमविनयादिगुणान्वितः॥

विज्ञाता बहुशास्त्रवेत्तृषु चतुर्वेदेष्वभिज्ञः सुधीः
तेषामप्रतिमप्रबन्धरचनोत्साहान्वितः सोद्यमः।
एतेष्वप्यविकत्थनः शमधनश्छात्रप्रियो धार्मिकः
एकस्थानसमागतैर्गुणगणैराचार्य संसेव्यसे॥

कारणानि हि चत्वारि यदर्थं त्वं दिवं गतः।
हित्वा माणवकानस्मानसंख्येयांश्च दुःखितान्॥

व्याख्यातुं श्रुतितत्त्वमर्थनिबिडं देवर्षिभिः प्रार्थितः
छन्दोवृत्तिमुपन्यसन् द्विविषदां बोधाय कालं नयेः।
व्यासग्रन्थिपरःशतं शिथिलयन् तृप्त्यै सुराणां वसेः
कारुण्यं भवसूतये वितनुषे स्वर्गे चिराद्विस्मृतम्॥

त्वया सह दिवं गन्तुं त्वां वा रोद्धुं न हि क्षमाः।
दैवीं वाचं सेवमानाः प्राप्नुयाम कृतार्थतां॥

आहूते भवति प्रियैः सुरवरैर्गच्छेम सार्धं त्वये-
त्युक्तं चेत्तदसांप्रतं तव गतिं रोद्धुं वयं न क्षमाः।
एवं चेत् द्युतिमन्! भवद्गुणरतैरस्माभिराकांक्षिभिः
संसेव्या सुरभारती किमधुना नव्यैरुपायान्तरैः॥

# हरिर्नो दिवं गतः

शांताराम जोग

हरिर्यस्य सदैवासीद् ध्येयो यस्य गुरुर्हरिः।
हरितोषसमित्याः स हरिः संस्थापको गतः ॥

वेदानामसमो वेत्ता गुरुर्नो हृदि संस्थितः।
वेदार्थं चिन्तयन्नेव देवं वेदभुवं गतः ॥

जाह्नवी यस्य वागासीच्छिष्यसंशयदारिणी।
सूनृतं चोदयन्ती सा कथं मौनं समाश्रिता ॥

य आत्मज इव च्छात्रे मातृवत्प्रीतिमादधे।
मन्ये जन्येव दूतोऽसौ हरिर्नोऽद्य दिवंगतः ॥

# श्रीपादो नाकमास्थितः

## शांताराम जोग

ब्रह्मणः पदचिन्तायै ग्रन्था यस्य विचक्षणाः।
दर्शयन्ति परं पारं श्रीपादो नाकमास्थितः॥

भारतं पंचमो वेदश्चिकित्साशुद्धरूपधृत्।
न चिरेणैव कालेन विवर्तं नु भजेदिति॥

निदिध्यासपरो यश्चाविगणय्य शरीरजान्।
श्रमान्प्रापत्स्वकं ध्येयं धन्योऽसौ कृतनिश्चयः॥

सीतारामो नृपो रामः परमात्मा गुणान्वितः।
सुखदुःखे कथं प्राप्त इति येन विवेचितम्॥

करुणस्य परं सारं भवभूतिकृतौ स्थितम्।
सहार्दं निपुणं चासौ रसिकप्रवरो गतः॥

# श्रीजुगलकिशोरपुण्यस्मृतिः

[ पुण्यचरितस्य श्रीजुगलकिशोरबिरलामहोदयस्य स्वःप्रयातस्य त्रयोदशाहे भारतीयविद्याभवने मुंबापुरीस्था नैके विद्वांसो वैदिकाश्च निमन्त्रिताः सत्कृताश्चाभवन्। सविकृति-वेदध्वनिपूते तस्मिन् प्रसङ्गे पठितमासीदिदं प्रशस्तिकाव्यम् ]

कर्तव्यैकरतिः सदाहितमतिः धर्माभिवृद्धौ धृतिः,
साधूनां चरणस्थितिः जनमनःसंशोधयित्री कृतिः।
हिन्दूनां नवजागृतावहरहः संकल्पयत्नास्थितिः,
इत्येषा गुणसंततिस्त्वहह रे! नष्टा त्वयि प्रस्थिते॥ १॥

विख्याते धनिनां तथा च गुणिनां बिर्लेति वंशे जनिः,
वाणिज्ये ननु धर्मसंस्कृतिविधौ निष्ठा परा यस्य वै।
बलदेवस्य सुतः किशोरसहितं जुगलेत्यभिख्यान्वितः
सोऽयं मन्दिरमूर्तिनिर्मितिपटुर्हा स्वर्गलोकं गतः॥ २॥

श्रूयते खलु लोकेऽस्मिन् बहुरत्ना वसुंधरा।
न नूनं सर्वरत्नानि कौस्तुभानीति निश्चितम्॥ ३॥

भाईशंकर पुरोहितः

# अन्योऽन्याध्यासविचारः

पि. सुब्रह्मण्य भट्ट*

अध्यासभाष्ये 'अन्योऽन्यस्मिन्नन्योऽन्यात्मकतामध्यस्य' इति विषयविषयिणोरन्योऽन्याध्यास उक्तः। अत्र यथाश्रुतमर्थं परित्यज्य प्रदीपव्याख्यानकारा अन्यथा व्याचक्षते–अन्योऽन्यस्मिन्नन्योऽन्यात्मकतामध्यस्येति यद्यपि भाष्यम्; तथापि देहेन्द्रियादेरात्मनि स्वरूपेणैवात्मनो देहेन्द्रियादौ न स्वरूपेणाध्यासः। किंतु संसृष्टरूपेणैव। अन्यथाऽऽत्मनोऽप्यारोपितत्वे मिथ्यात्वापत्तेः। अनात्मवत्। अत एवोच्यते 'सत्यानृते मिथुनीकृत्य' इति। न ह्युभयोरपि मिथ्यात्वे सत्यानृतमिथुनीकरणमुपपद्यते। अनेन हि वचनेनारोप्याधिष्ठानयोर्मध्येऽन्यतरस्य सत्यत्वं गम्यते। तच्च सत्यत्वमधिष्ठानस्यैवेति सर्वसम्प्रतिपन्नम्। अधिष्ठानं चाज्ञानविषय आत्मव न त्वारोपितम्, तस्याचेतनत्वेनाज्ञानविषयत्वायोगात्। तदिदमपि 'मिथ्याज्ञाननिमित्त' इत्यनेन सूच्यते। 'मिथ्याभूतं यदनिर्वचनीयमज्ञानम्, तत् निमित्तं यस्य' इति हि तदर्थः। न तु भ्रान्तिज्ञानं निमित्तमिति। 'अध्यस्य व्यवहार' इत्यनेनव तदुक्तेः। तथा चात्मविषयकेणैकेनैवाज्ञानेनान्योऽन्याध्यासोपपत्तावनात्मविषयकाज्ञानान्तरस्यानावश्यकत्वादात्मनस्संसर्गमात्रमनात्मन्यध्यस्यते, न तु स्वरूपमपि इति।

अत्र पृच्छामः–'अन्योऽन्यस्मिन्नन्योऽन्यात्मकतामध्यस्य' इति वाक्यस्यात्मन्यनात्मत्वमनात्मनि चात्मत्वमध्यस्येत्येवार्थे विस्पष्टं प्रतीयमाने 'अनात्मन्यात्मसंसर्गमात्रमध्यस्य' इत्यर्धजरतीयन्यायेनैकदेश अर्थसंकोचः किमर्थं क्रियत इति। ननूक्तमन्यथाऽऽत्मनोऽप्यारोपितत्वे मिथ्यात्वापत्तिरिति। हन्त! कुतोऽयं सन्त्रासः आरोपितत्वे मिथ्यात्वमप्यापततीति? नास्माकं सन्त्रासः, किं त्वनुमानं स्वयमेवोदेति निर्बाधम्–'आत्मा मिथ्या, आरोपितत्वात् अनात्मवत्' इति, इति। अहो! महदिदमनुमानकौशलम्, यन्निमीलितलोचनस्यापि सर्वस्य लोकस्य साक्षादपरोक्षभूत आत्मापि मिथ्यात्वेनानुमीयत इति। एवं निरुपचरितप्रत्यक्षबाधितमप्यनुमिमानो भवान् 'मम माता वन्ध्या, मत्पितृपत्नीत्वात्, मत्सपत्नीमातृवत्' इत्यपि कुतो नानुमिमीत? यथा हि मातुर्वन्ध्यात्वानुमानं व्याहतम् (बाधितम्), वन्ध्यात्वे मातृत्वस्यैवानुपपत्तेः, एवमात्मनो मिथ्यात्वानुमानमपि व्याहतम्, अनुमातुरेवा-

* अध्यात्मप्रकाशकार्यालय, होळेनरसीपुर, हासनमण्डलम् (मैसूरु)

त्मत्वेन तस्यैव मिथ्यात्वेऽप्यात्मनोऽनारोपितत्वेन ......। तस्मादात्मन आरोपितत्वेन हेतुना मिथ्यात्वं शङ्कितुमप्यशक्यम्। स्मर्तव्यं तावत् 'सर्वो ह्यात्मास्तित्वं प्रत्येति न नाहमस्मीति' इति भाष्यवचनम्। अतो यथाश्रुत एव 'अन्योऽन्यस्मिन्नन्योऽन्यात्मकतामध्यस्य' इति वाक्यस्यार्थोऽवगन्तव्यः। भाष्यमप्येतदनुगुणमेव दृश्यते--'तं च प्रत्यगात्मानं सर्वसाक्षिणं तद्विपर्ययेणान्तःकरणादिष्वध्यस्यति' इति। न तु 'प्रत्यगात्मसंसर्गम्' 'सर्वसाक्षिसंसर्गम्' इति वा। एवमेवान्यत्रापि 'देहादिष्वनात्मस्वहमस्मीत्यात्मबुद्धिविद्या' 'देहादिष्वनात्मस्वात्मत्वनिश्चयः' इत्यादि। न त्वात्मसंसर्गबुद्धिरिति वा आत्मत्वसंसर्गनिश्चय इति वा।

सार्वलौकिकोऽनुभवोऽप्यात्मनः स्वरूपेणैवाध्यासं दर्शयति। तथा हि—मनुष्योऽहम्, काणोऽहम् इत्याद्यनुभवः देहेन्द्रियादावात्मनः स्वरूपेणैवाध्यासे उपपद्यते; न संसृष्टतयाऽध्यासे। अन्यथा मनुष्यो मत्संसृष्टः, काणो मत्संसृष्टः इत्यादिप्रतीत्यापत्तेः।

किं चाधिष्ठानसंसर्गमात्रमध्यस्यत इति कोऽर्थः? संसर्गो हि तादात्म्यरूपः। तथा चाधिष्ठानतादात्म्याध्यास इत्युक्ते तादात्म्येनाधिष्ठानाध्यास इत्येव प्रकारान्तरेणोक्तं भवति इति अधिष्ठानस्य स्वरूपेण नाध्यास इति वचनमर्थशून्यमेव।

ननु स्वरूपेणाध्यासो नाम स्वस्य केन रूपेणाध्यासोऽभिप्रेतः? चैतन्यरूपेणेति चेत्, तर्हि आत्मनश्चैतन्यात्मकं रूपमध्यस्तमित्युक्तं भवति। तथा च जडत्वापत्तिरात्मनः। न, जडे चैतन्यरूपमध्यस्तमिति हि ब्रूमः। तथा च जडस्य चेतनात्मत्वं कल्पितमित्यर्थः। तत्र कथमात्मनो जडत्वापत्तिः? एवं तर्हि जडे चैतन्यस्य सम्बन्ध एव कल्पितः, न तु चेतन इत्येवापतितम्। तदेव ह्युच्यतेऽस्माभिरप्यात्मनस्संसर्ग एवाध्यस्यत इति। ननु कोऽयं जडे चेतनस्याध्यस्तः संसर्गो नाम? तादात्म्यमिति चेत्, यदि तादात्म्यशब्देन चेतनात्मत्वमभिप्रेतम्, तर्हि जडे चेतनात्मत्वं कल्पितम्, मिथ्याभूतमित्यर्थः। तत्र पृच्छामः—यदिदं चेतनतादात्म्यरूपं चेतनात्मत्वं तत्किं स्वरूपेण कल्पितमुत तदपि केनचित्संसर्गेणेति। न संसर्गेण। तस्यापि संसर्गान्तरकल्पनापत्त्याऽनवस्थापत्तेः। किं तु स्वरूपेणैवेति। तर्हि चेतनतादात्म्यं स्वरूपेणापि मिथ्येत्युक्तं भवति। आरोपितस्य सर्वस्य मिथ्यात्वाभ्युपगमाद् भवद्भिः। तथा च मिथ्याभूतस्य तस्य कुत्राप्यसत्त्वात् चेतनेऽपि तन्नास्तीति तस्याप्यचेतनत्वापत्तिः। ननु चेतनः स्वरूपेणैव चेतनः न तु चेतनतादात्म्यवत्त्वेनेति चेन्न। अविशे-

षात्। चेतनः चेतनतादात्म्यवान्, चेतनात्मा इति शब्दविशेष एवायं न त्वर्थविशेषः कश्चित्। घटं दर्शय, घटस्य स्वरूपं दर्शय इति घटतत्स्वरूपयोः कल्पितभेदेन यथा वाक्यप्रयोगो भवति एवमिहापि कल्पितभेदेनैव व्यपदेशः। अतश्चेतनतादात्म्यरूपस्य संसर्गस्याध्यास इत्युक्ते चेतनाध्यास इत्येवोक्तं भवतीति न भवन्मते विशेषः कश्चिदन्यत्राभिनिवेशात्।

अपि च तादात्म्यं नाम न संसर्गः। उभयनिष्ठत्वाभावात्। न हि चेतनतादात्म्यं स्वाश्रये चेतन इवाचेतनेऽपि सम्बन्धुमर्हति। विरोधात्। न च स्वाश्रयेऽपि तस्माद्भिन्नं सत् सम्बन्धुमर्हति भूतलाद् भिन्नो घट इव भूतले। भेदस्य कल्पितत्वात्। तस्मात्तादात्म्यमपि स्वरूपमेवेति स्वरूपेणैव चेतनस्याध्यासः। न च तावता मिथ्यात्वापत्तिः, अनुभवविरोधात्। रजतं हि शुक्तावध्यस्तं 'इयं शुक्तिः' इत्यधिष्ठानयाथात्म्यज्ञानेन कुत्रापि नास्तीत्यविद्यमानत्वेनानुभूयमानत्वात् मिथ्येति युज्यते। शुक्तिस्तु इदन्त्वेन रजतेऽध्यस्तापि रजताभेदेन गृह्यमाणाऽपि न तादृशयाथात्म्यज्ञानेन कुत्रापि नास्तीत्यविद्यमानत्वेनानुभूयत इति न तस्यां मिथ्यात्वमापादयितुं शक्यम्। तदेवं रजतस्य मिथ्यात्वमनुभवप्रमाणेनैव साधयामः। न त्वध्यस्तत्वेन हेतुना। अतोऽध्यस्तत्वेन हेतुनाऽधिष्ठानस्य मिथ्यात्वापादनं बाधदोषजुष्टम्। एवमेवात्मानात्मनोरितरेतराध्यासेऽप्यनुभवमेव शरणीकृत्यारोपित (अध्यस्त) त्वेन हेतुनात्मनो मिथ्यात्वानुमानं वारणीयम्।

अपि चात्मनि देहस्य, देह आत्मनश्चाभेदग्रहे समानेऽपि देहः स्वरूपेणाध्यस्यते, आत्मा तु संसर्गेणेति अभेदग्रहे वैलक्षण्यं स्वानुभवविरुद्धं कल्पयतां बुद्धिमान्द्यं किमिति वर्णयामः ?

अपि च तादात्म्यरूपः संसर्गो नात्यन्ताभेदे सम्भवति। यथा घटो घट इति। नाप्यत्यन्तभेदे, यथा वा घटः पट इति। अतो भेदाभेदयोरेव स इति तादात्म्यवादिनां मतम्। प्रयुञ्जते चानुमानम्—गुणादिकं गुण्यादिना भिन्नाभिन्नम्, समानाधिकृतत्वात् इति। गुणगुणिनोः, अवयवावयविनोः, क्रियाक्रियावतोः, जातिव्यक्त्योः, नित्यद्रव्यविशेषयोश्च भेदाभेदरूपं तादात्म्यं संसर्ग इति तेषामाशयः। तत्र यदि अहं मनुष्य इत्यादिभ्रान्तिज्ञानेऽपि जातिव्यक्तित्वादिनिमित्तकसामानाधिकरण्यदर्शनात् भेदाभेदरूपं तादात्म्यं देहात्मनोर्वर्ण्यते तैः, तर्ह्यभेदेन साकं भेदोऽप्यवश्यं प्रतीयत इत्यभ्युपगन्तव्यं भवति। तत्तु सर्वथा न युज्यते। न ह्यहं मनुष्य इत्यादिप्रतीतौ

देहात्मनोरभेद इव भेदोऽप्यवभासत इति कस्याप्यनुभवसिद्धमेतत्। ननु अवभासेते एव भेदाभेदौ। अहमिति मनुष्य इति च विलक्षणशब्दद्वयोच्चारणात् अहं मनुष्य इति सामानाधिकरण्यदर्शनाच्च। अन्यथा अहमहमिति, मनुष्यो मनुष्य इति वा सामानाधिकरण्यापत्तेरिति चेत्, न, भेदप्रतिभाने देहधर्माध्यासानुपपत्तेः। यदि विलक्षणशब्दोच्चारणादहंमनुष्ययोर्भेदोऽप्यवभासत इत्यङ्गीक्रियते तर्हि न देह (मनुष्य) धर्मान् सुखदुःखादीनात्मन्याकलयेत्। आकलयति तु। अतो नास्त्येव भेदावभासः। विलक्षणशब्दोच्चारणं त्वत्यन्ताभेदेऽप्युपपद्यते। सच्चिदानन्दादि शब्दवत्। न हि सच्चिदानन्दादयो ब्रह्मधर्मा इतरेतरविभिन्नाः। एकस्य ग्रहणे पीत-रेखामग्रहणं तु गृह्यमाणानामेव सतां विपरीतज्ञानव्यवधानमात्रात्। यथा गृह्य-माणाया अपि शुक्तिकाया विपर्ययेण रजताभासाया अग्रहणम्। तस्मादात्मनस्संसर्ग-मात्रमध्यस्यत इति न युक्तिमत्।

अथवा आरोपितरूपेणात्मनो मिथ्यात्वेऽपि न दोषः। तथा हि छान्दोग्ये भाष्यम्—'ननु छायामात्रश्चेज्जीवो मृषैव प्राप्तः। तथा परलोकेहलोकादि च तस्य। नैष दोषः। सदात्मना सत्यत्वाभ्युपगमात्। सर्वं च नामरूपादि सदात्मनैव सत्यं विकारजातम्। स्वतस्त्वनृतमेव। 'वाचारम्भणं विकारो नामधेयम्' इत्युक्तत्वात्। तथा जीवोऽपीति। 'यक्षानुरूपो हि बलिरिति न्यायप्रसिद्धिः' इति। अनेन हि वाक्य-सन्दर्भेण जीवस्य छायामात्रत्वरूपेण मृषात्वं सदात्मना सत्यत्वं च भाष्यकाराणाम-भिमतमित्यवगम्यते। माण्डूक्येऽपि—'तस्याः परमार्थरूपमविद्याकृतं रज्जुसर्पादि-सममुक्तं पादत्रयलक्षणं बीजाङ्कुरस्थानीयम्' इति।

अथ यदुक्तम्—'आरोप्यस्याचेतनत्वेनाज्ञानविषयत्वायोगान्न तत्राधिष्ठान-स्यारोपस्सम्भवती'ति, तत्र पृच्छामः— तर्ह्यधिष्ठानसंसर्गस्य वा तत्र कथमारोपः? असंसृष्टरूपेणाप्यज्ञानविषयत्वायोगात्। अधिष्ठानविषयकेणैवाज्ञानेनेति चेत्, तर्हि तेनैवाज्ञानेन स्वरूपेणैवाध्यासो भवतु। विनिगमनायां प्रमाणाभावात्। मिथ्यात्वापत्तेश्च परिहृतत्वात्। वस्तुतस्त्वचेतनस्याज्ञानाविषयत्वमिति न युक्तिमत्। शुक्त्याद्यज्ञानदर्शनात्। ननु तत्र शुक्त्यवच्छिन्नचैतन्यमेवाज्ञानविषयः, न केवला शुक्तिः इति। तदिदं युष्मत्परिभाषामात्रसिद्धम्। न हि लोके कश्चिदपि प्रत्येति 'शुक्त्यवच्छिन्नचैतन्यं न जानामि' इति। 'शुक्तिं न जानामि' इत्येव तु प्रत्येति। बाधकज्ञानमपि हि 'इयं शुक्तिः' इत्येवोदेति। न तु 'इदं शुक्त्यवच्छिन्न-

चैतन्यम्' इति। भाष्ये कुत्रापि शुक्तिरजताद्यध्यासकारणत्वेन चैतन्याज्ञानात् रजत-सर्पाद्यध्यास इत्येवंरूपप्रक्रियाया अदर्शनाच्च।

मिथ्याज्ञाननिमित्त इति तु भ्रान्तिज्ञाननिमित्त इत्येवार्थः। न त्वनिर्वचनीयाज्ञाननिमित्त इति। न चाध्यस्य व्यवहार इत्यनेन पौनरुक्त्यम्। सत्यानृते मिथुनीकृत्येत्यनेनैवोपपत्तेः। भ्रान्त्याऽध्यारोपयतीतिवच्च। न हि भ्रान्तिरध्यारोपो वा इतरेतरविभिन्नौ। भ्रान्तिरेवाध्यारोपः, अध्यारोप एव च भ्रान्तिः। राहोः शिरः, पुरुषस्य चैतन्यमित्यादिवाक्यवदेतादृशवाक्यानामुपपत्तिः। अध्यासो ह्यन्यस्यान्यात्यतारोपरूपः, सत्यानृतमिथुनीकरणरूपः; भ्रान्तिज्ञानरूपः, इत्येवमध्यासस्य नानारूपात्मकत्वप्रदर्शनपराणि ह्येतानि वाक्यानि। तस्मादध्यस्य व्यवहार इत्यनेन न पौनरुक्त्यम्।

'मिथ्याभूतं यदनिर्वचनीयमज्ञानम्' इति अनिर्वचनीयभावरूपाज्ञानं तु भाष्यकारैः कुत्रापि न प्रदर्शितमप्रामाणिकं चेत्येतत् मूलाविद्यानिरासादिषु निबन्धेषु विस्तरश उपपादितं श्रीमत्सच्चिदानन्देन्द्रसरस्वतीस्वामिचरणैरिति तत एवावगन्तव्यम्।

अतो यथाश्रुत एव भाष्यार्थोऽवसेयः, न तु संकुचितोऽर्थः।



## अन्योऽन्याध्यासविचारतत्त्वम्।

'अन्योऽन्याध्यासविचार' इति शीर्षकं दत्वा इमे लेखकाः 'प्रदीपा'ख्यव्याख्याखण्डनव्याजेन श्रीपद्मपादसुरेश्वरवाचस्पतिमिश्रमधुसूदनसरस्वतीप्रभृतीन् अगाधप्रज्ञान् साक्षात्कृतब्रह्मतत्त्वान् स्वग्रन्थद्वारा अनाद्यविच्छिन्नाद्वैतशास्त्रसम्प्रदायरक्षितॄन् निन्दितुमध्यवस्यन्ति। स्वयं शास्त्रसम्प्रदायरहितत्त्वात् हेत्वाभासैः अन्यान् व्यामोहयितुं च प्रयतन्ते।

तथाहि—यदुक्तं "अनात्मनि आत्मसंसर्गमात्रमध्यस्यत इत्यर्धजरतीयन्याय" इति तन्न, यथा आत्मनि अनात्मसंसर्गः अनात्मा उभयमध्यस्यते तथा अनात्मनि आत्मसंसर्गः संसृष्टरूपेण च आत्मा अध्यस्यते इति क्व अर्धजरतीयन्यायः। इदमेव तु वैलक्षण्यं यत् स्वरूपेणात्मा सत्यः अनात्मा तु स्वरूपेणापि मिथ्येति तत्तु प्रमाणान्तरादवगम्यते। यदपि परिहासवचनं महतः शास्त्रकारान् प्रति 'अहो' इत्यादि यच्च आत्मनः आरोपितत्वेऽपि सत्यत्वमिति, तत्र पृच्छामः यदि आरोपितं सत्यं भवेत् तदा शुक्तौ अध्यस्तं

रूप्यमपि सत्यमेवेष्यतां, क्व अनिर्वचनख्यातिः ? यद्युच्यते रजतमन्विष्यमाणं भ्रमस्थले नोपलभ्यत इति तर्हि तार्किकोक्तान्यथाख्यातिमवलम्ब्य ज्ञानलक्षणासन्निकर्षोऽपि बलादङ्गीकर्तव्यः स्यात् न मिथ्यात्वम्। यदि प्रत्यक्षदृष्टत्वान् मिथ्यात्वानुमानमयुक्तं तर्हि प्रपञ्चस्यापि सत्यतया प्रत्यक्षदृष्टत्वात् क्व मिथ्यात्वानुमानस्य भगवत्पादैः माण्डूक्यभाष्यवैतथ्यप्रकरणे आदौ कृतस्योत्थितिः ? यदि आत्मनः प्रत्याख्यातुमशक्यतया आत्मपरिशेषः तर्हि स्वरूपेणात्मा सत्य इत्यस्मन्मतमेव स्थिरीकृतम्। न प्रत्यक्षप्राबल्यात्। चन्द्रप्रादेशिकप्रत्यक्षादौ अनुमानस्यैव प्राबल्यदर्शनात्।

यदपि भाष्यवाक्यप्रदर्शनम् 'तं च प्रत्यगात्मानं' इत्यादि तत् भाष्यस्य गम्भीरत्वात् श्रीमधुसूदनसरस्वत्यादिमहाविद्वद्भिरेव अर्थतो ज्ञातुं शक्यत्वात् तदुक्तार्थस्य स्वीकर्तव्यत्वाददूषणम्। पठन्ति हि वृद्धाः—

मधुसूदनसरस्वत्याः पारं वेत्ति सरस्वती
वेत्ति पारं सरस्वत्या मधुसूदनसरस्वती

इति।

यत्तु संसृष्टरूपेणाध्यासाभ्युपगमे 'मनुष्यो मत्संसृष्ट' इति स्यादनुभव इति; तन्न। इदं रजतं इत्यादिभ्रमे इदंपदार्थः विशेष्यः रजतपदार्थः प्रकारः तयोस्संसर्गस्तु संसर्गतया भासते तस्य न पदेनोल्लेख इतिशास्त्रमर्यादा, ततश्च तत्र यथा रजतस्य स्वरूपेण संसृष्टरूपेण च भ्रमः विनैव संसर्गस्य पदेनोल्लेखं तथात्रापीति मन्तव्यम्। संसृष्ट रूपं इत्यस्य संसर्गयुक्तं रूपं इत्यर्थः तत्र संसर्गांशस्य संसर्गमर्यादया भानम्।

यदुक्तं चेतनतादात्म्यस्याध्यास इत्युक्ते चेतनस्यैवाध्यासः इत्येवोक्तं भवतीति तन्न। भेदसमानाधिकरणाभेदस्तादात्म्यं तत्र भेदः प्रातीतिकः अभेदो व्यावहारिक इति अद्वैतप्रक्रिया। न च तादात्म्यस्य संबन्धान्तरकल्पनाप्रसक्तिः संसर्गस्य संसर्गान्तरानपेक्षणात्। तथा च चेतनस्य पारमार्थिकत्वात् तत्तादात्म्यस्य व्यावहारिकत्वात् न तयोरेकत्वमिति निश्चिनु। 'न हि चेतनतादात्म्यं स्वाश्रये चेतन इव' इति चासङ्गतम्, स्वप्रतियोगिकसंबन्धस्य परस्मिन्नेव संभवात्, स्वस्मिन्नसम्भवात्। यद्यपि रजतस्य मिथ्यात्वं प्रत्यक्षेण ज्ञायते तथापि इदं रजतमिति यज्ज्ञानं तन्मिथ्येति विषयविशिष्टज्ञानमिथ्यात्वावगाहनात् सर्वोऽपि भ्रमविषयो मिथ्येत्यवगतम्। ततश्च आत्मनः स्वरूपेणाध्यासे मिथ्यात्वप्रसङ्गः अस्त्येव।

यत्तु स्वानुभवविरुद्धं कल्पयतां बुद्धिमान्द्यं इति' तत् तथा वक्तुरेव बुद्धिमान्द्यं प्रकटयति, स्वरूपेणाध्यासे मिथ्यात्वं भवेदेवेत्युक्तत्वात्।

यत्तु अहं मनुष्य इत्यध्यासे तादात्म्यघटकतया भेदो यदि भासते तदा धर्माध्यासानुपपत्तिः इति। कुतोऽयं व्यामोहः ?।

रज्जुसर्पाद्यध्यासेष्वपि तुल्यत्वात्, सर्पगतभीषणत्वादेः रज्जावध्यासात्। यत्र अभेदाध्यासः तत्र सर्वत्र धर्माध्यासः अस्त्येवेति। न च सर्वत्रायं प्रश्नः। भेदस्य संसर्गघटकतया भाने तद्विरुद्धः अभेदः कथं भासत इत्येव प्रष्टुं युक्तत्वात् तत्र च भेदस्य प्रातीतिकत्वेन व्यावहारिकाभेदाविरोधादिति समाधानं लघुचन्द्रिकोक्तमनुसन्धेयम्।

यत्तु आरोपितरूपेण मिथ्यात्वेऽपि न दोष इति तत्र आरोपितेत्यस्य कोऽर्थः ? यदि मिथ्यात्वं तदा मिथ्यारूपेण मिथ्येत्यात्माश्रयः। यदि भ्रमप्रकारीभूतरूपेणेत्यर्थः तदा भ्रमप्रकारमस्माभिः संसृष्टरूपमित्यङ्गीकारात् अस्मन्मतप्रवेशः।

अज्ञानस्याचेतनं विषयो न भवति शुक्तिरजतादिभ्रमेऽपि तत्तदवच्छिन्नचैतन्यस्यैवाज्ञानविषयत्वं अचेतनस्य जडतया स्वयमप्रकाशमानत्वेन तत्र अज्ञानरूपावरणस्य प्रयोजनाभावात् तस्याज्ञानकल्पितत्वाच्च। घटादिकं हि तत्तदवच्छिन्न चैतन्येन भास्यते। तच्च चाक्षुषादिवृत्तिदशायां वृत्त्यवच्छिन्नचैतन्येन अन्तःकरणावच्छिन्नेन च चैतन्येनैकीभूतं अहं जानामीति व्यवहारे कारणम्। तदभावे च तादृशचैतन्यसंबन्धाभावान्न प्रत्यक्षं, तथाच घटादिचैतन्यस्यैव ज्ञानाज्ञानविषयत्वे।

इति शास्त्रप्रक्रिया। अत्र एतदनभिज्ञेन यदुक्तं शुक्तेरेवाज्ञानविषयत्वानुभवात् शुक्तिं न जानामि इति हि प्रतीयते इति। इदमप्ययुक्तम्। न सोऽस्ति प्रत्ययो लोके यत्र सत्ता न भासत इति शास्त्रात्, शुक्तिं इत्यस्य शुक्त्यवच्छिन्नं सद्रूपं ब्रह्मेत्यर्थः यथाश्रुतं, अतः अनुभवोपपत्तिः

यच्च मिथ्याज्ञाननिमित्त इत्यस्य भ्रान्तिनिमित्त इत्यर्थ इति, तन्न। अध्यस्य व्यवहार इत्येव सिद्धेः। न च मिथुनीकृत्य व्यवहार इत्यनेन सिद्धिः। पूर्वपूर्वाध्यासादुत्तरोत्तराध्यासः न तु पूर्वप्रमापेक्षया इति वक्तुं तदवश्यंभावात्। यत्तु भ्रान्त्याऽध्यारोप इत्यत्र पौनरुक्त्यमङ्गीकृतमित्युक्तं, तन्न। तत्र आरोपणं निक्षेपणं न तु भ्रान्तिः भ्रान्त्या शुक्तौ रजतं क्षिप्यते इति तदर्थात्। तस्मात् मूलाज्ञानोपादान इति पञ्चपादिकाकृदुक्तिमनुसृत्य प्रतीपकृता यद्व्याख्यानं कृतं तदेव समीचीनमिति सिद्धम्। मूलाविद्यानिरासग्रन्थः बहुभिः बहुधा खण्डितः न जीवति। अतः तदुपष्टंभनं लेखकस्य गङ्गाप्रवाहे मज्जतः कुशकाशावलम्बनतुल्यमिति ध्येयम्।

—सम्पादकः

# (कथाप्रबन्धः)

—ए. एन. वरखेडकर*

प्रसरीसरीति समन्तात्परमपावनः प्राभातिकः पवनः। परमरमणीया च विभाव्यते पाटलितसितपयोदा प्राची दिक्। सरसिजैः सममेव समुल्लसति जनमानसमपि। शिशिरितपरिसरमिमं समीरमाश्लिषतामेव सपदि सुप्रसन्नं मानसं कमप्यनेहसं न संस्मरति भुविस्थमात्मानम्। कन्दलयति हि कमप्यानंदं हृदयकेदारे समेषामप्यसुमतामेव उषःकालः। हन्त! पारेगिरां रामणीयकमस्य समयस्य। अयमिह गगनतलमध्यमध्यारोहति सकलकलनिनादं पतद्गतकदम्बः, एष रक्तोपलनिर्मितः क्रीडाकन्दुक इव प्राच्या दिशः समन्तादुद्भासयति संसारं विवस्वान्, इयमितः परमकमनीयं निसर्गोद्देशं रंजयति सूरस्वसुः सुषमा। एष सविलासंललितगतिरवलम्बते चित्तदेशं नितम्बिनीनिकुरम्बः। इतः कापि कमलकोमलकंठनाला बाला सविलासं मुखधूननेन पुरस्कृतवेणीबंधा सूचयति नूतनमवतारं मदनस्य, इयं काचन पवनचलितं कचकलापं करतलपरामर्शेण सालसमपसारयन्ती, दरनिमीलितनयना मनागिव मानदतनौ निलीना प्रियमनुयान्ती वक्षस्तटवंचितमपि सिचयं नाकलयति। किमधिकं ननु सर्वत एव पर्यवेक्षणीयो निसर्गः।

अथ नातिचिरादेव प्रत्यूषपूषत्विषा सविशेषसुषममासीदाशांतरालम्। प्रातस्तनः समय इति किंचिदिव विरलप्रचार आसीन्नगरपन्थाः। जातुचिदेव प्रातरटतां केषांचित्समीरसेविनां समुदायः सपरिहासवचनं इतस्ततः संचरन्नंचति स्म लोचनगोचरताम्। अत्रान्तरे काचन षोडशवर्षदेशीया युवती नितान्तमेव चिन्तातन्तुसन्दानितस्वान्ता द्राघीयसा निःश्वा-

---

* एम. ए. पूना

सेन धूसरायमाणाधरपल्लवा निराशाविवशमानसा कथमप्याश्वासयन्ती सखीद्वितीया समलंचकार नगरपन्थानम्। हा हन्त परं न जानीमः कुतो वा सेयं परुषमनसा दैवेन सरोषमपमृद्यमाना म्लानकमलिनीव नितरामुद्वेजयति स्म चित्तमत्रलोचकानाम्। अस्याः सुधाकरमधुरे वदने समाजगाम कापि म्लानता। कोणयोरवतीर्णं नयननीरं कलुषीचकार विमलं कपोलम्। कुसुमकार्मुककमनीयं च भ्रूयुगलमिदानीं चिन्तया कुटिलं विकलमिवापविलासं विजहौ निजरामगीयकम्। सालसमिवासीत्सकलमपि शरीरम्। बलादेव प्रसारयति स्म चरणौ पुरः प्रचलितुम्।

निजसखीमेवमतिशयितनिराशापरवशामवलोक्य अपरापि मनसि दूयमाना कियत्यापि कालकलया ससान्त्ववचनं कथमपि तामाश्वासयितुं कामयमाना सगभीर-स्वरं सान्त्वनपरं वचो निजगाद :—

सखि माधुरि! किमिति वृथैव कदर्थयसि चित्तमात्मीयम्। निसर्गत एव हि चपलं जीवितमिति, नलिनीदलगतजललवेन तदुपमिन्वन्ति सुमतयः। अथ च मरणं प्रकृतितया जीवितं च विकृतितया समूरीक्रियते शरीरिणाम्। तदेतदाकलय्य मैवं चिन्तया शोषय शरीरम्। चिन्तां हि चितातोऽप्यतितरामनर्थंकरीमाहुः। सर्वथा बलवती खलु भगवती नियतिः श्रूयते। तदाकलय धैर्यं समवस्थापय च आत्मानम् सकललोकपालनः करुणावरुणालयः कमलापतिरेवेदानीं नः शरणम्। तदनुग्रहेण निश्चितैव ते तातपादानां पुनःप्रकृतिप्रत्यापत्तिः। मैवमन्यथा किमपि शंकयस्व इति।

तदेतद्वचनमाकर्णयन्त्या एव माधुर्याः स्वान्तगतेन शोकाकूपारक्षोभेन समुच्छ-लितमिव जलं लोचनाभ्यामश्रुपूरः समुज्जगाम। सगद्गदस्वरं च सैवमवादीत् :—

"सखि मामैवं वादीः। शोकानुभवोऽपि किल स्वभावः शरीरिणाम्। संकट-समये च धैर्यमाकलनीयमित्यप्यवितथमेव। परं यथैव निमीलितनयनस्य निजमव-यवविशेषमपि कर्मणि नियोजयितुमसमर्थस्य श्रीमतः पितुः क्लेशमयी मूर्तिर्मे नयनयोः सरणिमवलम्बते तथैवास्तमितसमस्तवस्तुबोधाहं कमपि वैयाकुलीभावमनुभवामि चेतसि। सखि! जानासि पुनराबाल्यादेव स्नेहरसनिष्यन्देन कथं मामानन्दयत्तात इति। पंचषवर्षदेशीयायामेव मयि मे माता विहाय इहलोकं अंगीचकार नाकलोकम्। ततः प्रभृति तथाहं पालिता लालिता चास्मि पितृपादैः यथा मातुः स्मरणमपि नाक-

लयदवकाशं मम मनसि। हा! धिगिदानीं च दुःखाकुलेषु तेषु सुखेन जीवामि। किं तु खल्वितोऽप्यधिकमनुचितमाचरणीयमवशिष्यते, इति।

ततश्च कियानपि कालः साश्रुपूरप्रवाहं किमपि चेतसि चिन्तयतोरेवानयोर्व्यतीयाय।

अथ नातिचिरादेव समुपाससाद सदनम्। सदनस्य पुरस्तादासीत्कियदपि मधुरमुद्यानं यत्र माधवीप्रभृतिविविधवीरुधां समुदायः समेधयति स्म सुषमाम्। द्वारदेशे च केचन विचित्रपत्राः शोभायै प्रतिसोपानमवस्थापिताः बालपादपाः आसन्। सोपानमनु च नातिमहदङ्गनम्। यस्मिन्तदानीं कोऽपि युवा नचिरादेव समागतः करकलितचर्ममंजूषानुमेयविदूरप्रवासः सवैक्लव्यं इतस्ततो दर्शंदर्शं उद्ग्रीवः सदनान्तरवलोकयन्नवतरति स्म नयनपथम्।

तदेवं समीपमुपयाते सदने किंचिदिव समाकुंचितभ्रूयुगला विलोक्य सदनांगणस्थं युवानं साकूतं पप्रच्छ माधुरीं वयस्या कुमुदिनी :—

सखि! को नु खल्वेष युवा व्याकुलस्वान्त इव तव भवनद्वारमध्यास्ते। इतस्ततश्च तरलतारं नयनं प्रसार्य किमपि प्रतीक्षमाणेव दयनीयावस्थो विभाव्यते। अपि जानासि कोऽयमिति।

ततो माधुरी सपदि प्रत्युत्तरयितुं अशक्नुवाना "को नु खलु" इति नातिविशदमुदीर्य वामकरतलेन ललाटतटगतानलकानपसारयन्ती भग्नभ्रुकुटिका किंचिदिव विचिन्त्योवाच :—

> आ एवम्! अवगतम्। सखि एष मोहमयीपुरवास्तव्यः पितृपादपरममित्राणां अपत्यं मकरन्दः स्यात्। तत्र समवसितविद्याध्ययन एष साम्प्रतमिहैव विज्ञानविषये संशोधनकर्मकर्तुं समंग्यकार्षीदिति श्रूयते। तदेहि सत्वरमुपगच्छावः इति। वदन्ती चैवं किंचिदिव सरयं प्रसारयामास पादौ।

युवा मकरन्दस्तु सदनान्तर्निहितनयनः सचिन्तमन्तर्विचिन्तयन्नासीत्—अपि नाम इदमेव सदनमत्रभवतां दीननाथमहोदयानामिति। परमकस्मादेव परतः सुविपञ्चीपञ्चमस्वरप्रपञ्चमपि नीरसतामंचयन् कोऽपि वर्णप्रपञ्चोऽस्य कर्णकुहरमाविवेश। अथ अनवधानेन अनाकलितवचनाकूतः ससंभ्रमं वदनमावृत्य यावदवलोकयति तावदेव कापि कमनीया रमणी मूर्तिमती रतिरिव भुवमवतीर्णा विधि-

हतकस्य अकाण्डताण्डवितम् परं दीन-दीनां सादरं सजलनयनं चावलोकयन्ती जगामास्य दृशोः सरणिम्। सपदि कीलितमिव तस्यामभूदस्यनयनयुगलम्। क्षणमेनामनिमिषमवलोक्य किंचित्स्तिमित इव किमपि चेतसि चिन्तयन् विहितनतिरवोचद्विनयनिचुलितमेवं वचः:—

किमाह भवती? अनवधानेन अनधिगतार्थोऽस्मीति क्षन्तव्यं भवत्या। ममापि प्रष्टव्यमस्ति किमपि। अप्येतत्सदनमत्रभवतां श्रीमतां दीननाथमहोदयानामेव। इति वदतस्तस्याऽपि वदने समुल्ललास कोऽपि व्याकुलीभावः। स किल बाल्ये सुपरिचित आसीत्पुण्यपत्तनेन। प्रायः सकलमपि शैशवं तस्यात्रैव समवसितमासीत्। दीननाथमहोदयानां सदनमुपगतमेवैकतः श्रीमतां रमेशमहोदयानां सदनमासीत् यत्र मातुरपरिमितप्रेमास्पदं संतानं मकरन्दः शिशुतया सर्वदा सकलमपि सुखमेवाकलयन्, पितुःप्रमोदमपि परां कोटिमापादयन् सौभाग्यमयानि तानि दिनान्यहापयत्।

क्षणमेकं माधुरी स्तिमितचित्तैव मकरन्दमालुलोक। परं मुहूर्तपरिमितेऽप्यस्मिन्ननेहसि, माधुरीमकरन्दयोश्चेतसि कियन्तोऽपि विचारकल्लोलाः समुदभूवन्।

सकलमपि शैशवं स्मृतिपथमारुरोहानयोः।

ततः किंचिदिव समुदंचितमंदहासा सखीमुखमवलोक्य तमभिमुखीभूय एवमाह माधुरी:—

मकरन्द इति खलु नामधेयमायुष्मताम्। निःशंकमारोहतु भवानिमां सदनसोपानपङ्क्तिम्। इदमेवात्रभवतां दीननाथमहोदयानां सदनम्। अहं च —।

इत्यर्धोक्त एव सोल्लासं मकरन्दः समुदीरयत्:—

"अलमलं समधिगतमुत्तरतः सकलमपि। भवती च तेषामेव नंदिनी माधुरी इत्येव खलु"।

इत्युदीर्य सिष्मिये। माधुरी वचनपाटवमेतदवलोक्य नितरां मुदमुवाह मनसि। ततो माधुरी कुमुदिनी च मंदस्मितेनैव तं प्रत्युत्तरायामासतुः।

अथ प्रयाते कतिपयमुहूर्तमितेऽस्मिन् सुखमये समये मकरन्दः सादरं सगमीरस्वरं च माधुरीं विलोकयन् जगाद:—

"भवति! प्रथमतः पितृपादानवलोकयितुमभिलषामि। श्रुतमस्ति तेषां प्रकृतिप्रत्यापत्तिः सुदुर्घटैवास्तीति। सत्यं महदेव वैशसमापतितमिदमेकलायां भवत्याम्। सर्वथा कलयतु कल्याणं कमलानिलयः।" इति एवमुदीरयतश्च

तस्य सपदि सुचक्षुषी बाष्पपूरितावभूताम्, वदनमप्यधो ननाम। माधुरी तु स्मृतपितृदशाका न पारयामास किमपि विलोकयितुम्। कुमुदिनीदत्त-हस्तावलम्बा च "एतु भवान्" इत्येव कथंकथमपि जगाद।

मन्दं मन्दं कुमुदिनीमवलम्ब्य सायासं प्रतिपदन्यासं प्रस्खलन्तीं माधुरीं विलोक्य कथंकथमपि व्याकुलं मकरन्दचेतो विप्रतीपकारिणं विधातारं धिक्चकार। माधुरीं चानुगच्छन् महता वैशसभरेणावनतोत्तमाङ्ग इव मकरन्दो नातिचिरादेव उपाससाद किमपि प्रकोष्ठम्, यत्र दीननाथमहाभागो निश्चेष्ट इव विषमज्वरजर्जरो मृत्यु-मनुयन्निवासीत्। अथ प्रकोष्ठकं प्रविष्टाया एव माधुर्याः शोकातिशयवशाज्जहार चेतनां मूर्च्छा। भयविह्वला च कुमुदिनी मकरन्दमेवालुलोक। मकरन्दश्च सपदि निकषावर्तमानं नीरभाजनमादाय सुशीतलं वारि माधुरीवदने न्यषिञ्चत्। कियतापि कालेन चेतनां प्रत्यापन्ना शून्यामेव दृशं दशसु दिक्षु निक्षिपन्ती महता निश्वासेन मक-रन्दमुखमण्डल एव स्थिरीचकार निजनयननलिनं माधुरी। मकरन्दोऽपि सस्नेहं भावविह्वलया दृशा समवलोकयन् तूष्णीमेव पदसहस्रयाप्यप्रतिपाद्यमभिप्रायं प्रकटी-चकार।

ततो मकरन्दमेवावलम्बिता माधुरी मन्दं मन्दं पितृपादानुपगम्य 'हा तात' इति मंदस्वरं त्रिवारं संबोध्य दरोद्घाटितनयनपुटं, दीननाथमहाभागं, मृदुलस्वरसन्नि-वेशं वचो निजगाद– तात एते मोहमयीतः श्रीमतां रमेशमहाभागानां तनूजन्मनः समायाताः –इति वदन्ती च मकरन्दं सांगुलिनिर्देशं दर्शयामास। ततः साश्रुकलुष-लोचनं मकरन्दमुद्वीक्ष्य किमपि वक्तुमपारयत् हस्तमुत्तोलयितुमप्यसमर्थः दीन-नाथमहोदयः चक्षुषैव सस्नेहमवलोकयन् आशीराशीनुपायनीचकार। हा! धिग्वि-धातारं यदेवमनपराधिषु सरलहृदयेषु ईदृशेषु कर्दमे कोल इव निर्दयं नृत्यति प्रमत्तः। अथवा निसर्गत एव दुर्बलेषु निजाधिकारप्रदर्शने महती बलवतामभिलाषा वरीवर्तीति न वितथम्।

प्रतिकलमतिभीकरः करालः कालो व्याकुलयति स्म चित्तम्। नासीत्किल कोऽपि सुमना यो नाम लेशतोऽपि नाकलयेच्छोकमन्तः। नितरामेव स्निह्यति स्म पुनः परोपकारप्रवणेऽस्मिन् दीननाथमहोदये पौरजनः। तन्नेदमभूतपूर्वं यदि समे-षामपि मनो नैराश्यकलुषमभविष्यत्। माधुरी तु कीदृशीं दशामनुभवतीति न तिरो-हितं वाचकानाम्। मकरन्दमवलोक्य च माधुरी सावलम्बमिवात्मानमाकलयति स्म।

शोकातिशयपरवशं च चिरं मकरन्दस्य विशाले वक्षसि शिरो निवेश्य चिरं परिदेवनेन वैशसभारं लघूकरोति स्म। हा हन्त, हताः स्मो वयं, नैव पारयामः किल माधुरी कथं बभूवेति वर्णयितुमपि। यदि नाम पाषाणहृदयोऽपि कश्चन विलोकयेत्तादृशीं तां मन्ये न पारयेत्सोऽपि सन्ततमश्रुसन्तानं धारयितुम्। तस्याः कौशेयकोमलः कचकलापः परस्परमाकुलो धूमधूम्रः कामपि दशामनुबभूव। सततपरिदेवनेनोच्छूने नयने खलीने बभूवतुः। प्रत्यहमानिशावसानं सततमन्तरुदितचिन्ता, नितान्तमेव कदर्थिता च सा विविहतकेन निसर्गत एवाबला बाला माधुरी मुहुर्मुहुर्मोहमुपयान्ती पितरि स्नेहातिशयेन चिन्ताद्विगुणितेन च तेन मनस्यमान्तमिव जलायितं शोकमनवरतमक्षिभ्यामुद्वमन्ती निरवलम्बेव पितुरवलम्बमेकं मन्वाना, तमेव विनाशोन्मुखमवलोक्य कथंकथमपि जीवती पितुः समीपमुपविश्य कल्पान्तकल्पं समयमतिवाहयति स्म। मकरन्द एकल एव परं निरन्तरपरिश्रमक्लेशमगणयित्वा सततमेकतः शोकाकुलमानसां माधुरीमाश्वासयन्यथावेलं तस्याः पितुः परिचर्यायामपि साहाय्यमाचरति स्म।

बहवो जनाः साश्रुलोचनमुपगम्य माधुरीं महनीयस्य तस्याः पितुर्महिमानमसकृदुपवर्ण्य वारंवारमाश्वासयन्ति स्म। माधुरी परं मकरन्दस्यैव, मरन्दलिहानि कमलदलान्यपि धिक्कुर्वत् वचनजातं श्रावं श्रावं शोकानलशममुपलेभे मनसि। यथा किल विरलभूरुहायां भुवि घोरझंझानिलनिहता लता निकषा वर्तमानं तरुवरमेव सादरमाश्लिषति, तथैव माधुरी विपद्वात्यानिपतिता तदेकावलम्बमात्मानं मेने। अत एव किल मकरन्दमवलोक्य माधुरी सावलम्बमिवात्मानमाकलयति स्म इत्यवोचाम।

अथ कदाचिन्निपपात कृपातरलितः कटाक्षः परेशस्य। करालः कालोऽप्यनुकूलतां भेजे। सततमुत्फुल्लकमलमनोहारि माधुरीवदनमेकपदे विवर्णविकलमवलोक्य तस्याः निरन्तरानुक्रोशं वा समाकर्ण्य द्रुतचेतसो भगवतः कृपया, कर्तुमकर्तुमन्यथाकर्तुमपि समर्थस्य दैवस्यानकूल्येन वा यथानिदेशमुचितवेलमोषधीप्रदानादिना परिचरतो मकरन्दस्यानवरतपरिचर्यया वा, चिकित्सककौशल्येन वा, समेषामप्यमीषां समवायेन वा यथाकथमपि दीननाथमहोदयानां मन्दीभूतो बभूव अशक्यसमुत्सारणोऽप्येष आमयः। मन्दमन्दमुदंचित चैतन्यं पितरमवलोक्य माधुरी चिरादथ विगतवैशसभारे मनसि मुदमुवाह। मकरन्दोऽपि समाहितमना माधुरीमवलोक्य सफलप्रयत्न इव कृतकृत्यमात्मानं मेने।

गच्छता कालेन मकरन्दस्य धुरसान्निध्ये माधुरी मासद्वितयमितिचक्राम। एषु दिवसेषु अननुभूतपूर्वां कामपि माधुरीं आस्वादयामास माधुरी निजजीवने। मकरन्देन सह संलापो नाम किमप्यपूर्वं प्रमोदस्थानमस्याः। तेन सह पर्यटने परं परा काष्ठा प्रमोदस्य।

मकरन्दोऽपि न किल प्रस्तरप्रतिमः। तस्यापि मनसि मन्दं मन्दमुपचिचाय माधुरीविषयकः कोऽप्यनाकलितपूर्वो भावनावन्धः। जातुचित्संलपतोरकारणमेवान्तरा माधुरीवदने समुदीयमाना विशदा कापि मंदाक्षमधुरा कान्तिरवलम्वेऽस्य मनोदेशम्। तस्याः सहासमास्यमवलोक्य सुमसन्दोहसंपर्कमिवानुबभूव समन्तात्। किमधिकं तस्याः सर्वोऽपि व्यापारो नाम नियतं नयनपुटपेयं पीयूषमिति मेने।

कदाचिदासीन्मन्दंमन्दमुदीयमानः सुधांशुः। नीरवा च रजनी समन्तादाववार संसारम्। माधुरी तु शयनतलमलंकुर्वाणापि चिन्तया निद्रामलभमाना वातायनतः सुदूरं नयने प्रसार्य किमपि मनसि विचारयन्ती, कपोलतलं परिचुम्बता चिकुरनिचयेन वदने विलसता स्वेदबिन्दुसन्दोहेन, द्राघीयसा निश्वासेन चानुमीयमानमानसिकक्लेशा कां कामप्यनुबभूव वैयाकुलीम्। अहो बत एषु दिवसेषु, विहायसि विहरतो विहगस्येव, सानन्दं संचरन्त्या माधुर्याः कथं लेशतोऽपि नाम शोकसंस्पर्श इति समुदेयादेव जिज्ञासा वाचकानां चेतसि। परं न किलैतत्तिरोहितं केषामपि, "यदापांशुलपादेभ्यः सर्वेषामपि जन्तूनां वाञ्च्छासंततिमिक्षुभञ्जं भञ्जयतः के नाम वयमतिमानविभवस्य पुरस्तात्कालस्येति। ननु भगवदवतारोऽपि यदुनन्दनः कियन्तं कालं धरातलमलंचकार। सकलं हि जगत्कालपरवशमवलोक्यते। तत्कथं नाम नोपयातु तद्वशतां निसर्गत एव अबला बाला माधुरी। तत्रापि पुनरुच्चतममध्ययनं विधातुं केतुमालं (अमेरिका) गतस्य मकरन्दस्य मासानामष्टकं व्यतीतम्। मकरन्दो नाम नूनमवलम्बो माधुर्याः। एवमेव, विशेषतो हि क्लेशकरं भवति दुर्जनकृतान्तस्य दुराचरितम्। न किल स कारुण्यं कलयति, नापि विवेकं, न च स्नेहं केवलं तु कालवशादसहायानां शोकमवलोक्य नंदति। न जानीमः कथं वा तेषां मनसि परेषां वैशसमवलोक्य समुदेति प्रमोदः। अत्रैव निदर्शनमेष श्रेष्ठिनो रत्नलालस्य सूनुः प्रतापः। यस्य दुराचरितेनेयं बाला कालानलदह्यमानेव निरतिशयितं क्लेशमनुभवति।

विंशतिवर्षेभ्यः प्राक् कुतोऽपि प्रत्यवायवशात् विपन्नो दीननाथः पूर्वजनसंपादितं सदनं विहातुमनिच्छन्, निपतत्रणाय श्रेष्ठिनो रत्नलालस्य सकाशात् रूप्य-

काणां पंचदशसाहस्रीं ऋणराशिं जग्राह। मेने च यद् दशवर्षाभ्यन्तर एव स ऋणं प्रत्यर्पयितुं पारयेदिति। हन्त परं पारवश्यं मानवानां, यदयं मनसि किंचित्कर्तुं निश्चिनोति परं न पारयति तत्संपादयितुम्। ततः पंचषवर्षाभ्यन्तर एव माधुरीं प्रसूय दीननाथसहधर्मचारिणी रमादेवी, गृहे मांगल्यदीपमिव बालिकां मन्वाना नितान्तं मुदमुवाह मनसि। एषु संवत्सरेषु प्रतिवर्षं एकसहस्रमितं कुसीदं श्रेष्ठिने प्रत्यर्पयन्नपि मूलधनं प्रत्यर्पयितुं नैव पारयामास दीननाथः। ततो वर्षचतुष्टयान्तरं सहसा दीननाथस्य परमं विश्रम्भस्थानं, कठिने जीवितपथि विपत्तिपाते संजातेऽपि साहचर्यं विदधाना रमादेवी, विहायैकलमेनं परलोकं जगाम। एष हि कठोरतरः कुठाराघातो दीननाथं नितरामाकुलीचकार, परं पंचमवर्षे पदं निदधतीं निजतनयां नयनयोर्माधुरीमिव माधुरीं मन्वानः कथंकथमप्यात्मानं पर्यवस्थाप्य, तस्याः संगोपनमेकं जीवनकार्यमाकलयन् स्वकीयं सर्वस्वमपि तदीयलालनपालने नियोजयाञ्चकार।

गच्छता कालेन प्रतिवेशिनो रमेशमहोदयस्य मनोमोहनो माधुर्याः सहपांसुक्रीडासहचरो बालो मकरन्दः बालसुलभां कामपि प्रीतिमंकुरयामास माधुर्याश्चेतसि। गाढप्रीतिमतोश्चानयोर्लीलाभिर्दीननाथो, रमेशमहाभागश्च परमां मुदमवापतुः। कस्य वा मानवस्य मनो हृदयंगमैर्बाललीलाभिरविशदैश्च शिशूनामालापैर्न विनोदितं भवति। अत्रान्तरे कोऽप्यपरो बालः माधुरीमकरन्दयोः साहचर्यं परिचयं च अलभत। सोऽयं श्रेष्ठिनो रतनलालस्य पुत्रः प्रतापः। श्रीमत्कुलप्रसूतस्य तस्य तदनुसार्येवासीदवलेपो वेषनिवेशश्च। श्रेष्ठी रतनलालस्तु निजसौहार्देन सौजन्येन च, सर्वेष्वपि पत्तनवासिषु परमादरणीयतया स्वविषये समेषामपि सस्नेहां चित्तवृत्तिं परिकल्पयितुं शशाक। तस्य हि वचसि विद्यमानस्तादृशो नाम कोऽपि मकरन्दनिष्यन्दः, नयनयोरुद्गच्छन् कोऽपि सहजः स्नेहरसप्रसरः, मनसि समुल्लसमानः कोऽपि निरुपमो हर्षप्रकर्षः सद्य एव अवलोकयतां मनः सादरभरं नमयन्ति स्म। हन्त परं दुर्दैववशात् विधिर्न किलैकमपि पितुर्गुणं तदीये तनये प्रतापे संक्रामयाञ्चकार, प्रत्युत बहुविधदुर्गुणगणभूषणाया मातुः कदर्यां चित्तवृत्तिम्, अपरिमितमहंकारं, निरुपमां परकीयदोषनिरूपणचातुरीं च एकत्रीकृत्य निर्विरिव निरमायि तनय एषः। सत्यप्येवं, सत्कुलप्रसूततया, दीननाथश्रेष्ठिनोर्विद्यमानेन पारस्परिकस्नेहेन च माधुरीमकरन्दयोः साहचर्यं प्रतापस्य कृते सुलभमासीत्। इयानेष संक्षिप्तः पूर्वेतिहासः।

प्रकृते च गहनान्धकारायामपि विभावर्यां निद्रामलभमानायाः माधुर्याः चित्तसंक्षोभे कियताप्यंशेन महानुभावोऽयं प्रताप एव हेतुः। मृतस्य श्रेष्ठिनो रतनलालस्य-

इदानीं द्वे वर्षे व्यतीते। सकलाया अपि स्थावरजंगमस्वरूपायाः श्रियः स्वयं प्रतापो एकल एव सर्वाधिकारी। मदान्धस्य तस्य सहसा दृक्पदवीमवतीर्णं किमपि ऋणपत्रकम्, यत्र दीननाथेन गृहीतस्य ऋणस्य सहस्ताक्षरमुल्लेखः कृत आसीत्। तदवलोकयत एव प्रतापस्य चेतसि समुल्ललास कोऽपि विचारः। सपदि नयनयोः पुरतः प्रादुर्बभूव सौन्दर्यसर्वंकषायाः, स्मितमधुरायाः माधुर्याः कमनीया मूर्तिः। सद्य एव मदनपरवशचेता सर्वतः सुधांशुमधुराननपुण्डरीकमुद्वहन्तीं, शिञ्जमानमणिभूषणाम्, शिरसिकृतावगुण्ठनाम्, लज्जया परिहृतलोचनां च प्रथमे समागमे किंचिदिव चकितायाः नववध्वः सविलासमलसगमनमिव विदधतीं माधुरीं पुरः कल्पयामास मनस्तूलिकया। ततश्च ऋणप्रत्यर्पणकर्मण्यसमर्थं दीननाथमुपेत्य माधुर्याः कमलदलकोमलं पाणिमभ्यर्थयामास। महति संकटे निपतितो दीननाथश्चिरं चिन्तयामास "एकतो जीवितमिव परिरक्षणीया बाला माधुरी, परतः परंपराप्राप्तमिदं भवनम्, अनयोरन्यतरश्चास्य श्रेष्ठिनो ऋणमोचने समर्थम्, तत्कतरत्साधीयः।' इत्येवं बहुविधं चिन्तयत्येव प्रतापः स्वयमाह :—

भवन्तो हि तातस्थानीयाः। शैशवादेव चाहं परिचितोऽस्मि भवता। तन्मन्ये नेदमनुचितं स्याद्यदि भवान्माधुर्याः विवाहपरिकल्पनेन अस्मदीयकुलसंबंधं दृढं कुर्यात्। आवामपि पुनः परिचितावेवाबाल्यात्। स्मरामि खल्वद्यापि, धूलिधूसरितवदनान्यावयोः क्रीडितानि। हन्त रमणीयः किल आसीत्समयः। इत्येवमन्यच्चाभिधाय, पुनर्दर्शनं प्रतिश्रुत्य यथागतं जगाम प्रतापः।

एषु दिवसेषु मकरन्दः स्वकीयमप्रतिमं वैदुष्यमुपयोजयितुमुच्चतममध्ययनं च विधातुं केतुमालं गतस्तत्रैवास्ते। अद्यापि मासमेकमवशिष्टं शिक्षणस्य। आस्तामेतत्। न किल एष जानाति माधुर्याः मनसि समुपजातं चिन्तावर्तम्। कुलशीलसौलभ्येन, श्रियः परमोदारप्रसादेन च प्रतापमेवानुरूपं वरं मन्वानो दीननाथः तेन सह माधुर्याः विवाहमहोत्सवं निर्वर्तयितुं मनसा कांक्षते। माधुरी च पविपातनिहतेव माधवीलता, निरन्तराश्रुसन्तानेन कपोलावुद्वेजयन्ती, न स्वापं कलयति, नानन्दं विन्दते न वा चेतस्युल्लासं भजते, केवलं तु निराशापरवशा रोदिति। चिन्तयति च सततमहो निर्दयतायाः परमावधिरमीषां पुरुषहतकानां। विदेशं गतस्य मकरन्दस्य स्मृतिपटलात्किमपगता मे मूर्तिः। प्रतिमासं पत्रं प्रेषयेयमिति प्रतिश्रुत्यापि न किल तेन तथा अनुष्ठीयते। कश्चिदत्याहितम्, किंचित् उताहो न पारयति पत्रं प्रेषयितुम्। श्रूयते हि विलासमयो देशः केतुमाल इति। तत्किमयमपि तत्र विस्मृत्यास्मान्, विस्मृत्य च स्वदे-

शम्, इतस्ततः प्रविकसं संचरन्तीं गौराङ्गुललतां पाणिपंकजानेव सचूत्कारं चुम्बन् धन्यमात्मानमाकलयति। परमवत्सलश्च दीननाथः कथयति स्म—यद् वत्से, माधुरि विस्मर-मकरन्दम्। मन्ये न स पुनरितः प्रत्यावृत्तो भवेत्। एवं हि नाम विपरिणम्यते चित्तवृत्त्या। मानवमनो नाम नियतं किमपि विलक्षणं वस्तु। तन्मैवं खेदमुद्वहस्व। जीवनं हि यदि साभिलषया दृशा विलोकयामः तर्हि तदानन्दकन्दमिव मनस्युल्लासमुत्पादयति, यदि परं निराशाकलुषितया दृशा निरीक्षयामः, तर्हि तदिदमसारं क्लेशैकशैलं दुःखदावानलसंततं च गोचरीभवति। बाले तन्मैवमात्मानं निपातय दुःखगर्ते, इत्येवं गदति सोद्वेगं शिरोधुन्वानां सान्त्वयन् पुनराहस्म पिता "वत्से जानासि किल वृद्धस्य ते पितुरवस्थाम्। त्वां सुखसंगिनीमवलोक्याभिलषामि चिराय नयने निमीलयितुम्। तन्मैवं निरन्तरचिन्तया सन्तापय निजमन्तरंगम्। पुनरपि संसारे समुद्यदानन्दरसां, समर्पय दृशम्"। इत्येवं बह्वभिधाय यथाशक्ति माधुर्याः मनोवृत्तिमुल्लासयितुं प्रयतते स्म! हन्त परमवगते मकरन्दे निरवलम्बैव नु माधुरी। यत एवं दूरारूढायामपि विभावर्यां निद्रामलभमाना समुद्विग्नमनसा यापयति समयम्।

अथ चिरान्निमीलयामास लोचने माधुरी। मन्दं मन्दं निद्रया च मोहमुपजगाम। मोहगहने प्रविष्टा च सा मधुरमूर्तिना मकरन्देन सह समाश्लिष्टमिवात्मानमवलोकयामास। मन्दं स्मयमानस्य मकरन्दस्य भुजाभ्यां गाढमवगूढा यथैव सा सुखेन तस्य विशाले वक्षसि दक्षिणं कपोलतलमासज्य नयने न्यमीलयत्, तथैव सहसा कुतोऽपि महत्या वात्यया हठाद्वियोजिता हा हेति विलपन्ती कुत्राप्यविशदप्रकाशे प्रदेशे विकलमात्मानमासादयामास। समन्तान्नयनघातिनी कापि धूमधूम्रा धूलिर्वात्यया प्रससार। माधुरी च किमप्यवलोकयितुमसमर्था मकरन्दमाक्रोशयन्ती इतस्ततो बहु बभ्राम। परं नाधिजगामाभिमतं पुरुषम्। अत्रान्तरे एकतो धूलिप्रकरमाक्षिप्य करकलितसहस्रावधिकरूप्यकः प्रतापः तारस्वरेणोच्चैर्हसन्, अनिच्छन्तीमप्येनां बलाद् कठोरचेता कराभ्यामाचकर्ष। मा मेति मूर्द्धानमान्दोलयन्त्येव माधुरी मंचककोणेन शिरस्याहता निद्रां विजहौ। अहो बत एवं नाम निद्रायामपि नासीदपरः कोऽपि मकरन्दं विहाय विषयो बालायाः। एतद्धि गीयते निर्मलं प्रेम इति यन्न केवलमेकस्मिञ्जन्मनि समुपजायते परं परंपरातः प्रतिजन्मानुस्यूतं भवति।

एकदा कदाचिच्चरमाचलचूडामणीयति भगवति भास्वति गृहाद्बहिरारामे माधुर्या सह समुपविष्टो दीननाथः सहसा महता जवेन समापतन्तं प्रतापम्, विलोकया-

मास। माधुरी तु सपदि तद्दर्शनं परिहर्तुकामा सदनान्तः प्रविवेश। अथ नातिचिरादेव समीपमुपगतः प्रतापः श्रीमतो दीननाथमहोदयस्य पुरस्तात्किमपि वृत्तपत्रकं चिक्षेप। श्वासप्रकोपेन च समाध्मातहृदयः किमपि कथयितुमपारयन् केवलमिंगितेनैव पठितुं संसूचयामास। वृत्तपत्रस्य मुखपृष्ठ एव स्थूलस्थूलैः कीलकाक्षरैर्मुद्रितमासीद्-यद्, केतुमालतः प्रतिनिवर्तमानं विमानं कुतोऽपि प्रत्यवायवशात् अधः पतितम्। महती हानिः समजनि। कियन्तोऽपि जनाः प्राणानत्यजन्, कियन्तोऽपि च निर्भरमाहताः इति। तत उत्तरं निहतानामाहतानां च नामान्युदीरितान्यासन्। आहतानां नामसु मकरन्दस्यापि नामधेयमासीत्। दीननाथः क्षणं किंचिदिव स्तिमितचेता वृत्तपत्रमवलोकयितुमारेभे। अवलोक्य एव तस्य वदने महती दुःखसंवेदना समुदियाय, चिराय सदीर्घश्वासमवादीच्च "हन्त महत्कष्टम्। एवं नाम विलसितं तस्य दुर्दैवेन" इति। ततो मुहूर्तमधोवदन एव मनसि व्यचिन्तयत्—अहो यदि नाम इयं वार्ता माधुरीं प्रति स्यन्देत, तदतिकष्टतरमापद्येत। यथाकथमपि न तत्तस्याः श्रुतिपथमुपगमयितव्यम्। इत्येवमन्यच्च चिन्तयत्येव तस्मिन्, पर्यवस्थितः प्रतापः समुदैरयत्—अहो महदत्याहितम्। विहायसो यानस्य पतनान्नूनमस्थिचूर्णनिर्विशेषं शरीरं मकरन्दस्य, अथानवसितजीवनावकाशतया यदि स जीवेद्, नूनमंगविकल एवेत्यत्रनास्ति नः संदेहकणिकाऽपि। एवं यदीयं दुर्वार्ता माधुर्याः श्रुतिपथमुपगच्छेत्, तर्हि न जानीमः कां कां दशामनुभवेन्माधुरीति। मनसा विभावयितुमपि न किल पारयामः। एवं निवेदयति प्रतापे दीननाथः साश्रुनयनं वदनमुन्नमय्य सगद्गदस्वरं व्याजहार—वत्स, यथाकथमपि इमां वार्तामपह्नुत्य परिरक्षणीयं कुसुमकोमलं जीवितं माधुर्याः। न जाने कुत एवमकाण्डताण्डवितकं विदधाति विधिः। यमवलम्ब्य एषु दिवसेषु जीवितं धारयति बाला माधुरी स आशातन्तुरपि नूनं समूलमुन्मूलितो विधिहतकेन। हा धिक् सर्वथा पाषाणहृदयं विधातारम्। अथवा नैतदुचितं। प्राग्जन्मसंचितं कर्म किलैवमपरजन्मनि परिणमति प्राणिनाम्। न किल कोऽयमत्र विधेरपराधः।" इत्येवमादि विलपति दीननाथे प्रतापः साश्रुपातमवोचत् :—पितृपादाः, मैवं नाम दुःखीभवत।—ननु तनयनिर्विशेषोऽहमवलोकनीयो भवता। संसारो हि नाम नियतं कदाचिद्दुःखमालिकयालंकृतः कृतान्त इव, कदाचिच्च सुभगसुमसन्दोहभूषितो वसन्त इव खेदयति नंदयति च चित्तम्। न किलाधिकं निवेदनीयमस्ति, विदितवेदितव्यानां भवतां पुरतः इति। अथैतद्वचनमाकर्ण्य किंचिदिव समाश्वस्तो दीननाथः प्रतापस्य दक्षिणं स्कंधं करतलेन परामृश्य "जानामि वत्स जानामि। याहि पुनरागमनाय, तावदहं माधुरीं विलोकयामि" इति वदन् सदनाभ्यन्तरं ययौ।

गते दीननाथे, विजयोल्लासेन सहासवदनः प्रतापः सानन्दं माधुरीशयनागारगवाक्षं कटाक्षे निक्षिप्य अनुकूलः किल विधिरस्माकमिति चिन्तयन् यथागतं जगाम। माधुरीपाणिग्रहणसौलभ्यनिबन्धनः खल्वेष विजयोल्लासः प्रतापस्य। घोरतरेयमद्यतनी वार्ता परमानन्ददायिनी किलास्य द्विजिह्वस्य मनसि मोदमादधाति। हन्त विलोकयत तावदिमं संसृतिनियमं यदेकस्य दुःखमपरस्य परमानन्दनिदानं भवतीति।

अथ एकस्मिन्नहनि, कल्य एव, किंचिदिव अरुणिमानमुदंचयति चामीकरचक्रचारुणि भगवति विवस्वति काचन मृत्तरी (मोटार) श्रीमतो दीननाथमहोदयस्य सदनाजिरमुपाययौ। अथ कोऽपि युवा तस्मादवततार। स च मन्दं मन्दं मनसि किमपि विचिन्तयन् भवनद्वारमुपगतस्तत्र कमप्यनवलोकयन्, इतस्ततो नयने प्रसारयामास। ततः सुदूरं, आलवालवलयेषु जलं सिञ्चंतं पुरुषमेकमवलोक्य तमेवाहूय तस्मै पत्रमेकं प्रादात्, अवादीच्च भद्र पत्रमिदमप्रमादेनैव पितृपादेभ्यः प्रदेयम्। अहं तु कार्यान्तरव्यापृततया न प्रतीक्षायामुत्सहे।" इत्युक्त्वा सरभसमपचक्राम।

अपक्रान्ते तस्मिन् किमिदमिति संभ्रान्तचेता मालाकारः पुरुषः शनैः शनैः भवनमुपप्रतस्थे। तस्मिन् समये च माधुरी मुकुलितविलोचना, सुधांशुधवलमंचलं परिधाय विभावसोः कदुष्णे बालातपे समुपविष्टा मनोविनोदयति स्म। सा हि तरोर्व्यवधानेन न तस्य यूनो नयनसरणिमवततार। अथ मालाकारः सहसा मनसि किमपि समाकलय्य पुनः प्रतिनिवृत्तः, तदधिगमवृत्तान्तकथनपूर्वकं तत्पत्रं तस्यै समर्पयामास। पत्रं समर्प्य गते तस्मिन् माधुरी विषादेनेवाभिभूयमाना, यथाकथमपि सावरणं पत्रमावरणान्निष्कास्य निजनयननलिनयोरतिथीचकार। अहो बत परमकस्मादेव, सुधासारसेकमिव, घनसारलेपमिव च शरीरे समनुभवन्ती, विस्फारितविलोचना, परमानन्दसन्दोहेन सहसा मन्दस्मितमधुरमधरं, विकसितं च कोकनदच्छवि कपोलयुगलं वदने वहन्ती, दोदुल्यमानकुण्डला, पत्रगतं प्रत्येकमक्षरमक्षिभ्यां संकलयन्तीव कांकामपि दशामनुबभूव माधुरी। यः किल रात्रिन्दिवं निरन्तरचिन्ताविषयो माधुर्याः, यस्य कृते प्रलयकालकल्पान्यतिवाहितानि दिवसानि, यच्च परमानन्दकन्दोऽवलम्बो माधुर्यास्तस्य श्रीमतो मकरन्दस्य किल तत्पत्रमासीत्। मकरन्दलिखितान्यक्षराणि विलोक्यैव इयतः प्रमोदस्यावसरो बालायाः। विशेषतः पुनः पत्रेऽस्मिन् निजागमनवृत्तान्तो विनिवेदितो मकरन्देन। हा हन्त परं न किल जानाति माधुरी, पत्रस्यास्य प्राचीनतां, मध्येमार्गं

मकरन्देन समनुभूतां च महतीं विपत्तिम्। अहो नु खलु अज्ञानमपि जातुचित्प्रमोदाय भवतीति न वितथम्।

अत्रान्तरे दीननाथः शनैः शनैः कुतोऽपि प्रतिनिवृत्तः सदनाभ्यन्तरं प्रविवेश। अथ प्रविशन्तं तातमवलोक्य सहसा जवेन समुत्थाय शैशवनिर्विशेषं प्रमोदमनुभवन्ती माधुरी वृत्तान्तमिमं पित्रे निवेदयितुं सदनाभ्यन्तरमाजगाम। द्राघीयसा निश्वासेन समाध्मातहृदयां सानन्दं पत्राधिगमवृत्तान्तं कथयन्तीं, विकसितमुखीं च निजतनयामवलोक्यापि किंचिदिव विस्मयस्तिमितचेता विषण्णवदन एवावतस्थे दीननाथः। मध्य एव च माधुर्या वचनमाक्षिप्य वत्सलः पिता समुदैरयत्। "वत्से जानामि ते प्रमोदकारणम्। परं न किल तत्तथा।" इत्येतदाकर्णयन्त्येव माधुरी विगलितोत्साहा एकपदे मौनमवलम्ब्य पितरमवलोकयामास। हन्त विलोकयत जडाया अपि गिरः प्राभवम्, यया क्षणादेव, निर्भरोत्साहमनोहरा, निर्झरिणीव विहरन्ती माधुरी, स्तिमितस्य; गंभीरस्य कस्यापि महानदस्य समानतां नीता।

अथ निभृतं व्यतीयाय कियानपि कालः। ततो दीननाथः कथंकथमपि साश्रुगद्गदं वचो निजगाद—वत्से, नितरामेव विधिपरवशः किल मानवः। अत एव अनभिलषतोऽपि तस्य, कठोरतरं दुःखमनुभूतिपथं गतं भवति। मुग्धे महात्मानो हि कठोरचेतसः सुखदुःखैः प्रतिहन्यमाना अपि नोद्विजन्ते। सुखदुःखमयीषु संसारलहरीषु संतरतां पामराणां पुनरवस्था सरसि विहरतो हंसस्य तुलां वहति, यः किल लहरीभिरुच्चैर्नीचैश्च यथानुकूलमुह्यमाना गच्छन्ति। वत्से हिताय ते कथयामि, अपसारय मकरन्दं मनोमन्दिरात्। न किल पुनः स ते दर्शनपथमुपेयात्। जानासि पुनरनुचिता दुर्लभवस्त्वभिलाषेति। एवं गदति श्रीमति दीननाथे माधुरी पत्रं पुरस्कृतं पठितुमभ्यर्थितवती। ओमिति स्वीकृत्य दीननाथो यावदवलोकयति तत्पत्रं, तावद्विस्मयस्तिमितमनाः क्षणमवतस्थे, परं सविशेषं निरीक्षयन् बुबोध प्राचीनतां पत्रस्य। विषण्णं विहस्य च वाचमिमामुवाच—वत्से प्राचीनं पत्रमिदम्। न जानीमः कुत्र कां दशामनुभवति इदानीं मकरन्द इति। एवमिदं वचः श्रृण्वन्त्या एव माधुर्याः पादतलगता भूमिः सुदूरमपससारेव, शिरसि निपपात इव च शून्यमपि गगनम्। एवंभूतां माधुरीमवलोक्य, छिन्नमर्मप्रदेश इव कथंकथमपि व्याकुलो दीननाथमहोदयो मनसि व्यचिन्तयत्—हन्त निष्कपटं, निरवधिकं च किलास्याः प्रेम मकरन्दे। मकरन्दः पुनः कुत्र कीदृश इति न जाने। इयं च कुसुमकोमला बाला माधुरी निरन्तरं कियन्त-

मपि संन्तापं विन्दते दुःखदावानलतः। सर्वथा दुःखायैव किल जनुरस्याः समजनि। प्रतापस्य सहचरीभावं च न किल स्वीकर्तुमभिलषति बाला। यदि नाम वत्सला माता जीविताभविष्यदस्याः, तर्हि सा नियतं कमप्युचितं मार्गं निरदेक्ष्यत्। परं न किल तथा तदभिमतमासीद्विधेः। इत्येवं बहु विचिन्तयत एव तस्य पुरतः कुतोऽपि समागतः प्रतापोऽवतस्थे। मौनितयैव व्यतीते कियत्यपि समये पितुः पार्श्वत एव स्थितां म्लान-कमलकल्पं मुखमुद्वहन्तीं माधुरीं क्षणमेकं निजनयनाञ्चलेन संभाव्य, दीननाथ-मवलोकयन् सविनयमेवं व्याजहार प्रतापः—कुत एवमकाण्डमेव विषादमेदुरमवलोक्यते मनो भवताम्। कश्चिदत्याहितं किंचित्? आज्ञापनीय एष तनयनिर्विशेषो जनो विपदि। तनयो हि पितरं विपदः समुद्धरतीति श्रूयते। इति श्रुत्वैवं वचो दीननाथः सदीर्घं निःश्वस्य सावेगं निजगाद—वत्स कुतोऽपि प्राप्तं प्राचीनमिदं मकरंदस्य पत्रमव-लोक्य अकारणमेव मनोमोहं विन्दते माधुरी। न जाने कदा वा मकरन्दस्य पिशा-चिकातो निर्मुक्तेयं पुनरपि मानवतामवगाहेत। शतशो निरूपिताऽपि न किल विमु-ञ्चति मकरन्दचिन्तनम्। इत्येवमन्यच्च निराशापरवशतया जल्पति पितरि माधुरी शोकावेगं सोढुमशक्नुवाना चेलाञ्चलेन वदनमाच्छाद्य सपदि सदनान्तरेव प्रविवेश।

अथ कियतापि कालेन दीननाथमहोदयः स्वयं सवात्सल्यं मन्दंमन्दमुपेत्य माधुरीं करांगुलीभिर्नयनयोरश्रुजलं प्रमृज्य, विलुलितचिकुरं वदनमुन्नमय्य प्राह—वत्से दुःखं हि नाम जनिमतां परमं मित्रम्। सहासं वैशसं स्वीकृत्य हि जीवितस्य पन्थाः अतिक्रम-णीयः। बाले, नाद्यापि व्यतीतः कालः, यद्यभिलषसि जराजीर्णस्य ते पितुर्मनीषां परिपूरयितुं, तर्हि श्रीमता प्रतापेन सह निजं विवाहमहोत्सवमंगीकुरु। जानामि किल यथा, शैशवे दुष्टस्वभावो दुर्जनोचिताचरणप्रसितचेताश्चासीत् प्रताप इति। परं न किलेदानीं स तथा। असामान्यं किल सौजन्यं मया तस्य समन्वभावि इति। उक्तेऽप्येवं मौनमात्रावलम्बना माधुरी वारंवारं मत्कृतेऽपि नाम स्वीकुरु विवाह-मिममिति पित्रा प्रार्थ्यमाना, मनोनिरुद्ध्य शनैःशनैरभिदधौ—पितृपादाः यद्येवं मदीयेन विवाहेनानेन भवान् कृतकृत्यो भवति, तर्हि निःसहाया, दुर्भगा चाहं स्वी-करोमि तत्। जानामि पुनर्मनसा यन्न किल लेशतोऽपि सुखमहमश्नुयां तत इति। इति कथंकथमप्यभिधाय सपदि विकसितवदनं पितरमवलोक्य, मन्दंमन्दं पितुरालिङ्ग-नाच्चात्मानं विमोच्य माधुरी साश्रुकलुषनयनं वदनमन्यतो विधाय—अविलम्बेनैव सम्पादनीयो विवाहमहोत्सवो मदीय इति विकलस्वरमुदीरयन्ती जगाम सपदि शय-नीयमागारम्।

अथ कदाचिद्दिनद्वयावशेष आसीद्विवाहमहोत्सवः। यथाकथमपि विनोदनीयं मनो माधुर्या इति मनसा विभावयन्तीभिः वयस्याभिः परीता माधुरी दीर्घिकाया शिलावेदिकायामुपविश्य, मन्दंमन्दंमान्दोलितलतानिवहं, सायंसमयीनं समीरं निषेवते स्म। सुदूरं च चरमाचलमवलम्बमानो भानुमान्, नातितीव्रेण किरणजालेन जगदुदभासयत्। विविधवसनादिपरिवेषरमणीयासु तासु ललनासु माधुरी शोकाकुलतया विकलवदनाऽपि नितरामेव शुशुभे। निसर्गत एव रमणीयं वस्तु सर्वदैव शोभां पुष्णातीति निर्विवादं किलाभ्युपगम्यते सौन्दर्यपरिशीलनकुशलैः कविभिः। तासु सखीषु कुमुदिनी नाम परमं विश्रम्भस्थानं माधुर्याः। अथ मनोविनोदनं समयं यापयितुं उपक्रम गातुमिति तया सखीभिश्च सर्वाभिर्मुहुर्मुहुरनुबध्यमाना माधुरी चिराय, अन्याभिरपि प्रतिश्रुते गाने, मधुरस्वरसन्निवेशं गातुमुपचक्रमे—

नयने नीरचिते (ध्रु. व.)
जातं प्रिय मे
वदनं विकलं।
विफलं च मनोहृतमानम्। १।

विदधाति मुधा
विहतं विधिना
त्वयि मानदवाचमिदम्। २।

कथयेयमियं
किमहं विकला
ननु नाथ विलोकय दीनाम्। ३।

शतधा किल
याति शुचा हृदयम्
त्वयि बद्धमनोरमभावम्। ४।
न दिनं न निशा
मम कापि दशा
विदधाति सदा हृदि मोहम्। ६। नयने नीरचिते

स्वरलहरीभिः संततमिवासीदन्तरालम्। अस्तमिततदितरसमस्तवस्तुबोधं बभूव निखिलमपीन्द्रियजालमाकर्णमात्रम्। अहो गानप्रक्रिया, अहो भावोद्रेकः,

सुमनोहरः किल स्वरसन्निवेश इत्यादि चिन्तयन्तीष्वेव सखीषु, विषण्णं विहस्य माधुरी झटिति चेलांचलप्रदेशेन नयनयोः कोणं ममार्ज। गानमिदमुपश्रुत्य सर्वासामेव मनो विषादकलुषितमिवाभवत्। अस्मिन्नेव समये निष्कुटोपरक्षकः पुरुषः सरभसमुपेत्य माधुर्यं जगाद—भद्रे, स युवा समागतो, यः किल कतिपयदिवसेभ्यः प्राक् पत्रमेकं प्रादात्। माधुरी तु सपदि तदेतदाकर्ण्य समुदैरयत्—याहि, कथय तं नाहमवलोकयितुमभिलषामीति। अत्रान्तरे स युवा स्वयमेवोपागत्य प्राह—क्षन्तव्यं धार्ष्ट्यमिदं भवत्या। जानामि प्राचीनं मकरन्दस्य पत्रं समर्पयता महदपराद्धं भवत्याः इति। परमिदानीमिदं कर्णेकरोतु भवती, येन मम जीवितं लेशतोऽपि परेषां सुखसंपादनेन साफल्यं विन्देत। तद्धि प्राचीनं पत्रं यथाकथमपि भवत्या नयनयोः सरणाववतारणीयं, येन विवाहाय त्वरेत तत्रभवान् दीननाथमहोदय इति मन्वता प्रतापेन नियुक्तोऽहं तदा तथाऽन्वतिष्ठम्। स किल करालः पापी भवतीमधिगन्तुं किं किंनकरोति, प्रतिमासमत्रमादेनैव पत्रं प्रेषयतो मकरन्दस्य सर्वाण्यपि पत्राणि प्रेषालयपुरुषाद्धनबलेन तेनैव समधिगतानि। तेष्वन्यतममेवासीत्तत्पत्रं यन्मया तदानीं प्रादायि। हेतुरयं तस्य पापस्य यत् एकमपि पत्रमनासाद्य भवती "नूनमुदासीनो मकरन्दो न मां स्मरतीति समाकलय्य तद्विषयिणीं प्रीतिग्रन्थिं शिथिलीकुर्यात्"। अहो बत नैर्घृण्यम् प्रतापहतकस्य, निसर्गेणैव निष्कपटमनसो दीननाथमहोदयस्य मतिरपि किल विपरिर्वाततानेन। इत्येवं गदत एव तस्य वचनमाक्षिप्य माधुरी प्रपच्छ अहो—बहु जानासीति प्रतिभाति। महाभाग, सकृपं कथय कुत्रास्ते मकरन्दः ? अपि कुशली सः ? उत किमप्यपकृतं तस्य प्रतापेन ? सचिन्तमुत्कण्ठितयैवमनुयुक्तः स युवा प्रोवाच—भवति, विदेशात्प्रतिनिवर्तमानो मकरन्दः, कथमपि मध्येमार्गं विमानयानपतनेन निर्भरमाहतो मोहमय्यां (मुंबई) निवसति। महती किल दुरवस्था तस्य, नितरामाहतं चरणमेकमसमर्थं चलने। भवतीमवलोकयितुकामः स प्रतापेन नितरामेव भर्त्सितः "कथं नामेदानीं पङ्गुना त्वया सह माधुरी सहचरीभावमंगीकुर्यादित्यभिहितो, विषण्णचेता बलादिव तव दर्शनं परिहरन् निभृतं यापयति समयम्। नास्तीदानीमभिलाषा तस्य जीवने। किमधिकं, जीर्णशीर्णस्य तरोरुपरि यथा किल नीरसः पर्णभारः संशयितविमोको भवति, तथैवासौ इति। इदमन्तिममस्य वचनमाकर्णयितुं माधुरी पुरो नासीदेव। सा तु सपदि बहिरेत्य समीपमेव वसतां श्रीमतां कमलाक्षमहाभागानां सदनं प्रविवेश यत्र किल तदानीं दीननाथो गतो बभूव। यथाकथमप्यात्मानमवस्थापयन्ती सा पितुः पुरतो जगाम, परं तत उत्तरमात्मनः शरीरं धार-

यितुमसमर्था क्षणादेव भुवि मोहमुपगता निपपात। हा धिक्, किमिदं, कथमिदं इति संभ्रान्तचेता यावदुत्तिष्ठति दीननाथमहोदयस्तावदेव, समुपगतः सखीसमुदायः स युवा च सकलं वृत्तान्तमचकथन्। विदितवृत्तान्तो दीननाथो मनसि प्रभूततरां, निरन्तरां च शोकसन्तानिकामुवाह–हा हन्त मन्दभाग्येन मया किमिति तदानीमेव नालोचितं प्रतापस्य दौःशील्यम्। वृथैव किल कदर्थिता मृणालकोमलेयं बाला, इत्येवमादि मनसि विचिन्तयत्येव पितरि दीननाथे, विधीयमानैरुपचारैः कियताऽपि कालेन प्रकृतिं प्रत्यापन्ना माधुरी पितरमाश्लिष्य चिराय वाष्पजलं विससर्ज।

सपदि मकरन्दमवलोकयितुं माधुरी, दीननाथः कुमुदिनी चेति त्रयोऽपि मोहमयीमगमन्। माधुरी च निजमवलम्वं मकरन्दमधिजगाम।

एवमासीत्सुखमयमवसानं शोकस्य। चिराय विरराज वदने स्मितं माधुर्याः। दीननाथोऽपि कृतकृत्यमात्मानं मेने।



मातुरङ्के शयानोऽहमपृच्छं 'वद मातः
कोऽहं कुतः समायातः किमर्थञ्चेति सावदत्।
'पुत्र त्वं मम स्वप्नोऽसि हृद्गतो निर्गतस्ततः
सौभाग्यं मातृताया मे दातुं पुत्र त्वमागतः'॥

–आ. शा.



# कालो हि दुरतिक्रमः

दुर्गादत्त शास्त्री

अथ दुरतिक्रमः कालश्चपलतां दर्शयन्नलक्ष्यमाणपदचारः शनैः शनैः सान्निध्यमकरोत्। भारतीया नाजानन् यद्देहरादून विश्रामकालोऽनन्तकालविश्रामे परिणन्तुं गच्छन्नस्ति। इन्दिराया मनोऽकारणमेव व्याकुलतां प्रादर्शयत्। न साऽबोधत् यत्सप्तचत्वारिंशद्वर्षाणि पितृस्नेहपालिता लताऽन्येद्युरेव स्नेहशून्या भवितुं गच्छति। पुनः पुनः स्फुरद्दक्षिणाक्षिता भृशमभीषयत।

भौमे सायंकाले वायुयानं देहरादूनाद्दिल्लीं समागच्छत्। तद्दिने तद्ध्वनिरपि विचित्रैवासीत्। न जाने घरघरायमाणं तत्किं वदति स्म। दुर्दान्तः कालोऽपि वायुयानेन सहागच्छत्परं न कश्चिदपि बोद्धुमपारयत्। रात्रेर्भोजनादि कृत्वा शय्यामारूढो जनानाम्प्रियो जवाहरो यथापूर्वम्। कोऽजानाद् यत्परदिवसादसौ शय्या शून्या भविष्यति। पर्यङ्कतले कूर्दमानो धृष्टः कालो विविधाः क्रीडा अकरोत्।

ततश्च स्वर्गे नारदो वीणां वादयन् देवेभ्यस्समाचारमश्रावयत्—"भोः भोः देवाः। श्रृणुत श्रुणुत—अद्य हि मर्त्यलोकस्य भूभारमपहृत्य, सकले संसारे शान्तेः प्रचारं कृत्वा, मानवे मानत्रस्य घृणां विलोप्य, परमाणुविभीषिकां दूरीकृत्य, उपनिवेशवादं समूलमुत्पाट्य, जातिवादस्यान्तं विधाय, जनेभ्यः कर्मयोगस्य शिक्षां प्रदाय, पञ्चशीलं प्रचार्य, जनतंत्रस्य शोभनं दृष्टान्तं प्रस्तुत्य, धनाढ्यनिर्धनयोर्भेदमुद्भेद्य, स्वतंत्रताभोगे सर्वेषां समानाधिकारमुद्घोष्य, सकलं संसारं हस्तामलकवन्निरीक्ष्य, विश्वभ्रातृत्वभावनामुद्भाव्य, बुद्धस्य सिद्धान्तेष्वास्थां विरचय्य, महाराजहर्ष इव प्रजाकृते सर्वस्वं संत्यज्य, देवानाम्प्रिय अशोक इव लोकानाम्प्रिय इति उपाधिना विभूषितो भूत्वा कमलापतिरिव विश्ववन्द्यः कमलापतिर्जवाहरो भारतभूमिं प्रति निजकर्तव्यं समाप्यान्येद्युः स्वर्गं

समागमिष्यति। एतेन समाचारेण स्वर्गलोके स्वागतसंभारा आयोज्यन्त। परं मर्त्यलोकस्य स्थितिस्तु विचित्रैवासीत्।

तस्यां निशायां इन्दिरा उद्विग्नैवातिष्ठत्। परं प्रयतमानापि नाबोधत्कारणम्। प्रातः दैनिकनियमात् किञ्चित्पूर्वमेव प्रबुद्धो नेहरुः पृष्ठे पीडामवदत्। रात्रेर्दुस्स्वप्नैः शतगुणितचिन्ताभारा झटिति प्रबुद्धा विह्वला इन्दिरा प्राथमिकचिकित्सामारभत। परं पितुर्मुख-मण्डलं प्रतिपलं दूयमानमेवादृश्यत। अर्धहोरानन्तरमेव षड्वादन-समये श्रीनेहरुश्चेतनाशून्यतामगच्छत्। इन्दिरा द्रागेव ध्वनियंत्रेण डाक्टरानाकारयत्। धन्वन्तरिसमाः डाक्टरा विविधैरुपचारैः प्रयत-माना अपि मूर्छाभङ्गंकर्तुं नापारयन्। रक्तदानप्रसङ्गे इन्दिरा पितृ-पादाभ्यां रक्तं दातुं पलमात्रस्यापि विलम्बं नाकरोत्। परं विधेर्मनसि किञ्चिदन्यदेवासीत्। मध्याह्नकाले डाक्टराः साहसं तत्यजुः। किमा-सीत्ततः? समस्तमेव भारतं प्राकम्पत। सर्वे जना ध्वनियन्त्राणि प्रतिपलं खटखटायन्तो नेहरोः स्वास्थ्यसम्बन्धे प्रश्नान् चक्रुः। राष्ट्रपतिः श्री राधाकृष्णः, गृहमंत्री श्री गुलजारीलालनन्दा, निर्विभागमंत्री श्री लालबहादुर शास्त्री एते त्रयोऽपि महापुरुषाश्चिन्ताव्याकुलचेतसः, किंकर्त-व्यविमूढा आसन्। इन्दिरा तु दावाग्निमध्ये मृगीव भृशं दीनासीत्। द्विवादनावसरे श्री नेहरुः भारतस्याधारमूलान् प्राणानत्यजत्। एष दुस्समाचरो न केवलं भारते अपितु सकले संसारेऽग्निरिव प्रासरत्। सर्वे भारतीयाः "हा हेति" रुरुदुः। भारतीयानामश्रुपातेन सर्वतः क्लिन्ना मही प्रलयदृश्यमदर्शयत्। सर्वेषां देशानां प्रतिनिधयो झटिति-द्रुतगति विमानान्यारुह्य दिल्लीं प्रतिदुधावुः। सकलः संसारो नेहरोरभावेन विद्युत्प्रताडित इवालोक्यत।

घनान्धकारे हि प्रलीनमासीद्
विश्वं समस्तं परिपीडयमानम्।
शमोपदेशेन जवाहरेण
सुरक्षितं युद्धबिभीषिकायाः॥



# नेहरुमहोदयानामौर्ध्वदैहिकी अभीप्सा

**मधुसूदन कापडिया***

"भारतीयानामेतावत: स्नेहस्यानुरागस्य च भाजनमहं जातो यन्न सर्वात्मनापि कृता सेवा तस्याल्पांशेनापि प्रत्यर्पणं स्यात्। न खलु स्नेहसदृशस्य महार्हस्य वस्तुन: प्रत्यर्पणं संभवति। बहवो नरपुङ्गवा: प्रशस्ता: केचित् समादृता: किंतु भारतीय जनानां सर्ववर्गाणां स्नेहो मया एतावदतिमात्रमनुभूतो यदहं तद्बलात् किमपि पारवश्यं गत:। केवलं मम इयमभीप्सा यदायुश्शेषेषु वर्षेषु माऽहं भारती यानां तेषां स्नेहस्य चानर्हो भवेयम्। ममासंख्येभ्य: सुहृद्भ्य: सहकार्यकरेभ्य: चाहं महत्तरं ऋणं धारयामि। महत्सु कार्येषु वयं संभूय समुत्थायिनोऽभवाम। तद्विनाभूता विजयोल्लासा विषादाश्चास्माभि: सममनुभूता:।

सन्निष्ठया ब्रवीमि यत् केऽपि धार्मिका अंत्यसंस्कारा मम मृत्यो: पश्चात् न विधातव्या:। न श्रद्दधे कानपीदृशानाचारान्; आचाररूपेणापि तेषामनुवर्तनं मिथ्याचारो भवेदात्मपर वञ्चनार्थं चायासरूप एव स्यात्। मम प्राणेषु उत्क्रान्तेषु मम कलेवरमग्निसात्कर्तव्यमित्याकांक्षे। देशान्तरे तु वृत्ते मम देहोत्सर्गे मम शरीरस्याग्निदहनं तत्रैव विधाय भस्मानि प्रयागतीर्थे (अलाहाबादनगरे) आनेतव्यानि। अल्पं मुष्टिग्राह्यं भस्म गाङ्गयां निक्षिप्येत तदवशिष्टस्य भूयस: चाधोनिर्दिष्टरीत्या विनियोजनं स्यात्। भस्मनो गङ्गायां निक्षेपणस्य स्पृहायां न किमपि धार्मिकं प्रयोजनम्। अस्मिन् कर्मणि न मे धर्मनिबन्धनोऽभिनवेश:। बाल्यात्प्रभृति प्रयागे गङ्गा-

* एम. ए. (गुजराती); एम. ए. (संस्कृत), प्राध्यापक: एम. बी. कॉलेज अन्धेरी बम्बई।

यमुनयोरनुरक्तोऽस्मि। मम वयसः परिणत्या सार्धमेषोऽनुरागोऽपि वृद्धिमायातः। ऋतुचक्रेण सह तयोर्विविधपरिवृत्तिशीला भावाश्च मया साक्षात्कृताः। चिरयुगेषु तयोर्विलग्ना निरन्तरं प्रवहद्भिस्तज्जलौघैरभेदं गता इतिहास-पुराण-परंपरा गीत-कथाश्च मया नैकवारमनुचिन्तिताः। विशेषतो भारतस्यात्मभूता इयं भागीरथी, भारतीयानां च प्रियतमा। तां परितः राष्ट्रस्यानुवंशिक्यः स्मृतयः, तस्याभिलाषा भयानि च, तस्य विजयोल्लासनिर्भराणि गीतानि, विजयाः पराजयाश्च सुग्रथितानि।

नित्यपरिवर्तनशीला नित्यप्रस्रवन्ती चापि नित्यैकरूपा गङ्गा भारतस्य कल्पस्थायिन्याः सभ्यतायाः संस्कृतेश्च प्रतिरूपमस्ति। सा स्मारयति मामतीव प्रियस्य हिमालयस्य हिमाच्छादितानि शिखराणि गहना उपत्यकाश्च तस्याधस्तात् सुसमृद्धान् विशालान् प्रदेशांश्च यत्र मे जीवनं जीवनकर्म च प्रवृत्तम्। सा गङ्गा प्रभातकाले बालसूर्यकिरणेषु मन्दस्मितं कुर्वन्ती नृत्यन्ती च संध्याकालीनप्रतिच्छायासु श्यामा विषण्णा गहना च शिशिरे क्षीणमन्दमधुरप्रवाहा, वर्षासु च गर्जन्ती समुद्र इव विशालवक्षाः, समुद्रस्य विनाशनसामर्थ्येनापि किञ्चिदन्विता। गङ्गा भारतातीतस्य प्रतिरूपं स्मरणचिह्नं च, कालसागरमिव तत् सा महोदधिमाश्लिष्यति।

अतीतपरंपराः रूढाश्चाचारा यद्यपि मया त्यक्तप्राया, याः च शृंखलाः भारतवर्षं बध्नन्ति नियन्त्रयन्ति तस्य प्रज्ञाः विच्छिन्दन्ति तासु च बहुजनान् निगृह्णन्ति, देहस्यात्मनश्चानिर्बन्धं विकासमवरुन्धन्ति, ताः सकला भारतवर्षेण त्यक्तव्या इति यद्यपीदं सर्वमाकांक्षे तथाप्यतीततादात्म्यं सर्वथा विच्छेत्तुं नेच्छामि। सा समृद्धा परंपरा यास्माकमासीदद्यापि चास्ति तया गर्वनिर्भरो भवामि। तस्या अविच्छिन्नायाः शृंखलायाः सर्वभारतीयसाधारणमहमपि अवयवभूतोऽस्मीति ममास्ति प्रतिभानम्, या शृंखला भारतवर्षस्य स्मृतिपथमतीतस्य भूतकालस्येतिहासस्य उषःपर्यन्तं परागच्छति तां शृंखलां छेत्तुं नोत्सहे, प्रत्युत निधिमिव हृदये निदधे, तत्सकाशात्प्ररणामधिगन्तुं समीहे च।

ममेप्सायाः साक्षिरूपेण भारतवर्षस्य सांस्कृतिकपरंपरायां चरमाञ्जलिरूपेण चायं ममानुरोधः यन्मम भस्मनां मुष्टिमात्रं प्रयागक्षेत्रे भागीरथ्यां निक्षेप्तव्यं यतः भारतवर्षं सर्वतः प्रक्षालयन्तं महोदधिं प्रति तन्नीयेत। मम भस्मनां कश्चनांशः ऊर्ध्वमाकाशयानेन नीत्वा अंतरिक्षात् श्रमपरेण कृषिकजनेनाविष्ठितेषु क्षेत्रेषु विकीर्येत ततश्च भारतस्य धूलिभिः प्रदेशैश्च सह संमिश्रितो भवतु, भारतवर्षस्यापरिच्छेद्यांशत्वं च प्राप्नोतु, इति।"*

[मृत्योः दशवर्षेभ्यः पूर्वं स्वस्य मृत्योः परं किं कर्तव्यमिति सूचयत् पत्रमेकमलिख्यत। तस्मादुद्धृतोऽयमंशः।]

# धरा-वधूः

अशोक कुमार कालिया*

वसन्तः हृदयाधिराजः समायातीत्यत एषा श्रृंगारप्रियास्ति–

शिरसि दीपितकिंशुककुंकुमं
लुलितचम्पककुड्मलकुण्डलम्।
किसलयासवरञ्जितमोष्ठकं
रुचिररूपधरा हि धरावधूः ॥ १ ॥

भ्रमरकज्जलवीक्षणचञ्चलैः
नलिनपत्रशुभायतलोचनैः।
क्षिपति मद्यमियं मधुमाधवी
रुचिररूपधरा हि धरावधूः॥ २ ॥

पृथुनितम्बघनस्तनमण्डिता
सफलनामवती पृथिवी सखे।
प्रकटितः चषको नवयौवने
विवसना किमु विश्वकुमारिका ॥ ३ ॥

अये, प्रस्थितोऽप्येषः सुचिरसमागमकांक्षिणीं विहाय। मानिनी हृदयं सम्बोधयति–

किमिति बाहुलतां बहुनिन्दसि
ह्यहह वीक्ष्य मधुं गमनप्रियम्।
हृदय! गाढतमं परिरम्भणं
विनतया न तया लतया कृतम्॥ ४ ॥

---

* लक्ष्मणपुरविश्वविद्यालयस्थसंस्कृतविभागे शोधच्छात्रः १. शैवमुरः–नूत्नोऽयं प्रयोग। कामदेवोऽपि येन भस्मीकृतः तच्छिवसम्बन्धिन हृदयमित्यर्थः। अतिकठोर-हृदयमिति तात्पर्यम्।

इदानीमेषा विरहिणी सञ्जाता। धिङ् नैष्ठुर्यम्–

वारंवारं मदनरचिते तप्तनिश्श्वाससूत्रे
ओतप्रोतः स्मरणकुसुमैः जीवनाधारभूतैः
हार्दं माल्यं ग्रथितमनया, निष्ठुरं धूननेन
धूलिं किंवा विसृजति शनैस्तत्स्तनाग्रांगरागम् ॥ ५ ॥

अश्रूण्यपि विसृजति–

क्षरति लोचनवारि नवं नवं
प्रियवियोगसमुत्थितदुःखजम्
स्पृशति शैवमुरः[1] शुभसात्त्विकी
रुचिररूपधरा हि धरावधूः ॥ ६ ॥

विरहक्लेशक्लिन्नया वसन्तस्पृष्टार्करश्मिस्पर्शेन सुखमनुभवन्त्या पृथिव्या मन्ये दूत्याय सम्प्रेषितः शिशिरः। अये, ज्ञातम्, वसन्तस्यायं गूढचरः तस्मै रहसि निवेदयति–

विश्लेषं ते मरणसदृशं तं कथञ्चिद्वहन्त्या
क्लान्तावन्या तुहिनरचितं कञ्चुकं यत्पिनद्धम्।
औशीरं वा, ऋतुकुलपते! भूधरोरोजयोस्तत्
गात्रस्पर्शः शिथिलयति ते कैतवेनार्करश्मेः ॥ ७ ॥

गूढचरेणानन्दितं हृदि वसन्तं वसन्तं प्राप्य मदमदिरायां निमग्ना जाता धरावधूः।



विवाहेऽयं महादोषो वस्तुतः प्रतिभाति नः।
हृदि मातैव नारी तु, नरोऽनूढ इवेक्षते ॥

–– ल्युकास्।

(बालोपयोगिनी सरला कथा)

रामायणकथा (२)

# विश्वामित्रयज्ञरक्षा

भाईशंकर पुरोहितः

अथ दशरथस्य गृहे चत्वारः पुत्राः जाताः इति वार्ता वायुवेगेन अयोध्यायां प्रसृता। प्रजाप्रियस्य राज्ञः वंशः अविच्छिन्नः भविष्यति इति ज्ञात्वा प्रजाः अतीव अनन्दन्। राजगृहस्य बहिः पूर्णिमासमुद्रः इव उत्तरङ्गितः अभवत् जनसम्मर्दः। ये हि अन्तःप्रवेशम् अलभन्त ते चंद्रसमान् राजकुमारान् अवितृप्तैः नेत्रैः सुदीर्घम् अपश्यन्। "रूपराशिः ननु कुमारशरीरैः प्रादुर्भूतः" इति च सर्वे अवदन्।

नगरे सर्वत्र तोरणैः, पताकाभिः, दीपज्ज्वालाभिः, मङ्गलगीतैः, तूर्यघोषैः, नृत्यैः च जनाः आनन्दपूरं प्रवाहयन्ति स्म। गृहे गृहे स्वादूनि ,खाद्यानि निरमीयन्त। अभूतपूर्वम्, अश्रुतपूर्वं सर्वतः प्रसृतं च तं प्रहर्षं देवाः पुष्पवृष्टिभिः अवर्धन्त।

आनन्दसागरे स्नात इव राजा गुरुं वसिष्ठं पुरस्कृत्य सुतानां नामकरण-अन्नप्राशन-चौलादिसंस्कारानकरोत्। राम-भरत-लक्ष्मण-शत्रुघ्न-इति चतुर्णां पुत्राणां नामानि अक्रियन्त। सर्वेषु पुत्रेषु सस्नेहः अपि नृपः ज्येष्ठे कौसल्यापुत्रे रामे अधिक-स्नेहः आसीत्। चत्वारः अपि शिशवः अदन्तैः मुखैः हसन्तः, कलकलं च वदन्तः, राज-परिवारं बहु अप्रीणयन्। परस्परस्य क्रीडनकानि आच्छिद्य ते कलहेऽपि सुखमनु-भवन्ति स्म।

शनैः शनैः शुक्लपक्षचंद्र इव प्रवर्धमानेषु नृपात्मजेषु राजा तेषां विनयनाय उत्तमान् गुरून् अयोजयत्। तीव्रबुद्धीनां बालानां पाठनं नाम महान् उत्सव इवा-भवद् गुरूणाम्। स्वल्पेनैव कालेन प्राज्ञैः तैः सर्वा विद्याः अधीताः।

एवं विद्यया, विनयेन, शीलेन च पितरं, मातॄः, प्रजाः च प्रीणयन्तो राजकुमाराः यौवनस्य प्रथमं सोपानमस्पृशन्।

अथ कुशिकनन्दनः तपोमूर्तिः विश्वामित्रो दशरथं अभ्यागच्छत्। ऋषिं सत्कृत्य सबहुमानं सभां च प्रवेश्य राजा तं अञ्जलिं बद्ध्वा आगमहेतुं पप्रच्छ। राज्ञो धर्मपरायणतां प्रजासेवां च भूरि प्रशस्य कौशिकः तं स्वस्यागमनकारणं अकथयत् "मया एको महान् यज्ञः आरब्धः। अस्य समाप्तौ मारीचादयो राक्षसा विघ्नं कुर्वन्ति। एते राक्षसाः लङ्काधिपतेः दुर्मदस्य रावणस्य भृत्या भवन्ति। तपोबलात् तानहं भस्मसात् कर्तुं शक्नोमि किन्तु यज्ञे दीक्षिताय मह्यं न तद् रोचते। अतः राजन्! तव ज्येष्ठपुत्रं रामं राक्षसेभ्यो यज्ञं रक्षितुं याचे।" इति।

महर्षेः विश्वामित्रस्य याच्ञामिमां श्रुत्वा राजा तु विमूढ इव निःशब्दोऽभवत्। शनैः लब्धबुद्धिश्च न्यवेदयत्, "भगवन्! सुकुमारः युद्धाऽनभिज्ञश्च बालो रामः क्व! कुटिलमतयो रणकर्कशाश्च राक्षसाः क्व! न रामस्य तैः युद्धं घटते। यदि भवानादिशति ससैन्योऽहं भवतो यज्ञस्य रक्षायै आगच्छेयम्" इति।

विश्वामित्रः नैतदङ्गीचकार। "रामं यज्ञरक्षायै प्रेषयान्यथा निष्फलयाचनः यथागतं प्रतिनिर्वर्तिष्ये" इति च सरोषमभाषत।

अत्रान्तरे गुरुर्वसिष्ठो राजानमवोचत् "राजन्! मा भैषीः। विश्वामित्ररक्षितस्य रामस्य न कोऽपि अपकर्तुं समर्थः। रामस्य वीर्यं जानाति विश्वामित्रः। अत एव तं याचते। रामः राक्षसान् पराजित्य अधिकबलः प्रतिनिर्वर्तिष्यते। विश्वामित्रस्येच्छापूरणे रामस्य शुभमेव भविष्यति" इति।

ततः पित्राऽनुमतो रामः विश्वामित्रेण सह गच्छतीति श्रुत्वा लक्ष्मणोऽपि तमनुजगाम। विश्वामित्रेण सह गच्छन्तौ बद्धकेशौ रामलक्ष्मणावतीव सुशोभितावदृश्येताम्।

मध्येमार्गं घनावलिरिव कृष्णकाया, विकृतावयवा, भीषणेन गर्जनेन दिशः पूरयन्ती ताटकानाम्नी राक्षसी रामादीन् हन्तुमभिद्रवति स्म। स्त्रियं तां हन्तुं संकुचन्तं रामं विश्वामित्रः "अतिदुष्टाया अस्या मारणे न दोषः" इत्युवाच। गुरोः निदेशेन रामः ताम् एकेन बाणेन यमसदनं प्रेषयामास। तदनु अतिप्रसन्नो गुरुः रामाय बलातिबले विद्येऽयच्छत्। ताभ्यां विद्याभ्यां रामः क्षुधातृषयोः दुःखं नानुभवेदिति चाबोधयत्।

हिमालयस्य रमणीये प्रदेशे विश्वामित्रस्य महानाश्रम आसीत्। तत्र प्राप्तौ

रामलक्ष्मणौ आश्रमवासिभिः अत्यादरेण सत्कृतावभवताम्। ऋषिभ्यः विविधाकथाः श्रृण्वन्तौ भ्रातरौ सुखेन तत्रावसताम्।

अथ परस्मिन् दिने यज्ञकर्मणि आरब्धे महर्षिः रामलक्ष्मणौ सप्रेम एवमभाषत "वत्सौ! यज्ञे विघ्नकारिणो राक्षसाः मायाविनो भवन्ति। ते सर्वथा निष्करुणाः, नास्ति किमपि दुष्करं तेषाम्। अतः सावधानौ युवां यज्ञभूमिं परिपालयतम्" इति। गुरोराज्ञां शिरसिकृत्य धनुर्धरौ रामलक्ष्मणौ यज्ञभूमिं परितः पालयतः स्म। तदैव घर्घरघोषेण सहाकाशचारिणां राक्षसानां छायाः सञ्चरन्त्यः अदृश्यन्त। सज्जधनुषौ वीरौ यावदुपरि पश्यतः तावद्रुधिरं, मांसं, अस्थीनि च क्षिप्तानि निशाचरैः। पादाहतपन्नग इव क्रुद्धो रामः शरेणैकेन राक्षसनायकं मारीचं दश योजनानि दूरेऽक्षिपत् लक्ष्मणश्च सुबाहु जघान। मृतनायकं राक्षससैन्यं च भयात्सर्वा दिशो विद्रवति स्म।

बालावपि अबालपराक्रमौ रामलक्ष्मणौ ऋषयः प्रीत्या साधुवादैः अभ्यनन्दन्। यज्ञश्च निर्विघ्नं समाप्तोऽभवत्।

अतिप्रीतो विश्वामित्रोऽनेकाभिः आशीभिरयोजयत् दशरथसुतौ, अशिक्षयत् च अनेका अस्त्रशस्त्रविद्याः।

तपःप्राप्तं 'जृम्भकास्त्रं' इति ख्यातं सम्मोहनास्त्रं गुरुः रामायायच्छत्।

तदनु "मम मित्रस्य जनकस्य पुत्र्याः सीतायाः स्वयंवरो भवति। शिवधनुषि यो ज्यां योजयति स एव सीतां लभत इति भवति पणः जनकस्य। रूपगुणैरनुपमां सीतां बहवो राजपुत्राः कामयन्ते किन्तु न कोऽपि धनुर्भङ्गे समर्थः। अहं तत्र निमंत्रितो गच्छामि। भवति चेत्कुतूहलं धनुर्दर्शनस्यागच्छतं मया सह" इति विश्वामित्रेणोक्तौ राजकुमारौ तेन सह मिथिलां गन्तुं निर्गतौ। मध्ये मार्गस्य एकं निर्जनमरण्यमपश्यताम्। तत्र भग्नप्राय एक आश्रमोऽप्यासीत्। किमिदं स्थानम्? कस्यायमाश्रमः? कथमेवं ध्वस्तो भवत्ययम्? इत्यादि पृष्टो गुरुः तौ गौतमर्षेः तत्पत्न्या अहल्यायाश्च च वार्तामकथयत्। 'शिलामयीं स्त्रियमिमां पादेन स्पृशे"ति गुरुणोक्तो रामो यावत्तथा करोति तावच्छीला सा सचेतना सती रामपादयोः अपतत्। "इयं किल पत्युः शापात्पाषाणरूपं प्राप्ता अहल्या। भवतः पादस्पर्शेनेयं पुनः स्वीयं रूपं प्राप्नुयादिति शापावधिः निश्चितस्तेन महर्षिणा। पुनः संगच्छतामियं पत्या" इत्यभणत्कौशिकः रामलक्ष्मणौ। ततः त्रयोऽपि ते मिथिलां गन्तुं त्वरितपदैः प्रातिष्ठन्त।

★

## नूतनग्रंथपरिचयः

**अजपाविज्ञानस्य स्वरूपविमर्शः** :—लेखक श्री विद्यामार्तण्ड प्रो. पं. **माधवाचार्यः**,

प्रकाशकः :—'भारती' संस्कृतमासिक, भारती भवन, गोपालजीका रास्ता,- जयपुर (राजस्थान)।

निबन्धोऽयं लेखकमहाशयेन वाराणसेयसंस्कृतविश्वविद्यालयस्य तन्त्रसम्मेलने पठित आसीत्। स एवात्र पुस्तिकाकारेण प्रकाशितः।

अजपाविज्ञानमिदं वेदे, वेदान्ते, वैशेषिके, सांख्ये, योगे, तन्त्रे, बुद्धदर्शने च विवृतं दृश्यते। प्राधान्येन 'हंसः' इतिमन्त्रस्यैव 'अजपा' इति संज्ञा। स्वभावसिद्धोऽयं मन्त्रः श्वासप्रश्वासरूपोऽस्ति। अत इतरमन्त्रवन्न जप्यते। अनेनायं मन्त्रोऽजपासंज्ञया व्यवह्रियते।

पठितायामस्यां पुस्तिकायां लेखकस्य विशालगम्भीराध्ययनस्य परिचयो भवति।

—आ. शा.

*

# अखिलभारतीयप्राच्यसम्मेलनम्

## विविधवृत्तम्

गतवर्षे अक्टोबर्मासस्य २७, २८, २९ दिनाङ्केषु अलिघरनगरे अखिलभारतीयप्राच्यसम्मेलनं समपाद्यत। उत्तरप्रदेशीयराज्यपालैः सम्मेलनमुदघाटचत। सम्मेलनाध्यक्ष्यं डॉ. ए. एन्. उपाध्येमहाशयैर्निरौहृयत। बहवो विद्वांसः सम्मेलने सम्मिलिता आसन्। ३०० विविधविषयकपत्राणि वाचितानि चर्चितानि च। वैनोदिककार्यक्रमाङ्गत्वेन श्रीमदादिशङ्कराचार्याणां जीवनमधिकृत्य रूपकमेकं श्रीमत्या रमाचौधुरीमहाशयया स्वनटवृन्देन युक्तया अभिनीतम्। कार्यकारिण्याः समित्या अष्टादश नूतनसदस्या अभिवृताः। भारतीयविद्याभवनस्य प्रतिनिधिरूपेण एस्. ए. उपाध्यायमहाशयाः तत्रोपस्थिताः सदस्यान्यतमत्वेन अभिवृताः। अन्ये च श्रीमन्तः आर्. एन्. दाण्डेकर, एच्. डी. वेलणकर्, वि. राघवन्, के. आर्. पोतदार, जी. वी. देवस्थली, एन्. जे. शेण्डे, शान्, ए. डी. पुसालकर, पी. वी. बापट्, के. चट्टोपाध्याय—आदयः सन्ति। एतदर्थमेतानभिनन्दामः।

# आकाशवाण्यां संस्कृतपाठाः



१७-१०-६६ दिनाङ्के नभोवाणीसम्बद्धसंस्कृतमार्गदर्शनसमितेः सभा डॉ. आदित्यनाथगङ्गाझामहाशयानामाध्यक्ष्ये सम्पन्ना। तत्र 'भारतीयाकाशवाणीतः प्रतिसप्ताहं द्विः संस्कृतपाठानां प्रसारः कर्त्तव्यः, संस्कृतमाध्यमेन साप्ताहिकं समालोचनं च सम्पादनीयं' इति निर्णयः कृतः। प्रथमः संस्कृतपाठो ध्वनिमुद्रिकाद्वारा सदस्यैस्तत्र श्रुतः।

## अखिलभारतीयसंस्कृतसाहित्यसम्मेलनम्

२-१०-६६ दिनाङ्के दिल्लीनगरे अ. भा. सं. साहित्यसम्मेलनस्य स्वर्णजयन्तीमहोत्सवः सम्पन्नः। तदातन भारतराष्ट्रपतयः सर्वपल्लीराधाकृष्णमहाशयाः समुत्सवस्यारम्भमकुर्वन्। पं. पट्टाभिरामशास्त्रि–रामचन्द्रशास्त्रिप्रमुखैर्विद्वद्भिः सपूर्णकुम्भं स्वागतं राष्ट्रपतिभ्यो व्याह्रियत।

डॉ. मण्डनमिश्रमहाशयाः प्रास्ताविकभाषणमुपस्थापयन्तो महामहोपाध्यायगिरिधरशर्मचतुर्वेदि – केदारनाथशर्म – न. वि. गाडगीळ – बलवन्तरायदातारमहाशयेभ्यः स्वर्गतेभ्यः श्रद्धाञ्जलिं समार्पयन्। स्वागताध्यक्षा बटोदरनरेशाः संस्कृतस्य दीनावस्थां दूरीकर्तुं तत्प्रसाराद्युपायान् समसूचयन्। तोकियो (जापानीय) विश्वविद्यालयस्य प्राध्यापकाः डॉ. हाजिमे नकमुरामहाशयाः संस्कृतेनैव विशिष्टं भाषणमुपन्यस्तवन्तः।

डॉ. नकमुरा (जापान) पं. रामकृष्णशास्त्रि (तंजावूर) पं. चारुदेवशास्त्रि (दिल्ली) पं. विद्याधरशास्त्रि (बिकानेर्) पं. रामचन्द्रशास्त्रि (त्रिची)–इत्येतेभ्यो विशिष्टसंस्कृतव्यवसायिभ्यो विद्यावाचस्पतिबिरुदेन सह महावस्त्रं राष्ट्रपतयो व्यतरन्।

समुत्सवमुद्घाटयन्तो राष्ट्रपतयोऽवोचन् 'न केवलं मानवस्य भौतिकविकासोऽलं भवति, तस्याध्यात्मिकविकासोऽप्यावश्यकः। एतत्साधयितुं संस्कृतस्य पठनमावश्यकम्' इति। सम्मेलनस्यास्य संस्कृतविद्यापीठं 'लालबहादुरशास्त्रिकेन्द्रीयसंस्कृतविद्यापीठं' इति नामान्तरेण भारतशासनेन स्वीकृतम्।

मुम्बइब्राह्मणसभाभिनेतृभिः द्वितीयदिने रात्रौ 'मृच्छकटिकं', तृतीयदिने रात्रौ 'शाकुन्तलं' चाभिनीते। चतुर्थदिने रात्रौ डॉ. सि. डि. देशमुखमहाशयानां सभापतित्वे कविसम्मेलनं सम्पन्नम्।

आगामिनि वर्षे सम्मेलनं महाराष्ट्रप्रदेशे सम्पत्स्यत इति ज्ञायते।

## भारतीयविद्याभवने डा. नकमुरामहाशयाः

दिल्लीनगरे सम्पन्ने 'नेहरुपरिसंवादे' भागं निर्वोढुं भारतमागताः टोकियोविश्वविद्यालयस्य प्राध्यापकाः डॉ. हाजिमेनकमुरामहाशयाः ६-१०-६६ दिनाङ्के भारतीयविद्याभवनमागच्छन्। भवनीयसांस्कृतिकविभागान् दृष्ट्वा परं तोषमापन्। प्रा. सुरेशउपाध्याय-पं.आत्मारामशास्त्रिणोः साहाय्येन भवनीयसरलसंस्कृतपाठ्यपुस्तकान्यन्ववदन्। अष्टमे दिनाङ्के ते मुन्शीमहाशयैः सत्कृता अभूवन्। जापानदेशे भारतीयविद्याभवनस्य केन्द्रं स्थापयितुं ते प्रयत्नशीलाः सन्ति।

## वेदविदां सम्मानः

प्रतिवर्षं महाराष्ट्रशासनेन पञ्च वेदपण्डिताः सत्क्रियन्ते। अस्मिन् (१९६६) वर्षे अक्टोबरमासस्य २३तमे दिनाङ्के महाराष्ट्रराज्यपालैः डॉ. चेरियनमहाशयैः पञ्च वैदिकाः सम्मानिताः। ते च **श्री गणेश शिवराम ठाकर, श्री शङ्करवासुदेव नातु, श्री पुरुषोत्तम लक्ष्मण दीक्षित, श्री बापु नारायण शिवभट्ट, श्री गोविन्दभट्ट साठे**। कमलपुष्पनालिकेरफलैः साकमर्थनिधयस्तेभ्यः समर्पिताः।

## स्वर्णजयन्ती

श्रीवेलजीलखमसीनपूहायस्कूल – श्रीप्रेमजीदेवजीकन्याविद्यालययोः स्वर्णजयन्ती सम्मानिता। तस्मिन् प्रसङ्गे भासमहाकवेः जीवनपरिचयोत्सवः सम्पादितः। अत्र अन्तरशालीयवक्तृत्वस्पर्धा समायोजिता आसीत्। महोत्सवेऽस्मिन् **श्री रामप्रसादबक्षी श्री भाईशङ्करपुरोहित– श्री विमलशङ्करशास्त्रिमहाशयाः** सभाया अध्यक्षनिर्णायकपदान्यलमकुर्वन्। स्पर्धायै त्रयो विषयाः स्थापिता आसन्–(१) संस्कृतं नाम दैवी वाक् (२) भारतवर्षस्य स्वातन्त्र्यम् (३) मम प्रियतमो राष्ट्रनेता–इति। अत्रयो विद्यार्थिनः तिस्रो विद्यार्थिन्यश्च विजयपारितोषिकमलभन्त। (१) **श्री अविनाश पराञ्जपे (२) श्री अनिलदरजी (३) श्री मैशेरी**–(१) कु. सुलभा

घोरपुरे (२) कु. चन्द्रिकामाणेक (३) कु. जया छोडा। महोत्सवोऽयं श्री लक्ष्मीदास भ. गोकाणिमहाशयेन समायोजित आसीत्।


## दिल्लीनगरे श्रीमज्जगद्गुरुशङ्कराचार्याः

अशेषभारतयात्रायां प्रवृत्ताः श्री शृङ्गेरिपीठाधिपतयः श्रीमज्जगद्गुरुशङ्कराचार्याः दिल्लीनगरे महता वैभवेन राजकीयपुरुषैः प्रमुखपौरैश्च सस्वागतं सत्कृताः। राष्ट्रपतयो राधाकृष्णमहाशयाः, प्रधानमन्त्रिणी इन्दिरामहोदया, अन्ये च शासनानुबन्धिनो जगद्गुरुन् अभ्यनन्दन्। तेभ्यः सोचितोपदेशानि आशीर्वचनानि च अलभन्त।

जगद्गुरवो राष्ट्रसुखार्थं महारुद्रयागञ्च राजधान्यां निरवर्तयन्।

# शोकसभा

प्राध्यापकानां श्रीहरिदामोदरवेलणकराणां निधनेन सञ्जातं प्रभूतं शोकं प्रदर्शयितुं भारतीयविद्याभवन–एसियाटिक्सोसायिटि–संस्कृतसेमिनार्-विल्सन्कॉलेज-मुम्बईमराठीग्रन्थसंङ्ग्रहालय-मुम्बईविद्वत्परिषत्-इतिसंस्थाभिर्मिलित्वा भारतीयविद्याभवनस्य गीतामन्दिरे मुम्बईविश्वविद्यालस्योपकुलपतीनां श्रीगजेन्द्रगडकरमहोदयानामाध्यक्ष्ये सभैका समायोजितासीत्। तत्रानेके वेलणकराणां विद्वत्त्वं, सौजन्यं, सहृदयत्वञ्चाधिकृत्य भाषितवन्तः। एकः शोकप्रस्तावोऽपि समया पारितः-इयं सभा प्रा. वेलणकराणां निधनेन गम्भीरं दुःखमनुभवन्ती शोकप्रस्तावमुपस्थापयति।

प्रा. वेलणकराः संस्कृतस्य प्राकृतस्य च मर्मज्ञाः पण्डिता आसन्। भारतीयविद्याक्षेत्रे तैः सुबहु सम्पादितम्। ऋग्वेदस्तु तेषां विशेषप्रेमास्पदम्। १९३५ तमे क्रैस्तवर्ष एव ऋग्वेदविषयकस्तेषां प्रथमो लेखः प्रकाशं गतः। तदनु निरन्तरं ससहनं तद्विषये ते निरता आसन्। ऋग्वेदस्य सप्तममण्डलं तैरनूदितं भारतीयविद्याभवनेन प्रकाशितं, द्वितीयं तु मुम्बईविश्वविद्यालयेन। कृतिद्वयमिदं तेषां पाण्डित्यस्य साक्षिभूतं तिष्ठति।

विल्सन्महाविद्यालये ते पञ्चत्रिंशद्वर्षेषु संस्कृतप्राध्यापका अभूवन्। तदनन्तरं दशवर्षेषु भारतीयविद्याभवनस्य स्नातकोत्तराध्ययनविभागे कार्यमकुर्वन्। तत्पश्चात् मुम्बईविश्वविद्यालयस्य नूतनतया स्थापिते संस्कृतविभागे प्राध्यापकपदं, विभागाध्यक्ष्यञ्चालमकुर्वन्।

वेलणकरमहाभागा अनेकाभिर्विद्यासांस्कृतिकसंस्थाभिः सह सम्बद्धा आसन्। तेषां मरणेनैताः संस्थाः प्रामाणिकेन मित्रेण, विद्वत्प्रपञ्चश्च महीयसा विदुषा च विरहिता अभूवन्।

# व्यासजयन्ती

प्रतिवर्षमिवास्मिन्नपि वत्सरे गुरुपूर्णिमायां महर्षेर्व्यासस्य जयन्ती बहुषु स्थलेषु समभूत्। तदितिवृत्तमित्थं संक्षेपतः —

**सागरः**—सागरविश्वविद्यालये संस्कृतपरिषदा व्यासजयन्त्युत्सवः समपाद्यत। अत्र विश्वविद्यालयस्योपकुलपतयः **श्रीगणेशप्रसादभट्टाः** सभाध्यक्षतामवहन्। प्रा. डॉ. **विश्वनाथभट्टाचार्याः** व्यासविषये भाषणमकुर्वन्। अन्ये च भाषणकर्तारो विद्वांस :— श्री योगेश्वरपाण्डेयः, डॉ. श्रीमती वनमाला भवालकरदेवी, डॉ. श्री रामजी उपाध्यायः शोधच्छात्रः श्री गौतमप्रसादमिश्रः। परिषन्मन्त्रिभिः **डा. श्री विश्वनाथभट्टाचार्यैः** धन्यवादा व्यतीर्यन्त।

**कोल्लकोट्**:—केन्द्रप्रचारकाः श्री के. **शङ्कर मेननमहाशया** जयन्त्युत्सवेऽत्राध्यक्षा आसन्। भक्तकविश्री **पि. कुञ्जरामन्** महाभागा भाषणमकुर्वन्।

**हमीरपुर**:—**स्वामिब्रह्मानन्दपादानाम्** आध्यक्ष्ये ब्रह्मानन्दविद्यालयस्य प्राङ्गणे महती जयन्तीसभा समायोजितासीत्।

**तिल्लैस्तान**:—अस्मिन् केन्द्रे श्रीमतां **श्रीनिवास ऐयर्** महाशयानां आध्यक्ष्ये जयन्त्युत्सवः **श्री तिरुमलाचार्याशिरोमणिभिः** व्यवस्थापितः।

**अलीगढ**:—श्रीकृष्णविद्यालये आचार्य**रवीन्द्रचन्द्रकुलश्रेष्ठानां** सभापतित्वे जयन्तीसभा सम्पादिता। शाखामन्त्रिभिः **श्रीआनन्दवल्लभशास्त्रिभिः** सारयुतं भाषणमक्रियत।

**प्रभासपाठण**:—केन्द्राध्यक्षैः **श्रीघनश्याम**महाशयैः श्रीसत्यनारामयणपाठशालायां जयन्त्युत्सवः समायोजितः।

**बांदा**:—श्री रामलीलासंस्कृतविद्यालये **श्रीरामचन्द्रशास्त्रिणां** समाध्यक्षत्वे प्रधानाचार्यैः **श्री राममनोहरमिश्रैः** जयन्ती समपाद्यत।

**इचलकरंजी**:—इचलकरंजीहायस्कूलक्रीडाङ्गणे जयन्त्युत्सवस्यायोजनमभूत्। **डॉ. रा. शि. कुलकर्णी** महाशया अध्यक्षा आसन्। अध्यापकैर्विद्यार्थिभिश्च भाषणान्यक्रियन्त।

**झांसी** :—श्रीबालमण्डलसंस्कृतविद्यालये, श्रीयोगाश्रमे, तालबहटग्रामे च उत्सवो महता सम्भ्रमेण सम्पन्नः। तत्र पण्डितप्रवराः **श्रीपशुपतिनाथशास्त्रिणः** साभापत्यं निरवहन्। छात्रैश्च सोत्साहं व्यासपूजाभाषणादिकार्यक्रमः सम्पादितः।

**महम्मदपुरं** :—शासकीयमाध्यमिकविद्यालये संस्कृतविश्वपरिषदस्तत्त्वावधाने जयन्ती संयोजिता। प्रधानाचार्याः **श्री जामगांवकर**महाशया आध्यक्ष्यमलङ्कृतवन्तः। केन्द्रव्यवस्थापकाः **श्री शिवशङ्करत्रिपाठिनोऽपि** सारोपेतं व्याख्यानमकुर्वन्।

**अम्बाला छावनी** (पञ्जाब) :—पञ्जाबप्रदेशसंस्कृतविश्वपरिषदा उत्सवो व्यवस्थापितः। श्रीमन्तो **यशमहाशयाः** (M.L.A.) आध्यक्ष्यं निर्वहन्तः संस्कृतस्य महत्त्वं प्रत्यपादयन्। डॉ. **डि. एन्. शुक्लमहाशयाः**, **श्रीकालिरामशास्त्रिणः** (परिषमन्त्री) भाषितवन्तः। सीतापुरं :—खीरीलखीमपुरस्थशाखाकेन्द्रे **श्री शम्भुदयालुशास्त्रिणा**माध्यक्ष्ये जयन्ती सम्मानिता। पं. **श्रीदेवीप्रसादशर्मणां, श्री रामगुलामशास्त्रिणां** च भाषणेऽभूताम्।

**चिक्कमगळूरु** :—न्यायमूर्तिश्रीसीरामय्यमहाशयानामध्यक्षत्वे जयन्त्युत्सवः केन्द्रव्यवस्थापकैः **श्रीदयानन्दभट्ट**महाशयैः समायोजितः। संस्कृतप्राध्यापकैः **श्री रामचन्द्रशास्त्रिभिः** व्याख्यानमक्रियत।

**चांपात** :—श्रीसनातनधर्मसमाजसंस्कृतपाठशालायां जयन्ती सम्मानिता। तत्र **श्री रामेश्वरप्रसादअवस्थि**महाशया अध्यक्षा अभूवन्। विदुषां भाषणान्यासन्।

**नयाघर** :—संस्कृतविश्वपरिषदाश्रयेण जयन्ती सम्मनिता। तत्र **पं. श्री नरसिंह महापात्रा** अध्यक्षतामवहन्।

**वर्धमान** :—**श्री रामविलास विद्यालङ्कार** महोदयानां साभापत्ये श्री लक्ष्मीशरणस्मृतिभवने जयन्तीसभा समायोजिता। अत्र **श्रीश्रीकान्तशास्त्रि–श्री उमेशचन्द्रशास्त्रि–**सभापतीनां भाषणान्यभूवन्।

**रायगढ** :—**श्री वि. एन्. राजगोपाल**महोदयानामाध्यक्ष्ये जयन्त्युत्सवः सम्पादितः। संस्कृतविश्वपरिषदध्यक्षाः **श्री मुकुटधरपाण्डेय** महाशयाः, डॉ. **गोविन्दप्रसादशर्माणः, श्री कृष्णमिश्राः, श्री ईश्वरशरणजीपण्डेयाः, श्री शरदचन्द्रगुप्ता**श्चात्र वक्तार आसन्।

**रानीखेत** :—**श्री धनीलालशाह**महाशया अत्रत्यायां जयन्तीसभायां अध्यक्षा आसन्। शाखामन्त्रिणः **श्री क्षेमानन्दशास्त्रिणः**, शाखोपाध्यक्षाः **श्रीयानदेवसती** महाशयाः, छात्राश्च भाषणान्यकुर्वन्।

चित्रकूट :—ऋषिकुमारसंस्कृतादर्शमहाविद्यालयाध्यक्षाणां श्री मत्स्वामिशिवानन्दमहोदयानां सभापतित्वे जयन्ती समपाद्यत। तत्र पं. श्री परमानन्दमहोदयानां, पं. श्री मथुराप्रसादत्रिपाठिमहाशयानां च व्याख्यानेऽभूताम्।

मथुरा :—श्री द्वारकेशसंस्कृतमहाविद्यालये जयन्त्युत्सवे श्री राधेश्यामद्विवेदिनः सभापतय आसन्। अन्यैरपि विद्वद्वरेण्यैः, छात्रैश्च भागो गृहीतः।

होळेनरसीपुरं :—श्री शङ्करमठे जयन्ती सम्मानिता। पं. श्रीलक्ष्मीनरसिंहशास्त्रिभिर्भाषणमक्रियत।

सूरत :—श्रीसूर्यपुरसंस्कृतपाठशालायां जयन्तीमहोत्सवः समाचरितः। श्री नर्मदाशङ्करशास्त्रिमहोदया आध्यक्ष्यं निरवहन्।

राजकोट :—सिन्धीहाईस्कूलकक्ष्यायां जयन्ती सम्मानिता। शालाप्रधानाचार्याः श्री प्रभुदासकुन्दाणीमहाशया गुरुपूर्णिमाया महत्त्वमुपर्वणितवन्तः। कैश्चिदध्यापकैश्च भाषणान्यक्रियन्त।

## वाल्मीकिजयन्ती

प्रतिवर्षमिवास्मिन्वर्षेऽपि बहुषु स्थलेषु चैत्रशुक्लनवम्यां आदिकवेर्वाल्मीकेर्जयन्ती सम्मानिता।

तदितिवृत्तमत्र संगृह्यते संक्षेपेण :—

अलीगढ :—अलीगढस्थसंस्कृतविश्वपरिषत्संचालिते श्रीकृष्णसंस्कृतविद्यालये जयन्त्युत्सवः श्रीमतां कोमलप्रसादशास्त्रिणामाध्यक्ष्ये सम्पादि। तत्र रामायणमधिकृत्यानेके संख्यावन्तो भाषणान्यकुर्वन्। तत्रैते महाशयाः समुपस्थिता आसन् :—आचार्य रवीन्द्रचन्द्रकुलश्रेष्ठः (प्रधानः), पं. आनन्दवल्लभशास्त्री (मन्त्री), पं. काशीप्रसादः, पं. सत्यप्रकाशशर्मा, श्री मानसिंहजी, श्री पुरुषोत्तमशर्मा, श्रीमती विमला देवी, श्री आनन्दस्वरूपः।

मदुरै :—वैदिकसंवर्धनसभया जयन्ती सम्मानिता। तत्रैते महाभागा अवर्तन्त :—विप्रबन्धुः श्री पद्मनाभ ऐयर् (अध्यक्षः), पण्डितरत्नं श्री गोविन्द ऐयंगार, श्री पि. के. एन्. राममूर्तिशर्मा।

संस्कृतनिलयेऽपि उत्सवोऽयमायोजितः। तत्र श्री सुखब्रह्मन् इत्येतैराध्यक्ष्यमङ्गीकृतमासीत्। श्री पि. के. एन्. राममूर्तिशर्मभिर्धन्यवादाः प्रयुक्ताः।

**नासिक** :—श्री स्वामिनारायणसंस्कृतपाठशालायां जयन्ती रामायणपाठादिना सह सम्पादिता। प्रधानाध्यापकैः **श्री रामप्रसादशास्त्रिभिः** भाषणमक्रियत।



## कालिदासजयन्ती

**कोचिन्** :—रत्नहिन्दीविद्यालये महता समारम्भेण सरस्वतीपूजया सह कालिदास-जयन्ती समाचरिता। तत्र पं. **श्री टि. आर्. सुब्रह्मण्य अय्यर्**महोदयाः साभापत्य-मलमकुर्वन्। मन्त्रिणः **श्री नीलकण्ठशास्त्रिणो**ऽतिथिभ्यः स्वागतं व्याहरन्। कुमारी-मुत्तुलक्ष्या श्यामलादण्डकं गीतम्।

**नरसापुरं** :—अत्र गीतासदने **श्री रामचन्द्रशर्मणा**माध्यक्ष्ये जयन्ती सम्पन्ना। **श्री लक्ष्मीनारायणशास्त्रिणः** कालिदासविषये भाषणमकुर्वन्। अन्ते **श्री रघुराम-शर्मणः** कृतज्ञतामाविरकुर्वन्।

**मिदनापुर** :—श्री गोविन्दनगरसंस्कृतमहाविद्यालये **श्री षोडशीपदानामाध्यक्ष्ये** जयन्ती सममान्यत। श्री भुवनेशीपद—श्री श्यामापद—श्री आशुतोषचन्द्रमहाभागैर-भाष्यत।

**कानपुरं** :—कानपुरस्थामरभारतीपरिषदा श्री विद्याविनोदादर्शसंस्कृतमहाविद्या-लयस्य प्राङ्गणे जयन्त्युत्सवः समायोजितः। साभाध्यक्ष्यं **श्री विनोदमिश्रशास्त्रिभिः** समलमक्रियत। तत्र श्रीब्रह्ममूर्तित्रिपाठि—मथुराप्रसादपाण्डेय-कन्हैयलाल अवस्थी-राजकिशोरश्रीवास्तव-सुदामाप्रसादअवस्थीमहाशया भाषितवन्तः।

**चिक्कमगळूरु** :—श्री रङ्गण्णधर्मशालायां **श्री दयानन्दभट्टैः** जयन्ती समायो-जिता। तत्र **श्री टि. सीतारामय्याः** अध्यक्षा आसन्। **श्री पि. वेङ्कटाचलअवधानिभिः** प्रवचनमक्रियत।

**चित्रकूट** :—श्री ऋषिकुमारसंस्कृतादर्शमहाविद्यालयाध्यक्षाणां **श्री मत्स्वामि-शिवानन्दमहाशयानां** साभापत्ये जयन्ती सम्पादिता।



# तिरुज्ञानसम्बन्धर्

illustrated by NarayanV.Rao



...वभक्तिसम्पन्नाभ्यां ब्राह्मणपितृभ्यां द्रविड-
...कवि-साधुः सम्बन्धर् सिर्कालीप्रदेशे सप्तमे
क्रैस्तशतकेऽजायत ।





इतस्ततो धावन्तं क्रन्दन्तं चामुं शिशुं दृष्ट्वा
भगवती पार्वती तं स्तन्यमपाययत् ।

"केन दत्तं क्षीरं ?" इति पृष्टः सोऽगायत् "स
देवो मेऽदात् क्षीरं यो धत्ते कर्णकुण्डलम्" इति ।

स्थानीयदेवालये स बहूनि गीतान्यगायत् ।



इदानीं प्रख्यातः सम्बन्धर् शैवतीर्थानि
द्रविडदेशवर्तीनि समगच्छत्।



चिदम्बरक्षेत्रे नटराजस्य पुरस्तात् सोऽगायत्



सप्तमे वयसि तस्योपनयनसंस्कारः सम्पन्नः।



सोऽन्यं शैवसन्तं सिर्कालीक्षेत्रेऽपश्यत्।



दिव्यशिशुः सम्बन्धर् शिवस्तुत्या चोलभूपसुतां
असाध्यरोगान्मुक्तामकरोत्।



शैवसाधोर्नीलनककराख्यस्य तत्कृत-
गीतानि वीणायां गातुमुपाकरोत्।



सर्पदंशेन मृतं वणिजं पुनरुदजीवयत्।



भगवान् शिवः स्वगणद्वारा बहुधनं तस्मै प्रदत्तवान् येन तत्पिता यज्ञमेकं समपादयत्।



सम्बन्धर् अप्पार् च स्तोत्रैः वेदारण्यमन्दिरस्य द्वारं समुदघाटयताम्।



दुर्भिक्षपीडितेभ्यो भगवत्प्राप्तं धनं प्रादात्।



चोलदेशे शैवमतस्य प्रचारमकरोत्। तदनुयायिनां संख्या समवर्धत।



शैवमतस्य पुनरुद्धारमभिलषन्ती पाण्ड्यमहिषी तं तत्रामन्त्रयितुमैच्छत्



यतः पाण्ड्यराज्ये जैनमतस्य प्राबल्यमासीत् अप्पार् तं जागरूकतया वर्तितुमुपादिशत्।



पाण्ड्यराज्ञी सोत्सवं तं प्रत्युदगच्छत्।



सम्बन्धर्महाशयस्य समितिः पाण्ड्यभूपमुपागच्छत् यस्तु धर्मेण जैन आसीत्।



तस्य वासगृहमकस्मात् अग्निसादभूत्।



अकस्मात् पाण्ड्यराजस्य समग्रं शरीरं तापयुक्तमभूत्।



राज्ञा प्रार्थितः स तं तापमुक्तमकरोत्।



सम्पन्ने वादे सम्बन्धर्महाशयस्य शैवग्रन्था अग्निपरीक्षायामपरिक्षता आसन्, किन्तु अन्येषां ग्रन्था दग्धा अभूवन्।



जलपरीक्षायामपि ग्रन्थाः सुरक्षिताः स्थिताः। एतद्दृष्ट्वा पाण्ड्यभूपोऽपि शैवमतमङ्गीचकार।



बौद्धमतमपि वादैरखण्डयत्।



एकदा सः कर्णहीनया तरण्या नदीमुदतरत्।



एकदा अप्पार्साधुः सम्बन्धर्महाशयस्य शिबिकामवहत् यत्तु सम्बन्धर्साधोरविदितमासीत्।



अन्नामलैक्षेत्रे वन्ध्यां तालवृक्षं फलपूर्णमकरोत्।

भस्मीभूतां काञ्चन कन्यकां पुनरुदजीवयत्
किन्तु तया सह विवाहं नैच्छत्।

यथाविधि कन्यान्तरं व्यवहत्।

तस्मिन्नेव मण्डपे महदेकं ज्योतिः प्रादुरभूत् यच्च सर्वं भगवति न्यमज्जयत्।



# भारतीय विद्या भवनस्य
# त्रिंशत्तमः स्थापनामहोत्सवः

**महोत्सवारंभः ख्रि. १७–१२–६७**
**महोत्सवसमाप्तिः ख्रि. २– १ –६८**

महोत्सवदिनेष्वमूषु विविधानि व्याख्यानानि, पदवीदान-समारंभः, भूतपूर्वराष्ट्रपति श्री सर्वपल्लीराधाकृष्णमहोदयेभ्यः 'ब्रह्मविद्याभास्करः इति सम्मानोपाधिवितरणं च भविष्यन्ति ।

श्रीमुन्शीमहाशयानां ८१ तमं जन्मदिनञ्चाश्रित्य तै रचितस्य पृथ्वीवल्लभाख्यस्योपन्यासस्य संस्कृतरूपान्तरं पृथिवीवल्लभमिति चाभिनेष्यते ।

एतदनुबन्धेन त्रिशल्लक्षात्मकस्य धनराशेः संचयश्च चिकीर्षितः येन वर्तमानानां वर्तिष्यमाणानां च भवनप्रवृत्तीनां विकासः संपादयिष्यते ।



## शास्त्रीय संस्कृतपरीक्षाणां कृते आवेदनपत्रप्रेषणसमयः

भारतीयविद्याभवनसंचालितानां विविधानां शास्त्रीय-परीक्षाणां १९६८ वर्षे संपत्स्यमानानां कृते आवेदनपत्राणि कार्यालयं १५ दिसंबरपर्यन्तं प्रेषणीयानि। तदनु मासावधि ५० पणानधिकान्दत्वा प्रेषणीयानि भवेयुः।

आवेदनपत्राणां प्राप्तिः केन्द्रेभ्यः अधोनिर्दिष्टाद्वा कर्तव्या।

**परीक्षासंपादकः**

शास्त्रीय परीक्षा विभाग,
भारतीय विद्या भवन, बंबई ७

